# Grammatical Analysis of Bhagavad Gita

## Chapters 1 to 6

**Editor : Medhā Michika**

**E-Published by:**

**Arsha Avinash Foundation**
**104 Third Street, Tatabad, Coimbatore 641012, India**
**Phone: + 91 9487373635**
**E mail: arshaavinash.in@gmail.com**
**www.arshaavinash.in**

ओम्

श्रीगुरुभ्यो नमः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।

प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि ।

विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥

Today is विजयदशमी, a very auspicious day to start study.

I shall commence this website "Grammatical analysis of Bhagavad-Gītā", for the benefit of the students of Sanskrit, especially in my Sanskrit class.

The each śloka is parsed in the manner describe in the legend.

Please not that in this website, the focus is on grammar, not on English translation or interpretation. For such purpose, please refer to Bhagavad-Gītā Home Study Course, in which you can get the proper teaching with word-to-word translation, running translation, and explanations in detail.

## Legend

In this website each śloka is explained in the following format.

**[The first section in devanagari in bold face]**

Original śloka

**[The second section in Roman alphabet with diacritic marks]**

Transliteration of the original śloka

**[The third section with numbers on the right shoulder]**

पदच्छेदः (sandhi is taken away) with विभक्ति & number

For nouns, first digit represents the case (1 to 7) and the second digit represents the number (1 to 3, representing singular, dual, and plural, respectively).

For verbs, first digit represents the person (III to I, the third person, second person, first person, respectively). The second digit represents the number (1to 3).

**[The forth section with bullet point]**

Each word of the śloka is parsed in the order of appearance. The word is parsed in the following format.

For nouns:

- The word without sandhi **[**transliteration of the word**] =** meaning in English **=** प्रातिपदिकम् (nominal base) **(**gender, m=masculine, f=feminine, n=neuter**) +** the meaning of the case, the case (1 to 7)/number (1 to 3)

For verbs:

- The word without sandhi **[**transliteration of the word**] =** meaning in English **=** धातुः (root) **(**conjugation, 1 to 10/pada, P=परस्मैपदी, A=आत्मनेपदी, U=उभयपदी**)** meaning of the धातुः + लकारः (tense or mood)/voice (कर्तरि=active, कर्मणि=passive or भावे=meaning of the root itself)/person (III to I)/number (1 to 3)

When further break down is possible, that is written under white bullet.

**[The fifth section]**

अन्वयः (re-arrangement of the words) is attempted.

The main sentence is stated first. Then subordinate sentences or descriptive words are laid.

# अथ प्रथमोऽध्यायः।

## धृतराष्ट्र उवाच।

## धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।

## मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय॥ १-१॥

dhṛtarāṣṭra uvāca|

dharmakṣetre kurukṣetre samavetā yuyutsavaḥ|

māmakāḥ pāṇḍavāścaiva kimakurvata sañjaya|| 1-1||

धृतराष्ट्रः $^{1/1}$ उवाच $^{III/1}$ ।

धर्मक्षेत्रे $^{7/1}$ कुरुक्षेत्रे $^{7/1}$ समवेताः $^{1/3}$ युयुत्सवः $^{1/3}$ ।

मामकाः $^{1/3}$ पाण्डवाः $^{1/3}$ च $^{0}$ एव $^{0}$ किम् $^{2/1}$ अकुर्वत $^{III/3}$ सञ्जय $^{8/1}$ ॥ १-१॥

- धृतराष्ट्रः [dhṛtarāṣṭraḥ] = Dhṛtarāṣṭra = धृतराष्ट्र (m.) + कर्तरि 1/1
- उवाच [uvāca] = asked = वच् (2P) to say + लिट्/कर्तरि/III/1

- धर्मक्षेत्रे [dharmakṣetre] = the land of dharma = धर्मक्षेत्र (n.) + adj. to कुरुक्षेत्रे 7/1
    - धर्मस्य क्षेत्रं धर्मक्षेत्रम् । 6T
- कुरुक्षेत्रे [kurukṣetre] = in Kurukṣetra = कुरुक्षेत्र (n.) + अधिकरणे to समवेताः 7/1
    - कुरूणां क्षेत्रं धर्मक्षेत्रम् । 6T
- समवेताः [samavetāḥ] = assembled = समवेत (m.) + adj. to मामकाः and पाण्डवाः 1/3
    - सम् + अव + इण् to assemble + क्त (…ed)
- युयुत्सवः [yuyutsavaḥ] = desiring to fight = युयुत्सु (m.) + adj. to मामकाः and पाण्डवाः 1/3
    - योद्धुम् इच्छुः युयुत्सुः ते । युध् (to fight) + सन् (to desire to …) + उ (agent)
- मामकाः [māmakāḥ] = my sons = मामक (m.) + कर्तरि 1/3

- अस्मद् + अण् (युष्मदस्मदोरन्यतरस्यां खञ् च । ४.३.२) = ममक + अण् (तवकममकावेकवचने । ४.३.३)
- पाण्डवाः [pāṇḍavāḥ] = the sons of Pāṇḍu = पाण्डव (m.) + कर्तरि 1/3
    - पण्डोः अपत्यं पाण्डवः ते ।
- च [ca] = and = अव्ययम्
- एव [eva] = indeed = अव्ययम्
- किम् [kim] = what = किम् (n.) + कर्मणि 2/1
- अकुर्वत [akurvata] = did they do = कृ (8U) to do + लङ्/कर्तरि/III/3
- सञ्जय [sañjaya] = O Sañjaya! = सञ्जय (m.) + सम्बोधने 1/1

॥ १-१ ॥

Sentence 1:

धृतराष्ट्रः [1/1] उवाच [III/1] । Dhṛtarāṣṭra asked.

Sentence 2:

Main sentence:

सञ्जय [8/1] मामकाः [1/3] पाण्डवाः [1/3] च [0] एव [0] किम् [2/1] अकुर्वत [III/3] । O Sañjaya! What did my people and sons of Paṇḍu do?

Description of मामकाः पाण्डवाः च :

युयुत्सवः [1/3] (desiring to fight) समवेताः [1/3] (assembled) कुरुक्षेत्रे [7/1] (in Kurukṣetra) धर्मक्षेत्रे [7/1] (which is the abode of Dharma) ।

**सञ्जय उवाच।**

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा।**

**आचार्यमुपसङ्गम्य राजा वचनमब्रवीत्॥ १-२॥**

sañjaya uvāca|

dṛṣṭvā tu pāṇḍavānīkaṃ vyūḍhaṃ duryodhanastadā|

ācāryamupasaṅgamya rājā vacanamabravīt|| 1-2||

सञ्जयः $^{1/1}$ उवाच $^{III/1}$ ।

दृष्ट्वा $^{0}$ तु $^{0}$ पाण्डवानीकम् $^{2/1}$ व्यूढम् $^{2/1}$ दुर्योधनः $^{1/1}$ तदा $^{0}$।

आचार्यम् $^{2/1}$ उपसङ्गम्य $^{0}$ राजा $^{1/1}$ वचनम् $^{2/1}$ अब्रवीत् $^{III/1}$॥ १-२॥

- सञ्जयः [sañjayaḥ] = Sañjaya = सञ्जय (m.) + कर्तरि 1/1
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1

- दृष्ट्वा [dṛṣṭvā] = having seen = अव्ययम्
    - दृश् (1P) to see + क्त्वा (having … ed)
- तु [tu] = but = अव्ययम्
- पाण्डवानीकम् [pāṇḍavānīkam] = army of the Pāṇḍavas = पाण्डवानीक (m./n.) + adj. to व्यूढम् 2/1
    - पाण्डवानाम् (of the Pāṇḍavas) अनीकः/अनीकम् (army) । 6T
- व्यूढम् [vyūḍham] = formed = व्यूढ (m./n.) + कर्मणि to दृष्ट्वा 2/1
    - वि + ऊह् to arrange army + क्त
- दुर्योधनः [duryodhanaḥ] = Duryodhana = दुर्योधन (m.) + कर्तरि 1/1
- तदा [tadā] = then = अव्ययम्
    - तद् (that) + दा (time)
- आचार्यम् [ācāryam] = teacher (Droṇa) = आचार्य (m.) + कर्मणि to उपसङ्गम्य 2/1
- उपसङ्गम्य [upasaṅgamya] = having approached = अव्ययम्
    - उप + सम् + गम् to approach + ल्यप्

6.4.37
अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकल
ोपो झलि क्ङिति ।
6.4.38 वा ल्यपि ।

- राजा [rājā] = the king = राजन् (m.) + adj. to दुर्योधनः 1/1
- वचनम् [vacanam] = word = वचन (n.) + कर्मणि to अब्रवीत् 2/1
- अब्रवीत् [abravīt] = spoke = ब्रूञ् (2U) to speak+ लङ्/कर्तरि/III/1

॥ १-२॥

Sentence 1:

सञ्जयः 1/1 उवाच III/1 । Sañjaya said.

Sentence 2:

Main sentence:

राजा 1/1 दुर्योधनः 1/1 वचनम् 2/1 अब्रवीत् III/1 । The king (राजा 1/1) Duryodhana (दुर्योधनः 1/1) spoke (अब्रवीत् III/1) those words (वचनम् 2/1).

Previous action #1 :

तदा 0 तु 0 पाण्डवानीकम् 2/1 व्यूढम् 2/1 दृष्ट्वा 0 ।

But (तु 0) then (तदा 0) having seen (दृष्ट्वा 0) the army of Pāṇḍavas (पाण्डवानीकम् 2/1) formed in the array (व्यूढम् 2/1)

Previous action #2 :

आचार्यम् 2/1 उपसङ्गम्य 0 ।

having approached (उपसङ्गम्य 0) the teacher, Doroṇa (आचार्यम् 2/1)

## पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।

## व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता॥ १-३॥

paśyaitāṃ pāṇḍuputrāṇāmācārya mahatīṃ camūm|

vyūḍhāṃ drupadaputreṇa tava śiṣyeṇa dhīmatā|| 1-3||

पश्य $^{II/1}$ एताम् $^{2/1}$ पाण्डु-पुत्राणाम् $^{6/3}$ आचार्य $^{8/1}$ महतीम् $^{2/1}$ चमूम् $^{2/1}$।

व्यूढाम् $^{2/1}$ द्रुपद-पुत्रेण $^{3/1}$ तव $^{6/1}$ शिष्येण $^{3/1}$ धीमता $^{3/1}$॥ १-३॥

- पश्य [paśya] = See = दृश् (1P) to see + लोट्/कर्तरि/II/1
- एताम् [etām] = this = एतद् (f.) + adj. to चमूम् 2/1
- पाण्डुपुत्राणाम् [pāṇḍuputrāṇām] = of sons of Pāṇḍu = पाण्डुपुत्र (m.) + सम्बन्धे to चमूम् 6/3
    - पाण्डोः पुत्राः पाण्डुपुत्राः तेषाम् । 6T
- आचार्य [ācārya] = O Teacher! = आचार्य (m.) + सम्बोधने 1/1
- महतीम् [mahatīm] = great = महत् (f.) + adj. to चमूम् 2/1
- चमूम् [camūm] = army = चमू (f.) + कर्मणि to पश्य 2/1
- व्यूढाम् [vyūḍhām] = formed = व्यूढा (f.) + adj. to चमूम् 2/1
- द्रुपदपुत्रेण [drupadaputreṇa] = by the son of Drupada = द्रुपदपुत्र (m.) + कर्तरि to व्यूढाम् 3/1
- तव [tava] = your = युष्मद् (m.) + सम्बन्धे to शिष्येण 6/1
- शिष्येण [śiṣyeṇa] = disciple = शिष्य (m.) + adj. to द्रुपदपुत्रेण 3/1
    - शास् (2P) to teach + क्यप् । शास इदङ्हलोः ६.४.३४। इति उपधायाः इत्त्वं, शासवसिधसीनां च ८.३.६० इति सकारस्य मूर्धन्यत्वम् ।
- धीमता [dhīmatā] = brilliant = धीमत् (m.) + adj. to द्रुपदपुत्रेण 3/1
    - धीः अस्यास्तीति धीमान् । मतुँप्

॥ १-३॥

Main sentence:

एताम् $^{2/1}$ चमूम् $^{2/1}$ पश्य $^{II/1}$ । Please see this army.

Description of चमूम् $^{2/1}$ #1:

पाण्डुपुत्राणाम् $^{6/3}$ (of the sons of Pāṇḍu) चमूम् $^{2/1}$ (army).

Description of चमूम् $^{2/1}$ #2:

महतीम् $^{2/1}$ (great) चमूम् $^{2/1}$ (army).

Description of चमूम् $^{2/1}$ #3:

व्यूढाम् $^{2/1}$ (formed) द्रुपदपुत्रेण $^{3/1}$ (by the son of Drupada) .

Description of द्रुपदपुत्रेण $^{3/1}$ #1:

तव $^{6/1}$ (your) धीमता $^{3/1}$ (brilliant) शिष्येण $^{3/1}$ (disciple)

## अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।

## युयुधानो विराटश्च द्रुपदश्च महारथाः ॥१-४॥

atra śūrā maheṣvāsā bhīmārjunasamā yudhi |

yuyudhāno virāṭaśca drupadaśca mahārathāḥ ||1-4||

अत्र 0 शूराः 1/3 महेष्वासाः 1/3 भीमार्जुनसमाः 1/3 युधि 7/1 ।

युयुधानः 1/1 विराटः 1/1 च 0 द्रुपदः 1/1 च 0 महारथाः 1/3 ॥१-४॥

- अत्र [atra] = here (in the army of Pāṇḍavas) = अव्ययम्
    - इदम् (this) + त्रल् (7th case meaning)
- शूराः [śūrāḥ] = experts = शूर (m.) + 1/3
- महेष्वासाः [maheṣvāsāḥ] = men of great bows = महेष्वास (m.) + 1/3
    - इषुः (arrow) अस्यते (is thrown) अस्मिन् (in which) इति इष्वासं धनुः (bow) । UT
    - महन्ति (great) धनूंषि (bows) येषां (whose) ते राजानः (kings) । 11B6
- भीमार्जुनसमाः [bhīmārjunasamāḥ] = equal to Bhīma and Arjuna = भीमार्जुनसम (m.) + 1/3
    - भीमेन अर्जुनेन च समाः (equal) भीमार्जुनसमाः । पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः २.१.३१। 3T
- युधि [yudhi] = in battle = युध् (f.) + अधिकरणे 7/1
- युयुधानः [yuyudhānaḥ] = Yuyudhāna= युयुधान (m.) + 1/1
- विराटः [virāṭaḥ] = Virāṭa = विराट (m.) + 1/1
- च [ca] = and = अव्ययम्
- द्रुपदः [drupadaḥ] = King Drupada (father of Daupadī) = द्रुपद (m.) + 1/1
- च [ca] = and = अव्ययम्
- महारथाः [mahārathāḥ] = capable to fight and lead a great army = महारथ (m.) + 1/3

॥ १-४॥

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।**

**पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥१-५॥**

dhṛṣṭaketuścekitānaḥ kāśirājaśca vīryavān |

purujit kuntibhojaśca śaibyaśca narapuṅgavaḥ ||1-5||

धृष्टकेतुः 1/1 चेकितानः 1/1 काशिराजः 1/1 च 0 वीर्यवान् 1/1 ।

पुरुजित् 1/1 कुन्तिभोजः 1/1 च 0 शैब्यः 1/1 च 0 नरपुङ्गवः 1/1 ॥१-५॥

- धृष्टकेतुः [dhṛṣṭaketuḥ] = Dhṛṣṭaketu = धृष्टकेतु (m.) + 1/1
- चेकितानः [cekitānaḥ] = Cekitāna= चेकितान (m.) + 1/1
- काशिराजः [kāśirājaḥ] = Kāśirāja = काशिराज (m.) + 1/1
- च [ca] = and = अव्ययम्
- वीर्यवान् [vīryavān] = Valiant = वीर्यवत् (m.) + 1/1
    - वीर्यम् (valor) अस्य/अस्मिन् अस्ति इति वीर्यवान् । मतुँप्
- पुरुजित् [purujit] = Purujit = पुरुजित् (m.) + 1/1
    - पुरु + जि (1P) to conquer + क्विप्
- कुन्तिभोजः [kuntibhojaḥ] = Kuntibhojaḥ = कुन्तिभोज (m.) + 1/1
- च [ca] = and = अव्ययम्
- शैब्यः [śaibyaḥ] = Śaibya = शैब्य (m.) + 1/1
- च [ca] = and = अव्ययम्
- नरपुङ्गवः [narapuṅgavaḥ] = Narapuṅgava = नरपुङ्गव (m.) + 1/1

॥ १-५॥

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।**

**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥१-६॥**

yudhāmanyuśca vikrānta uttamaujāśca vīryavān |

saubhadro draupadeyāśca sarva eva mahārathāḥ ||1-6||

युधामन्युः $^{1/1}$ च $^{0}$ विक्रान्तः $^{1/1}$ उत्तमौजाः $^{1/1}$ च $^{0}$ वीर्यवान् $^{1/1}$ ।

सौभद्रः $^{1/1}$ द्रौपदेयाः $^{1/3}$ च $^{0}$ सर्वे $^{1/3}$ एव $^{0}$ महारथाः $^{1/3}$ ॥१-६॥

- युधामन्युः [yudhāmanyuḥ] = Yudhāmanyu = युधामन्यु (m.) + 1/1
- विक्रान्तः [vikrāntaḥ] = Vikrānta = विक्रान्त (m.) + 1/1
- उत्तमौजाः [uttamaujāḥ] = Uttamaujas = उत्तमौजस् (m.) + 1/1
- च [ca] = and = अव्ययम्
- वीर्यवान् [vīryavān] = Valiant = वीर्यवत् (m.) + 1/1
    - वीर्यम् (valor) अस्य/अस्मिन् अस्ति इति वीर्यवान् । मतुँप्
- सौभद्रः [saubhadraḥ] = Abhimanyu = सौभद्र (m.) + 1/1
    - सुभद्रायाः (of Subhadrā, wife of Arjuna) अपत्यं (son) सौभद्रः
- द्रौपदेयाः [draupadeyāḥ] = the sons of Draupadī = द्रौपदेय (m.) + 1/3
    - द्रौपद्याः (of Draupadī) अपत्यानि (sons) द्रौपदेयाः = द्रौपदी + ढक् (स्त्रीभ्यो ढक्। )
- च [ca] = and = अव्ययम्
- सर्वे [sarve] = all (these) = सर्व (pron. m.) + 1/3
- एव [eva] = indeed = अव्ययम्
- महारथाः [mahārathāḥ] = men of great valour = महारथ (m.) + 1/3

॥ १-६॥

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥१-७ ॥**

asmākaṃ tu viśiṣṭā ye tānnibodha dvijottama |

nāyakā mama sainyasya saṃjñārthaṃ tānbravīmi te ||1-7||

अस्माकम् 6/3 तु 0 विशिष्टाः 1/3 ये 1/3 तान् 2/3 नि बोध II/1 द्विजोत्तम 8/1 ।

नायकाः 1/3 मम 6/1 सैन्यस्य 6/1 संज्ञार्थम् 0 तान् 2/3 ब्र वीमि I/1 ते 4/1 ॥१-७॥

- अस्माकम् [asmākam] = our = अस्मद् (pron. m.) + सम्बन्ध to नायकाः 6/3
- तु [tu] = whereas = अव्ययम्
- विशिष्टाः [viśiṣṭāḥ] = important = विशिष्ट (m.) + adj. to ये 1/3
- ये [ye] = those who = यद् (pron. m.) + adj. to नायकाः 1/3
- तान् [tān] = them = तद् (pron. m.) + कर्मणि to निबोध 2/3
- निबोध [nibodha] = Please know = नि + बुध् (1P) to learn + लोट् /कर्तरि /II/1
- द्विजोत्तम [dvijottama] = learned among the twice-born (brāhmaṇas)= द्विजोत्तम (m.) + सम्बोधने 1/1
  - द्विजानाम् उत्तमः द्विजोत्तमः । 6T
- नायकाः [nāyakāḥ] = leaders = नायक (m.) + कर्तरि to [भवन्ति ] 1/3
  - नी to lead + ण्वुल् (…er, कर्तरि ) = नायक (leader)
- च [ca] = and = अव्ययम्
- मम [mama] = my (these) = अस्मद् (pron. m.) + सम्बन्ध to सैन्यस्य 6/1
- सैन्यस्य [sainyasya] = of (my) army = सैन्य (m.) + सम्बन्ध to नायकाः 6/1
- संज्ञार्थम् [saṃjñārtham] = in order to introduce= अव्ययम्
  - संज्ञाय इदम् संज्ञार्थम् । 4T

- In the sense of adverb, the word can be treated as indeclinable.
- ब्रवीमि [bravīmi] = I tell = ब्रूञ् (2U) to say+ लट् /कर्तरि /I/1
- ते [te] = to you = युष्मद् (pron. m.) + सम्प्रदाने 4/1 (optional form of तुभ्यम् )

॥ १-७ ॥

Relative clause (यत् -clause):

द्विजोत्तम 8/1 तु 0 मम 6/1 सैन्यस्य 6/1 अस्माकम् 6/3 ये 1/3 विशिष्टाः 1/3 नायकाः 1/3।

O Learned among the twice-born! Those who are important of us,

Main clause (तत् -clause), Sentence 1:

तान् 2/3 नि बोध II/1 । Please take note of them.

Sentence 2:

तान् 2/3 संज्ञार्थम् 0 ते 4/1 ब्र वीमि I/1 । I tell you in order to introduce them.

**भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।**

**अश्वत्थामा विराटश्च सौमदत्तिर्जयद्रथः ॥१-८॥**

bhavān bhīṣmaśca karṇaśca kṛpaśca samitiñjayaḥ |

aśvatthāmā virāṭaśca saumadattirjayadrathaḥ ||1-8||

भवान् 1/1 भीष्मः 1/1 च 0 कर्णः 1/1 च 0 कृपः 1/1 च 0 समितिञ्जयः 1/1 ।

अश्वत्थामा 1/1 विराटः 1/1 च 0 सौमदत्तिः 1/1 जयद्रथः 1/1 ॥१-८॥

- भवान् [bhavān] = you = भवत् (pron. m.) + प्रातिपदिकार्थे 1/1
- भीष्मः [bhīṣmaḥ] = Bhīṣma = भीष्म (m.) + प्रातिपदिकार्थे 1/1
- च [ca] = and = अव्ययम्
- कर्णः [karṇaḥ] = Karṇa = कर्ण (m.) + प्रातिपदिकार्थे 1/1
- च [ca] = and = अव्ययम्
- कृपः [kṛpaḥ] = Kṛpa = कृप (m.) + प्रातिपदिकार्थे 1/1
- च [ca] = and = अव्ययम्
- समितिञ्जयः [samitiñjayaḥ] = one who is always victorious = समितिञ्जय (m.) + प्रातिपदिकार्थे 1/1
    - समितिं (battle) जयति इति समितिञ्जयः ।
      = समिति + जि (1P to win) + खच् By 3.2.46
      = समिति + मुँम् + जय By 6.3.67
- अश्वत्थामा [aśvatthāmā] = Aśvatthāman= अश्वत्थामन् (m.) + प्रातिपदिकार्थे 1/1
- विराटः [virāṭaḥ] = Virāṭa = विराट (m.) + प्रातिपदिकार्थे 1/1
- च [ca] = and = अव्ययम्
- सौमदत्तिः [saumadattiḥ] = Saumadatti = सौमदत्ति (m.) + प्रातिपदिकार्थे 1/1
- जयद्रथः [jayadrathaḥ] = Jayadratha = जयद्रथ (m.) + प्रातिपदिकार्थे 1/1

॥ १-८॥

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**

**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥१-९ ॥**

anye ca bahavaḥ śūrā madarthe tyaktajīvitāḥ |

nānāśastrapraharaṇāḥ sarve yuddhaviśāradāḥ ||1-9||

अन्ये 1/3 च 0 बहवः 1/3 शूराः 1/3 मदर्थे 7/1 त्यक्तजीविताः 1/3 ।

नानाशस्त्रप्रहरणाः 1/3 सर्वे 1/3 युद्धविशारदाः 1/3 ॥१-९॥

- अन्ये [anye] = others = अन्य (pron. m.) + adj. to शूराः 1/3
- च [ca] = and = अव्ययम्
- बहवः [bahavaḥ] = many = बहु (m.) + adj. to शूराः 1/3
- शूराः [śūrāḥ] = warriors = शूर (m.) + कर्तरि to [सन्ति ] 1/3
- मदर्थे [madarthe] = for my sake = मदर्थ (m.) + निमित्ते 7/1
    - मम अर्थः मदर्थः । (6T) । तस्मिन् निमित्ते मदर्थे
- त्यक्तजीविताः [tyaktajīvitāḥ] = those whose lives are given up = त्यक्तजीवित (m.) + adj. to शूराः 1/3
    - त्यक्ताः (given up) जीविताः (lives) यैः (by them) ते त्यक्तजीविताः । बहुव्रीहिसमासः 11B3
- नानाशस्त्रप्रहरणाः [nānāśastrapraharaṇāḥ] = having many kinds of weapons = नानाशस्त्रप्रहरण (m.) + adj. to शूराः 1/3
    - नाना विधानि (various) शस्त्राणि (weapons used in hand) प्रहरणानि (weapons) येषां (of them) ते नानाशस्त्रप्रहरणाः। बहुव्रीहिसमासः 11B6
- सर्वे [sarve] = all = सर्व (pron. m.) + adj. to युद्धविशारदाः 1/3
- युद्धविशारदाः [yuddhaviśāradāḥ] = experts in warfare = युद्धविशारद (m.) + adj. to शूराः 1/3
    - युद्धे (in warfare) विशारदाः (expert) । सप्तमीतत्पुरुषसमासः । 7T (not in the सूत्रम् )

॥१-९॥

**अपर्याप्तं तदास्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१-१०॥**

aparyāptaṃ tadāsmākaṃ balaṃ bhīṣmābhirakṣitam |

paryāptaṃ tvidameteṣāṃ balaṃ bhīmābhirakṣitam ||1-10||

अपर्याप्तम् 1/1 तद् 1/1 अस्माकम् 6/3 बलम् 1/1 भीष्माभिरक्षितम् 1/1 ।

पर्याप्तम् 1/1 तु 0 इदम् 1/1 एतेषाम् 6/3 बलम् 1/1 भीमाभिरक्षितम् 1/1 ॥१-१०॥

- अपर्याप्तम् [aparyāptam] = cannot be overwhelmed = अपर्याप्त (n.) + adj. to बलम् 1/1
- तद् [tad] = others = तद् (pron. n.) + adj. to बलम् 1/1
- अस्माकम् [asmākam] = our = अस्मद् (m.) + सम्बन्धे to बलम् 6/3
- बलम् [balam] = army = बल (n.) + कर्तरि to [भवति ] 1/1
- भीष्माभिरक्षितम् [bhīṣmābhirakṣitam] = protected by Bhīṣma = भीष्माभिरक्षित (n.) + adj. to भीष्माभिरक्षितम् 1/1
    - भीष्मेण अभिरक्षितम् इति भीष्माभिरक्षितम् । 3T
- पर्याप्तम् [paryāptam] = can be overwhelmed = अपर्याप्त (n.) + adj. to बलम् 1/1
- तु [tu] = whereas = अव्ययम्
- इदम् [idam] = this = इदम् (pron. n.) + adj. to बलम् 1/1
- एतेषाम् [eteṣām] = of those people = एतद् (m.) + सम्बन्धे to बलम् 6/3
- बलम् [balam] = army = बल (n.) + कर्तरि to [भवति ] 1/1
- भीमाभिरक्षितम् [bhīmābhirakṣitam] = protected by Bhīma = भीमाभिरक्षित (n.) + adj. to बलम् 1/1
    - भीमेण अभिरक्षितम् इति भीष्माभिरक्षितम् । 3T

॥१-१०॥

Sentence 1:

तद् [1/1] अस्माकम् [6/3] भीष्माभिरक्षितम् [1/1] बलम् [1/1] अपर्याप्तम् [1/1] । Our army, protedted by Bhīṣma cannot be overwhelmed.

Sentence 2:

इदम् [1/1] तु [0] एतेषाम् [6/3] भीमाभिरक्षितम् [1/1] बलम् [1/1] पर्याप्तम् [1/1] । Whereas, this army of these people, protedted by Bhīma can be overwhelmed.

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥१-११॥**

ayaneṣu ca sarveṣu yathābhāgamavasthitāḥ |

bhīṣmamevābhirakṣantu bhavantaḥ sarva eva hi ||1-11||

अयनेषु 7/3 च 0 सर्वेषु 7/3 यथाभागम् 0 अवस्थिताः 1/3 ।

भीष्मम् 2/1 एव 0 अभिरक्षन्तु III/3 भवन्तः 1/3 सर्वे 1/3 एव 0 हि 0 ॥१-११॥

- अयनेषु [ayaneṣu] = in the divisions (of army) = अयन (n.) + अधिकरणे of अवस्थिताः 7/3
- च [ca] = and = अव्ययम्
- सर्वेषु [sarveṣu] = all = सर्व (pron. n.) + adj. to अयनेषु 7/3
- यथाभागम् [yathābhāgam] = in respective positions = अव्ययम्
  - भागम् (division) अनतिक्रम्य (not crossing) यथाभागम् । अव्ययीभावसमासः
- अवस्थिताः [avasthitāḥ] = stationed = अवस्थित (m.) + adj. to भवन्तः 1/3
  - अव + स्था to remain + क्त (कर्तरि )
- भीष्मम् [bhīṣmam] = Bhīṣma= भीष्म (m.) + कर्म of अभिरक्षन्तु 2/1
- एव [eva] = alone = अव्ययम्
- अभिरक्षन्तु [abhirakṣantu] = protect = अभि रक्ष् to protect + लोट् /कर्तरि /III/3
- भवन्तः [bhavantaḥ] = you = भवत् (pron. m.) + कर्ता of अभिरक्षन्तु 1/3
- सर्वे [sarve] = all = सर्व (pron. m.) + adj. to भवन्तः 1/3
- हि [hi] = indeed = अव्ययम्

॥१-११॥

Main sentence:

सर्वे 1/3 भवन्तः 1/3 भीष्मम् 2/1 एव 0 अभिरक्षन्तु III/3 । Many you all protect Bhīṣma alone.

Description of भवन्तः:

अयनेषु 7/3 सर्वेषु 7/3 यथाभागम् 0 अवस्थिताः 1/3 । stationed in the respective positions in all divisions

**तस्य सञ्जनयन्हर्षं कुरुवृद्धः पितामहः ।**

**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१-१२॥**

tasya sañjanayanharṣaṃ kuruvṛddhaḥ pitāmahaḥ |

siṃhanādaṃ vinadyoccaiḥ śaṅkhaṃ dadhmau pratāpavān ||1-12||

तस्य 6/1 सञ्जनयन् 1/1 हर्षम् 2/1 कुरुवृद्धः 1/1 पितामहः 1/1 ।

सिंहनादम् 2/1 विनद्य 0 उच्चैः 0 शङ्खम् 2/1 दध्मौ III/1 प्रतापवान् 1/1 ॥१-१२॥

- तस्य [tasya] = his (Duryodhana's) = तद् (pron. m.) + सम्बन्धे to हर्षम् 6/1
- सञ्जनयन् [sañjanayan] = producing = सञ्जनयत् + adj. to [भीष्मः ] 1/1
    - सम् + जन् to be born+ णिच् (causative) to produce + शतृ (one who is doing …) = सञ्जनयत् one who is producing
- हर्षम् [harṣam] = joy = हर्ष (m.) + कर्मणि of सञ्जनयन् 2/1
- कुरुवृद्धः [kuruvṛddhaḥ] = elder of Kuru family = कुरुवृद्ध + adj. to [भीष्मः ] 1/1
- पितामहः [pitāmahaḥ] = grandfather = पितामह + adj. to [भीष्मः ] 1/1
- सिंहनादम् [siṃhanādam] = roar of lion = सिंहनाद (m.) + कर्मणि of विनद्य 2/1
- विनद्य [vinadya] = roaring = अव्ययम्
    - वि + नद् to roar, cry out + ल्यप् (having done …) = विनद्य = having crying out
- उच्चैः [uccaiḥ] = loudly = अव्ययम्
- शङ्खम् [śaṅkham] = conch shell = शङ्ख (m.) + कर्मणि of दध्मौ 2/1
- दध्मौ [dadhmau] = blew = ध्मा to blow + लिट् /कर्तरि /III/1
- प्रतापवान् [pratāpavān] = one who has splender = प्रतापवत् + adj. to [भीष्मः ] 1/1
    - प्रतापः अस्य अस्ति इति प्रतापवान् । मतुँप्

॥१-१२॥

Main sentence 1:

प्रतापवान्[1/1] शङ्खम्[2/1] उ च्चैः[0] दध्मौ[III/1] । Bhīṣma, one who has splender, blew the conch loudly.

Descrption of Bhīṣma – Action 1:

कुरुवृद्धः[1/1] पितामहः[1/1] तस्य[6/1] ह र्षम्[2/1] सञ्जनयन्[1/1] । The elder, the grandfather of Kuru family, producing the joy of Duryodhana,

Action 2:

सिंहनादम्[2/1] विनद्य[0] । Roaring the cry of lion

**ततः शङ्खाश्च भेर्यश्च पनवानकगोमुखाः ।**

**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १ -१ ३ ॥**

tataḥ śaṅkhāśca bheryaśca panavānakagomukhāḥ |

sahasaivābhyahanyanta sa śabdastumulo'bhavat ||1-13||

ततः [0] शङ्खाः [1/3] च [0] भेर्यः [1/3] च [0] पनवानकगोमुखाः [1/3] ।

सहसा [0] एव [0] अभ्यहन्यन्त [III/3] सः [1/1] शब्दः [1/1] तु मुलः [1/1] अभवत् [III/1]

॥१-१३॥

- ततः [tataḥ] = then = अव्ययम्
  - तद् + तसिँल् = तस्मात् । पञ्चम्यर्थे तसिँल्
- शङ्खाः [śaṅkhāḥ] = conch = शङ्ख (m.) + कर्मणि of अभ्यहन्यन्त 1/3
- च [ca] = and = अव्ययम्
- भेर्यः [bheryaḥ] = kettle drums = भेरी (f.) + कर्मणि of अभ्यहन्यन्त 1/3
- च [ca] = and = अव्ययम्
- पनवानकगोमुखाः [panavānakagomukhāḥ] = tabors, trumpets, and cowhorns = पनवानकगोमुख (m.) + कर्मणि of अभ्यहन्यन्त 1/3
  - पनवाः च आनकाः च गोमुखाः च पनवानकगोमुखाः । इतरेतरद्वन्द्वसमासः (ID)
- सहसा [sahasā] = suddenly = अव्ययम्
- एव [eva] = only = अव्ययम्
- अभ्यहन्यन्त [abhyahanyanta] = were blasted = अभि + हन् to beat (drums) + लङ् /कर्मणि /III/3
- सः [saḥ] = that = तद् (pron. m) + adj. to शब्दः 1/1
- शब्दः [śabdaḥ] = sound = शब्द (m) + कर्तरि of अभवत् 1/1
- तुमुलः [tumulaḥ] = tumlut, noisy = तुमुल (m) + adj. to शब्दः 1/1
- अभवत् [abhavat] = became = भू to be + लङ् /कर्तरि /III/1

॥१-१३॥

Sentence 1:

ततः[0] शङ्खाः [1/3] च[0] भेर्यः [1/3] च[0] पनवानकगोमुखाः[1/3] सहसा [0] एव[0] अभ्यहन्यन्त [III/3] । Then, conches, kettle drums, tabors, trumpets, and cowhorns are blasted simultaneously.

Sentence 2:

सः [1/1] शब्दः [1/1] तु मुलः [1/1] अभवत्[III/1] । That sound became earth shaking.

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**

**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १ -१ ४ ॥**

tataḥ śvetairhayairyukte mahati syandane sthitau |

mādhavaḥ pāṇḍavaścaiva divyau śaṅkhau pradadhmatuḥ ||1-14||

ततः [0] श्वेतैः [3/3] हयैः [3/3] युक्ते [7/1] महति [7/1] स्यन्दने [7/1] स्थितौ [1/2] ।

माधवः [1/1] पाण्डवः [1/1] च [0] एव [0] दिव्यौ [2/2] शङ्खौ [2/2] प्रदध्मतुः [III/2] ॥१-१४॥

- ततः [tataḥ] = then = अव्ययम्
  - तद् + तसिँल् = तस्मात् । पञ्चम्यर्थे तसिँल्
- श्वेतैः [śvetaiḥ] = by the white = श्वेत (m.) + adj. to हयैः 3/3
- हयैः [hayaiḥ] = horses = हय (m.) + कर्तरि to युक्ते 3/3
- युक्ते [yukte] = yoked, harnessed = युक्त (m.) + adj. to स्यन्दने 7/1
- महति [mahati] = great = महत् (m.) + adj. to स्यन्दने 7/1
- स्यन्दने [syandane] = chariot = स्यन्दन (m.) + अधिकरणे of स्थितौ 7/1
- स्थितौ [sthitau] = seated = स्थित (m.) + adj. to माधवः and पाण्डवः 1/2
- माधवः [mādhavaḥ] = Kṛṣṇa= माधव (m.) + कर्तरि of प्रदध्मतुः 1/1
- पाण्डवः [pāṇḍavaḥ] = Arjuna= पाण्डव (m.) + कर्तरि of प्रदध्मतुः 1/1
- च [ca] = and = अव्ययम्
- एव [eva] = also= अव्ययम्
- दिव्यौ [divyau] = cerestial = दिव्य (m.) + adj. to शङ्खौ 2/2
- शङ्खौ [śaṅkhau] = conch = शङ्ख (m.) + कर्म of प्रदध्मतुः 2/2
- प्रदध्मतुः [pradadhmatuḥ] = blew = प्र + ध्मा (1P) to blow + लिट् /कर्तरि /III/2

॥१-१४॥

Main sentence:

ततः [0] माधवः [1/1] पाण्डवः [1/1] च [0] एव [0] दिव्यौ [2/2] शङ्खौ [2/2] प्रदध्मतुः [III/2] । Then Kṛṣṇa and Arjuna also blew cerestial conches.

Description of Kṛṣṇa and Arjuna:

महति $^{7/1}$ स्यन्दने $^{7/1}$ स्थितौ $^{1/2}$ । seated in the great chariot

Description of the chariot:

श्वेतैः $^{3/3}$ हयैः $^{3/3}$ युक्ते $^{7/1}$ । yoked with white horses

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १ -१ ५ ॥**

pāñcajanyaṃ hṛṣīkeśo devadattaṃ dhanañjayaḥ |

pauṇḍraṃ dadhmau mahāśaṅkhaṃ bhīmakarmā vṛkodaraḥ ||1-15||

पाञ्चजन्यम् 2/1 हृषीकेशः 1/1 देवदत्तम् 2/1 धनञ्जयः 1/1 ।

पौण्ड्रम् 2/1 दध्मौ III/1 महाशङ्खम् 2/1 भीमकर्मा 1/1 वृकोदरः 1/1 ॥१-१५॥

- पाञ्चजन्यम् [pāñcajanyam] = Pāñcajanya (name of conch of Kṛṣṇa) = पाञ्चजन्य + कर्मणि of [दध्मौ] 2/1
- हृषीकेशः [hṛṣīkeśaḥ] = Hṛṣīkeśa (another name of Kṛṣṇa) = हृषीकेश + कर्तरि of [दध्मौ] 1/1
    - हृषीकाणाम् (of senses) ईशः (lord) हृषीकेशः । षष्ठीतत्पुरुषः ।
- देवदत्तम् [devadattam] = Devadatta (name of conch of Arjuna) = देवदत्त + कर्मणि of [दध्मौ] 2/1
- धनञ्जयः [dhanañjayaḥ] = Dhanañjaya (another name of Arjuna) = हृषीकेश + कर्तरि of [दध्मौ] 1/1
    - धनानि जयति इति धनञ्जयः ।
    - धन + शस् + जि + खच् by 3.2.46 संज्ञायां भृ-तृ-वृ-जि-धारि-सहि-तपि-दमः । ~ खच्
    - धन + मुँम् + जय् + अ by 6.3.37 अरुर्विषदजन्तस्य मुँम् । ~ खिति
- पौण्ड्रम् [pauṇḍraṃ] = Pauṇḍra (name of conch of Bhīma) = पौण्ड्र + कर्मणि of [दध्मौ] 2/1
- दध्मौ [dadhmau] = blew = ध्मा (1P) to blow + लिट्/कर्तरि/III/1
- महाशङ्खम् [mahāśaṅkham] = huge conch = पौण्ड्र + adj. to पौण्ड्रम् 2/1
- भीमकर्मा [bhīmakarmā] = one whose works are terrible (another name of Bhīma) = भीमकर्मन् + adj. to [भीम] 1/1
    - भीमानि (terrible) कर्माणि (actions) यस्य (for whom) सः भीमकर्मा । बहुव्रीहिसमासः

- वृकोदरः [vṛkodaraḥ] = one whose stomach is the one of wolf (another name of Bhīma) = वृकोदर + adj. to [भीम] 1/1
    - वृकस्य (of wolf) उदरः (stomach) इव (like) उदरः यस्य (for whom) सः वृकोदरः । बहुव्रीहिसमासः

॥१-१५॥

Sentence 1:

हृषीकेशः 1/1 पाञ्चजन्यम् 2/1 [दध्मौ III/1]

Kṛṣṇa [blew his conch,] Pāñcajanya.

Sentence 2:

धनञ्जयः 1/1 देवदत्तम् 2/1 [दध्मौ III/1]

Arjuna [blew his conch,] Devadatta.

Sentence 3:

भीमकर्मा 1/1 वृकोदरः 1/1 [भीमः 1/1] महाशङ्खम् 2/1 पौण्ड्रम् 2/1 दध्मौ III/1

[Bhīma], whose works are terrible, and whose stomach is the one of wolf, blew [his] huge conch, named  Pauṇḍra.

॥१-१५॥

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**

**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १ - १ ६ ॥**

anantavijayaṃ rājā kuntīputro yudhiṣṭhiraḥ |

nakulaḥ sahadevaśca sughoṣamaṇipuṣpakau ||1-16||

अनन्तविजयम् 2/1 राजा 1/1 कुन्तीपुत्रः 1/1 युधिष्ठिरः 1/1 ।

नकुलः 1/1 सहदेवः 1/1 च 0 सुघोषमणिपुष्पकौ 2/2 ॥१-१६॥

- अनन्तविजयम् [anantavijayam] = Anantavijayam (name of conch of Yudhiṣṭhiraḥ) = अनन्तविजय + कर्मणि of [दध्मौ] 2/1
  - अनन्ताः (limitless) विजयाः (victory) यस्य (of which) सः अनन्तविजयः । बहुव्रीहिसमासः ।
- राजा [rājā] = king = राजन् + adj. to युधिष्ठिरः 1/1
- कुन्तीपुत्रः [kuntīputraḥ] = son of Kuntī = कुन्तीपुत्र + adj. to युधिष्ठिरः 1/1
  - कुन्त्याः पुत्रः कुन्तीपुत्रः । षष्ठीतत्पुरुषसमासः ।
- युधिष्ठिरः [yudhiṣṭhiraḥ] = Yudhiṣṭhiraḥ = युधिष्ठिर + कर्तरि of [दध्मौ] 1/1
  - युधि (in the battle) स्थिरः (firm) इति युधिष्ठिरः । सप्तमीतत्पुरुषसमासः । अलुक् of विभक्ति by 6.3.9 हलदन्तात्सप्तम्याः संज्ञायाम् ।
- नकुलः [nakulaḥ] = Nakula = नकुल + कर्तरि of [दध्मतुः blew] 1/1
- सहदेवः [sahadevaḥ] = Sahadeva = सहदेव + कर्तरि of [दध्मतुः blew] 1/1
- च [ca] = and = अव्ययम्
- सुघोषमणिपुष्पकौ [sughoṣamaṇipuṣpakau] = Sughoṣa and Maṇipuṣpaka (names of conches of Nakula and Sahadeva) = सुघोषमणिपुष्पक + कर्मणि of [प्रदध्मतुः] 2/1
  - सुघोषः च मणिपुष्पकः च सुघोषमणिपुष्पकौ । इतरेतरद्वन्द्वसमासः ।

॥१-१६॥

Sentence 1:

राजा $^{1/1}$ कुन्तीपुत्रः $^{1/1}$ युधिष्ठिरः $^{1/1}$ अनन्तविजयम् $^{2/1}$ [दध्मौ $^{III/1}$]

Yudhiṣṭhiraḥ [blew his conch,] Anantavijaya.

Sentence 2:

नकुलः $^{1/1}$ सहदेवः $^{1/1}$ च $^{0}$ सुघोषमणिपुष्पकौ $^{2/2}$ [दध्मतुः $^{III/2}$]

Nakula and Sahadeva [blew their conch,] Sughoṣa and Maṇipuṣpaka.

॥१-१६॥

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**

**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १ -१ ७ ॥**

kāśyaśca parameṣvāsaḥ śikhaṇḍī ca mahārathaḥ |

dhṛṣṭadyumno virāṭaśca sātyakiścāparājitaḥ ||1-17||

काश्यः 1/1 च 0 परमेष्वासः 1/1 शिखण्डी 1/1 च 0 महारथः 1/1 ।

धृष्टद्युम्नः 1/1 विराटः 1/1 च 0 सात्यकिः 1/1 च 0 अपराजितः 1/1 ॥१-१७॥

- काश्यः [kāśyaḥ] = Kāśya, a king of Kāśī = काश्य + कर्तरि of [दध्मुः ] 1/1
- च [ca] = and = अव्ययम्
- परमेष्वासः [parameṣvāsaḥ] = one who has a great bow = परमेष्वास + adj. to काश्यः 1/1
  - इषुः (arrow) अस्यते (is thrown) अस्मिन् (in which) इति इष्वासं धनुः (bow) । UT
  - परमं (great) इष्वासं (bows) यस्य (whose) सः परमेष्वासः । 11B6
- शिखण्डी [śikhaṇḍī] = Śikhaṇḍin = शिखण्डिन् + कर्तरि of [दध्मुः ] 1/1
  - शिखण्दः (= शिखा , the taft of hair of Hindu man) अस्य अस्ति इति शिखण्डी । इनिँ
- च [ca] = and = अव्ययम्
- महारथः [mahārathaḥ] = the man of great valour = महारथ + adj. to शिखण्डी 1/1
- धृष्टद्युम्नः [dhṛṣṭadyumnaḥ] = Dhṛṣṭadyumna, a commander in chief of Pāṇḍava's army, a brother of Draupadī = धृष्टद्युम्न + कर्तरि of [दध्मुः ] 1/1
- विराटः [virāṭaḥ] = Virāṭa = विराट + कर्तरि of [दध्मुः ] 1/1
- सात्यकिः [sātyakiḥ] = Sātyaki = सात्यकि + कर्तरि of [दध्मुः ] 1/1
- च [ca] = and = अव्ययम्
- अपराजितः [aparājitaḥ] = unsurpassed = अपराजित + adj. to सात्यकिः 1/1

॥१-१७॥

All the words are connected to the next verse.

**द्रुपदो द्रौ पदेयाश्च सर्वशः पृथिवीपते ।**
**सौभद्रश्च महाबाहुः शङ् खान् दध्मुः पृथक् पृथक् ॥१-१८॥**

drupado draupadeyāśca sarvaśaḥ pṛthivīpate |

saubhadraśca mahābāhuḥ śaṅ-khān dadhmuḥ pṛthak pṛthak ||1-18||

द्रुपदः 1/1 द्रौ पदेयाः 1/3 च 0 सर्वशः 0 पृथिवीपते 8/1 ।

सौभद्रः 1/1 च 0 महाबाहुः 1/1 शङ्खान् 2/3 दध्मुः III/3 पृथक् 0 पृथक् 0॥१-१८॥

- द्रुपदः [drupadaḥ] = Drupada = द्रुपद + कर्तरि of [दध्मुः ] 1/1
- द्रोपदेयाः [draupadeyāḥ] = Draupadeyas, five sons of Daupadī = द्रोपदेय + कर्तरि of [दध्मुः ] 1/1
- च [ca] = and = अव्ययम्
- सर्वशः [sarvaśaḥ] = on all sides = अव्ययम्
- पृथिवीपते [pṛthivīpate] = O King! = पृथिवीपति + सम्बोधने 1/1
    - पृथिव्याः (of the earth) पतिः (lord) पृथिवीपतिः । Address of धृतराष्ट्र
- सौभद्रः [Saubhadraḥ] = Saubhadra, a son of Subhadrā, a wife of Arjuna = सौभद्र + कर्तरि of [दध्मुः ] 1/1
- च [ca] = and = अव्ययम्
- महाबाहुः [mahābāhuḥ] = one who has mighty arms = महाबाहु + Adj. to सौभद्रः 1/1
- शङ्खान् [śaṅkhān] = conches = शङ्ख + कर्मणि of [दध्मुः ] 2/1
- दध्मुः [dadhmuḥ] = blew = ध्मा (1P) to blow + लिट् /कर्तरि /III/3
- पृथक् पृथक् [pṛthak pṛthak] = separately = अव्ययम्

॥१-१८॥

Sentence: (Verse 17 and 18 together)

काश्यः 1/1 परमेष्वासः 1/1 च 0,

शिखण्डी [1/1] महारथः [1/1] च [0],

धृष्टद्युम्नः [1/1] च [0],

विराटः [1/1] च [0],

सात्यकिः [1/1] अपराजितः [1/1] च [0],

द्रुपदः [1/1] च [0],

द्रौ पदेयाः [1/3] च [0],

सौभद्रः [1/1] महाबाहुः [1/1] च [0],

सर्वशः [0] पृथक् [0] पृथक् [0] शङ्खान् [2/3] दध्मुः [III/3] । on all side those warriors blew their own conches separately.

पृथिवीपते [8/1] !

**स घोषो धार्तरष्ट्राणां हृदयानि व्यदारयत् ।**

**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १ -१ ९ ॥**

sa ghoṣo dhārtaraṣṭrāṇāṃ hṛdayāni vyadārayat |

nabhaśca pṛthivīṃ caiva tumulo vyanunādayan ||1-19||

सः [1/1] घोषः [1/1] धार्तरष्ट्राणाम् [6/3] हृदयानि [2/3] व्यदारयत् [III/1] ।

नभः [2/1] च [0] पृथिवीम् [2/1] च [0] एव [0] तुमुलः [1/1] व्यनुनादयन् [1/1] ॥१-१९ ॥

- सः [saḥ] = that = तद् (pron. M.) + adj. to घोषः 1/1
- घोषः [ghoṣaḥ] = sound = घोष (m.) + कर्तरि to व्यदारयत् 1/1
- धार्तरष्ट्राणाम् [dhārtaraṣṭrāṇām] = of the sons of Dṛtaraṣṭra = धार्तरष्ट्र (m.) + सम्बन्ध to हृदयानि 6/3
- हृदयानि [hṛdayāni] = hearts = हृदय (n.) + कर्म of व्यदारयत् 2/3
- व्यदारयत् [vyadārayat] = pierced = वि + दॄ (9P) to tear + णिच् (causative) + लङ् /कर्तरि /III/1
- नभः [nabhaḥ] = sky = नभस् (n.) + कर्म of व्यनुनादयन् 2/1
- च [ca] = and = अव्ययम्
- पृथिवीम् [pṛthivīm] = earth = पृथिवी (f.) + कर्मणि of व्यनुनादयन् 2/1
- च [ca] = and = अव्ययम्
- एव [eva] = indeed = अव्ययम्
- तुमुलः [tumulaḥ] = tremendous = तुमुल (m.) + adj. to घोषः 1/1
- व्यनुनादयन् [vyanunādayan] = reverberating = व्यनुनादयत् (m.) + adj. to घोषः 1/1
  - वि + अनु + नद् + णिच् (causative) to cause to resound+ शतृँ (one which is doing …) = व्यनुनादयत् one which is causing to resound

॥१-१९ ॥

Main sentence:

सः [1/1] तुमुलः [1/1] घोषः [1/1] धार्तरष्ट्राणाम् [6/3] हृदयानि [2/3] व्यदारयत् [III/1] । That tremendous sound pierced the hearts of the sons of Dṛtaraṣṭra

Description of घोषः (the sound)

नभः [2/1] च पृथिवीम् [2/1] च एव व्यनुनादयन् [1/1] । resounding between the sky and the earth

॥१-१९ ॥

**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।**

**प्रिवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ १ -२ ० ॥**

**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**

atha vyavasthitāndṛṣṭvā dhārtarāṣṭrān kapidhvajaḥ |

privṛtte śastrasampāte dhanurudyamya pāṇḍavaḥ ||1-20||

hṛṣīkeśaṃ tadā vākyamidamāha mahīpate |

अथ $^{0}$ व्यवस्थितान् $^{2/3}$ दृ ष्ट्वा $^{0}$ धार्तराष्ट्रान् $^{2/3}$ कपिध्वजः $^{1/1}$ ।

प्रिवृत्ते $^{7/1}$ शस्त्रसम्पाते $^{7/1}$ धनुः $^{2/1}$ उद्य म्य $^{0}$ पाण्डवः $^{1/1}$ ॥१-२०॥

हृषीकेशम् $^{2/1}$ तदा $^{0}$ वाक्यम् $^{2/1}$ इ दम् $^{2/1}$ अह $^{III/1}$ महीपते $^{8/1}$ ।

- अथ [atha] = then = अव्ययम्
- व्यवस्थितान् [vyavasthitān] = assembled = व्यवस्थित (m.) + adj. to धार्तराष्ट्रान् 2/3
- दृष्ट्वा [dṛṣṭvā] = having seen = अव्ययम्
  - दृश् (1P) to see + क्त्वा (having done …) = having seen
- धार्तराष्ट्रान् [dhārtarāṣṭrān] = the sons of Dṛtaraṣṭra = धार्तराष्ट्र (m.) + कर्म of दृष्ट्वा 2/3
  - धृतराष्ट्रस्य (of Dṛtaraṣṭra) अपत्यानि (sons) धार्तरष्ट्राः ।
  - धृतराष्ट्र + अण् = धार्तराष्ट्र । तस्यापत्यम्
- कपिध्वजः [kapidhvajaḥ] = one who has monkey (Hanumān) in his banner = कपिध्वज (m.) + adj. to पाण्डवः 1/1
  - कपिः (monkey) ध्वजे (in the flag) यस्य (of whom) सः कपिध्वजः । बहुव्रीहिसमासः
- प्रिवृत्ते [privṛtte] = ready = प्रिवृत्त (m.) + सति-सप्तमी 7/1
  - प्र + वृत् to engage + क्त
- शस्त्रसम्पाते [śastrasampāte] = battle = शस्त्रसम्पात (m.) + सति-सप्तमी 7/1

- शस्त्राणां (of weapons) सम्पातः (collision, meeting together, butting against, fight) शस्त्रसम्पातः । षष्ठीतत्पुरुषसमासः
- धनुः [dhanuḥ] = bow = धनुस् (n.) + कर्मणि of उद्यम्य 2/1
- उद्यम्य [udyamya] = having lifted up = अव्ययम्
  - उद् + यम् to raise, lift up + ल्यप्
- पाण्डवः [pāṇḍavaḥ] = Arjuna = पाण्डव (m.) + कर्तरि to [आह] 1/1
  - पाण्डोः (of Pāṇḍu) अपत्यम् (son) पाण्डवः ।
  - पाण्डु + अञ् = पाण्डो + अ = पाण्डव् + अ = पाण्डव । ओर्गुणः

॥१-२०॥

- हृषीकेशम् [hṛṣīkeśam] = to Kṛṣṇa = हृषीकेश (m.) + कर्म of आह 2/1
- तदा [tadā] = then = अव्ययम्
  - तद् (that) + दा (time) = तदा (then)
- वाक्यम् [vākyam] = sentence = वाक्य (n.) + कर्म of आह 2/1
  - Most of the धातु s indicating "to tell" take two कर्मs. (द्विकर्मकधातुः)
- इदम् [idam] = this = इदम् (pron. n.) + adj. to वाक्यम् 2/1
- आह [āha] = ब्रू (2U) to speak + लिट्/कर्तरि/III/1
- महीपते [mahīpate] = O King! = महीपति (m.) + सम्बोधने 1/1

Main sentence :

महीपते $^{8/1}$ तदा $^{0}$ पाण्डवः $^{1/1}$ हृषीकेशम् $^{2/1}$ इ दम् $^{2/1}$ वाक्यम् $^{2/1}$ अह $^{III/1}$।

O King! (महीपते $^{8/1}$) Then (तदा $^{0}$), Arjuna (पाण्डवः $^{1/1}$) told (अह $^{III/1}$) this (इ दम् $^{2/1}$) sentence (वाक्यम् $^{2/1}$) to Kṛṣṇa (हृषीकेशम् $^{2/1}$).

When? 1:

अथ $^{0}$ कपिध्वजः $^{1/1}$ व्यवस्थितान् $^{2/3}$ धार्तराष्ट्रान् $^{2/3}$ दृ ष्ट्वा $^{0}$ ।

Then (अथ $^{0}$) (after the blowing of conches), Arjuna (कपिध्वजः $^{1/1}$), having seen (दृ ष्ट्वा $^{0}$) the sons of Dṛtarașțra (धार्तराष्ट्रान् $^{2/3}$) assembling (व्यवस्थितान् $^{2/3}$),

When? 2:

शस्त्रसम्पाते $^{7/1}$ प्रिवृत्ते $^{7/1}$ (सति $^{7/1}$) धनुः $^{2/1}$ उद्य म्य $^{0}$ ।

When (सति $^{7/1}$) the battle (शस्त्रसम्पाते $^{7/1}$) is starting (प्रिवृत्ते $^{7/1}$), having lifted (उद्य म्य $^{0}$) the bow (धनुः $^{2/1}$),

**अर्जुन उवाच ।**

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥२१॥**

arjuna uvāca |

senayorubhayormadhye rathaṃ sthāpaya me'cyuta ||21||

अर्जुनः $^{1/1}$ उवाच $^{III/1}$ ।

सेनयोः $^{6/2}$ उभयोः $^{6/2}$ मध्ये $^{0}$ रथम् $^{2/1}$ स्थापय $^{II/1}$ मे $^{6/1}$ अच्युत $^{8/1}$ ॥२१॥

- अर्जुनः [arjunaḥ] = Arjuna = अर्जुन (m.) + कर्तरि to उवाच 1/1
- उवाच [uvāca] = said = वच् (2P) to tell + लिट्/कर्तरि/III/1
- सेनयोः [senayoḥ] = of the two army = सेना (f.) + सम्बन्धे to मध्ये 6/2
- उभयोः [ubhayoḥ] = of both = उभा (pron. f.) + adj. to सेनयोः 6/2
- मध्ये [madhye] = in the middle = अव्ययम्
    - This word takes 6$^{th}$ case.
- रथम् [ratham] = chariot = रथ (m.) + कर्म of स्थापय 2/1
- स्थापय [sthāpaya] = place = स्था (1P) to stay + णिच् (causative) + लोट्/कर्तरि/II/1
- मे [me] = my= अस्मद् (pron. m.) + सम्बन्धे to रथम् 6/1
    - Optional form of मम.
- अच्युत [acyuta] = Kṛṣṇa = अच्युत + सम्बोधने 1/1
    - न च्यवते इति अच्युतः । One who does not fall.

Sentence 1:

अर्जुनः $^{1/1}$ उवाच $^{III/1}$ । Arjuna said.

अच्युत $^{8/1}$ उभयोः $^{6/2}$ सेनयोः $^{6/2}$ मध्ये $^{0}$ मे $^{6/1}$ रथम् $^{2/1}$ स्थापय $^{II/1}$ ॥२१॥

O Kṛṣṇa! (अच्युत $^{8/1}$) Place (स्थापय $^{II/1}$) my (मे $^{6/1}$) charriot (रथम् $^{2/1}$) in the middle (मध्ये $^{0}$) of the both (उभयोः $^{6/2}$) army (सेनयोः $^{6/2}$).

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**

**कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥२२॥**

yāvadetānnirīkṣe'haṃ yoddhukāmānavasthitān |

kairmayā saha yoddhavyamasmin raṇasamudyame ||22||

यावत्$^{0}$ एतान्$^{2/3}$ निरीक्षे$^{I/1}$ अहम्$^{1/1}$ योद्धुकामान्$^{2/3}$ अवस्थितान्$^{2/3}$ ।

कैः$^{3/3}$ मया$^{3/1}$ सह$^{0}$ योद्धव्यम्$^{1/1}$ अस्मिन्$^{7/1}$ रणसमुद्यमे$^{7/1}$ ॥२२॥

- यावत् [yāvat] = so that = अव्ययम्
- एतान् [etān] = these = एतद् (pron. m.) + adj. to योद्धुकामान् 2/3
- निरीक्षे [nirīkṣe] = निर् + ईक्ष् to examine + लट्/कर्तरि/I/1
- अहम् [aham] = I = अस्मद् (pron. m.) + कर्तरि to निरीक्षे 1/1
- योद्धुकामान् [yoddhukāmān] = those who are desirous to fight = योद्धुकाम (m.) + कर्मणि to निरीक्षे 2/3
- अवस्थितान् [avasthitān] = standing = अवस्थित (m.) + adj. to योद्धुकामान् 2/3
    - अव + स्था to stand+ क्त (कर्तरि) = अवस्थित
- कैः [kaiḥ] = with whom = किम् (pron. m.) + सहतृतीया 3/3
- मया [mayā] = by me = अस्मद् (pron. m) + कर्तरि of योद्धव्यम् 3/1
- सह [saha] = with = अव्ययम्
- योद्धव्यम् [yoddhavyam] = Battle should be done = योद्धव्य + कर्तरि to [भवति] 1/1
    - युध् + तव्य (भावे the meaning of the धातु itself, and the sense of necessity) = योद्धव्य
- अस्मिन् [asmin] = in this = इदम् (pron. m.) + adj. to रणसमुद्यमे 7/1
- रणसमुद्यमे [raṇasamudyame] = onset of battle = रणसमुद्यम (m.) + अधिकरणे to योद्धव्यम् 7/1
    - रणस्य (of the battle) समुद्यमः (onset) रणसमुद्यमः, तस्मिन् (in that)।

Sentence 1: (continuing from the previous verse)

यावत्$^{0}$ अहम्$^{1/1}$ एतान्$^{2/3}$ अवस्थितान्$^{2/3}$ योद्धुकामान्$^{2/3}$ निरीक्षे$^{I/1}$ ।

So that (यावत्$^{0}$) I (अहम्$^{1/1}$) can examine (निरीक्षे$^{I/1}$) these (एतान्$^{2/3}$) standing (अवस्थितान्$^{2/3}$) desirous to fight (योद्धुकामान्$^{2/3}$).

Sentence 2: (and I can examine also)

कैः$^{3/3}$ सह$^{0}$ मया$^{3/1}$ योद्धव्यम्$^{1/1}$ अस्मिन्$^{7/1}$ रणसमुद्यमे$^{7/1}$ ॥२२॥

With (सह$^{0}$) whom (कैः$^{3/3}$) I should fight (मया$^{3/1}$ योद्धव्यम्$^{1/1}$) (this is impersonal voice) in this (अस्मिन्$^{7/1}$) onset of battle (रणसमुद्यमे$^{7/1}$).

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**

**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥**

yotsyamānānavekṣe'haṃ ya ete'tra samāgatāḥ |

dhārtarāṣṭrasya durbuddheryuddhe priyacikīrṣavaḥ ||23||

योत्स्यमानान् 2/3 अवेक्षे I/1 अहम् 1/1 ये 1/3 एते 1/3 अत्र 0 समागताः 1/3 ।

धार्तराष्ट्रस्य 6/1 दुर्बुद्धेः 6/1 युद्धे 7/1 प्रियचिकीर्षवः 1/3 ॥२३॥

- योत्स्यमानान् [yotsyamānān] = those who are going to fight = योत्स्यमान (m.) + कर्मणि of अवेक्षे 2/3
    - युध् (4A) to fight + लृट् (future)
    = योध् + शानच्
    = योध् + स्य + शानच्
    = योत् + स्य + मान
- अवेक्षे [avekṣe] = (I) see = अव + ईक्ष् to see + लट् /कर्तरि /I/1
- अहम् [aham] = I = अस्मद् (pron. m.) + कर्तरि of अवेक्षे 1/1
- ये [ye] = those who= यद् (pron. m.) + कर्तरि of [भवन्ति ] 1/3
- एते [ete] = these= एतद् (pron. m.) + 1/3
- अत्र [atra] = here = अव्ययम्
- समागताः [samāgatāḥ] = gethered = समागत (m.) + 1/3
    - सम् + आ+ गम् to come together + क्त (कर्तरि ) = समागत those who have gethered
- धार्तराष्ट्रस्य [dhārtarāṣṭrasya] = of Duryodhana = धार्तराष्ट्र (m.) + सम्बन्धे to प्रिय 6/1
- दुर्बुद्धेः [durbuddheḥ] = the one whose mind is distorted = दुर्बुद्धि (m.) + adj. to धार्तराष्ट्रस्य 6/1
- युद्धे [yuddhe] = in the battle = युद्ध (m) + अधिकरणे 7/1
- प्रियचिकीर्षवः [priyacikīrṣavaḥ] = those who want to please = प्रियचिकीर्षु (m.) + 1/3
    - प्रियं कर्तुम् इच्छवः

॥१-२ ३॥

Main sentence:

अहम् $^{1/1}$ योत्स्यमानान् $^{2/3}$ अवेक्षे $^{I/1}$ । I see those who are desirous to fight.

Description of योत्स्यमानान् by using यद् clause:

ये $^{1/3}$ एते $^{1/3}$ अत्र $^{0}$ समागताः $^{1/3}$ धार्तराष्ट्रस्य $^{6/1}$ दुर्बुद्धेः $^{6/1}$ युद्धे $^{7/1}$ प्रियचिकीर्षवः $^{1/3}$ ॥२३॥ Those who (ये $^{1/3}$ एते $^{1/3}$) are gethered (समागताः $^{1/3}$) here (अत्र $^{0}$) and wanding to please (प्रियचिकीर्षवः $^{1/3}$) Duryodhana (धार्तराष्ट्रस्य $^{6/1}$) whose mind is distorted (दुर्बुद्धेः $^{6/1}$) in the battle (युद्धे $^{7/1}$).

**सञ्जय उवाच ।**

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।**

**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥**

sañjaya uvāca |

evamukto hṛṣīkeśo guḍākeśena bhārata |

senayorubhayormadhye sthāpayitvā rathottamam ||24||

सञ्जयः 1/1 उवाच III/1 ।

एवम् 0 उक्तः 1/1 हृषीकेशः 1/1 गुडाकेशेन 3/1 भारत 8/1 ।

सेनयोः 6/2 उभयोः 6/2 मध्ये 0 स्थापयित्वा 0 रथोत्तमम् 2/1 ॥२४॥

- सञ्जयः [sañjayaḥ] = Sañjaya = सञ्जय (m.) + कर्तरि of उवाच 1/1
- उवाच [uvāca] = said = वच् (2P) to say + लिट् /कर्तरि /III/1
- एवम् [evam] = thus = अव्ययम्
- उक्तः [uktaḥ] = one who was told = उक्त (m.) + adj. to हृषीकेशः 1/1
- हृषीकेशः [hṛṣīkeśaḥ] = Hṛṣīkeśa = हृषीकेश (m.) + कर्तरि of [उवाच in the next verse] 1/1
    - हृषीकानाम् (of senses) ईशः (lord) इति हृषीकेशः । षष्ठीतत्पुरुषः ।
- गुडाकेशेन [guḍākeśena] = by Arjuna = गुडाकेश (m.) + कर्तरि of एवमुक्तः 3/1
    - गुडाकायाः (of sleep) ईशः (master) इति गुडाकेशः । षष्ठीतत्पुरुषः ।
- भारत [bhārata] = O Descendant of Bharata! = भारत + सम्बोधने 1/1
- सेनयोः [senayoḥ] = of the two army = सेना (f.) + सम्बन्धे to मध्ये 6/2
- उभयोः [ubhayoḥ] = of both = उभा (pron. f.) + adj. to सेनयोः 6/2
- मध्ये [madhye] = in the middle = अव्ययम्
    - This word takes 6th case.
- स्थापयित्वा [sthāpayitvā] = having stationed = अव्ययम्

- स्था + णिच् (causative) to place, station + त्वा (having done …)

- रथोत्तमम् [rathottamam] = the greated chariot = रथोत्तम (m.) + कर्मणि of स्थापयित्वा 2/1
  - रथानाम् (of chariots) उत्तमः (the best) रथोत्तमः । षष्ठीतत्पुरुषः ।

**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।**

**उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥२५॥**

bhīṣmadroṇapramukhataḥ sarveṣāṃ ca mahīkṣitām |

uvāca pārtha paśyaitān samavetān kurūniti ||25||

भीष्मद्रोणप्रमुखतः [0] सर्वेषाम् [6/3] च महीक्षिताम् [6/3] ।

उवाच [III/1] पार्थ [8/1] पश्य [II/1] एतान् [2/3] समवेतान् [2/3] कुरून् [2/3] इति [0] ॥२५॥

- भीष्मद्रोणप्रमुखतः [bhīṣmadroṇapramukhataḥ] = facing Bhīṣma and Droṇa= अव्ययम्
  - भीष्मः च द्रोणः च भीष्मद्रोणौ । इतरेतरद्वन्द्वसमासः ।
  - भीष्मद्रोणाभ्यां प्रमुखम् । headed by Bhīṣma and Droṇa
  - भीष्मद्रोणप्रमुखे । in front of Bhīṣma and Droṇa
- सर्वेषाम् [sarveṣām] = of all = सर्व (pron. m.) + adj. to महीक्षिताम् 6/3
- च [ca] = and = अव्ययम्
- महीक्षिताम् [mahīkṣitām] = rulers = महीक्षित् (m.) + सम्बन्धे to [प्रमुखतः ] 6/3
  - महीं क्षयति इति महीक्षित् ।
  - मही + क्षि (1P) to rule, govern + क्विप्
- उवाच [uvāca] = [हृषीकेशः ] said = वच् (2P) to say + लिट् /कर्तरि /III/1
- पार्थ [pārtha] = O Arjuna! = पार्थ (m.) + सम्बोधने 1/1
- पश्य [paśya] = see = दृश् (1P) to see + लोट् /कर्तरि /II/1
- एतान् [etān] = these = एतद् (pron. m.) + adj. to कुरून् 2/3
- समवेतान् [samavetān] = assembled = समवेत (m.) + adj. to कुरून् 2/3
  - सम् + अव + इण् to meet + क्त (कर्तरि ) = समवेत
- कुरून् [kurūn] = members of कुरु family = कुरु (m.) + कर्मणि of पश्य 2/3
- इति [iti] = thus = अव्ययम्

Main Sentence (continued form the previous verse):

[हृषीकेशः [1/1]] भीष्मद्रोणप्रमुखतः [0] सर्वेषाम् [6/3] च महीक्षिताम् [6/3] उवाच [III/1]। Kṛṣṇa (हृषीकेशः [1/1]) said (उवाच [III/1]) in front of Bhīṣma and Droṇa (भीष्मद्रोणप्रमुखतः [0]) and (च) all (सर्वेषाम् [6/3]) the rulers (महीक्षिताम् [6/3]).

What he said is told in the quote indicated by "इति":

पार्थ [8/1] पश्य [II/1] एतान् [2/3] समवेतान् [2/3] कुरून् [2/3] इति [0] ॥२५॥ O Arjuna! (पार्थ [8/1]) see (पश्य [II/1]) these (एतान् [2/3]) family members of Kuru (कुरून् [2/3]) assembled (समवेतान् [2/3]) [in the battle field].

**तत्रापश्यत् स्थितान् पार्थः पितॄन् अथ पितामहान् ।**

**आचार्यान् मातुरान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ॥२६ ॥**

tatrāpaśyat sthitān pārthaḥ pitṝn atha pitāmahān |

ācāryān māturān bhrātṝn putrān pautrān sakhīṃstathā ||26||

तत्र [0] अपश्यत् [III/1] स्थितान् [2/3] पार्थः [1/1] पितॄन् [2/3] अथ [0] पितामहान् [2/3] ।

आचार्यान् [2/3] मातुरान् [2/3] भ्रातॄन् [2/3] पुत्रान् [2/3] पौत्रान् [2/3] सखीन् [2/3] तथा [0] ॥२६ ॥

- तत्र [tatra] = there = अव्ययम्
    - तद् + त्रल् (in the sense of 7th case ending) = तत्र = तस्मिन् = there
- अपश्यत् [apaśyat] = दृश् (2P) to see + लङ् /कर्तरि/III/1
- स्थितान् [sthitān] = those standing = स्थित (m.) + कर्म of अपश्यत् 2/3
- पार्थः [pārthaḥ] = Arjuna = पार्थ (m.) + कर्तरि to अपश्यत् 1/1
    - पृथायाः (of Pṛthā) अपत्यं पुमान् (son) पार्थः ।
- पितॄन् [pitṝn] = fathers = पितृ (m.) + कर्म of अपश्यत् 2/3
- अथ [atha] = then = अव्ययम्
- पितामहान् [pitāmahān] = grandfathers = पितामह (m.) + कर्म of अपश्यत् 2/3
- आचार्यान् [ācāryān] = teachers = आचार्य (m.) + कर्म of अपश्यत् 2/3
- मातुरान् [māturān] = uncles = मातुर (m.) + कर्म of अपश्यत् 2/3
- भ्रातॄन् [bhrātṝn] = brothers = भ्रातृ (m.) + कर्म of अपश्यत् 2/3
- पुत्रान् [putrān] = sons = पुत्र (m.) + कर्म of अपश्यत् 2/3
- पौत्रान् [pautrān] = grandsons = पौत्र (m.) + कर्म of अपश्यत् 2/3
- सखीन् [sakhīn] = friends = सखि (m.) + कर्म of अपश्यत् 2/3
- तथा [tathā] = and also = अव्ययम्

Main sentence:

अथ $^{0}$ पार्थः $^{1/1}$ तत्र $^{0}$ स्थितान् $^{2/3}$ अपश्यत् $^{III/1}$ । Then (अथ $^{0}$) Arjuna (पार्थः $^{1/1}$) saw (अपश्यत् $^{III/1}$) those who are standing (स्थितान् $^{2/3}$) there (तत्र $^{0}$).

Whom did he see?:

पितॄन् $^{2/3}$ पितामहान् $^{2/3}$ आचार्यान् $^{2/3}$ मातुरान् $^{2/3}$
भ्रातॄन् $^{2/3}$ पुत्रान् $^{2/3}$ पौत्रान् $^{2/3}$ सखीन् $^{2/3}$ तथा $^{0}$ ॥२६ ॥

To be continued…

**श्वश्रान् सुहृदश्चैव सेनयोरुभयोरपि ।**

**तान् समीक्ष्य स कौन्तेयः सर्वान्**
**बन्धून् अवस्थितान् ॥२७ ॥**

śvaśrān suhṛdaścaiva senayorubhayorapi |

tān samīkṣya sa kaunteyaḥ sarvān bandhūn avasthitān ||27||

श्वश्रान् 2/3 सुहृ दः 2/3 च 0 एव 0 सेनयोः 7/2 उभयोः 7/2
अपि 0 ।

तान् 2/3 समीक्ष्य 0 सः 1/1 कौन्तेयः 1/1 सर्वान् 2/3
बन्धून् 2/3 अवस्थितान् 2/3 ॥२७ ॥

- श्वश्रान् [śvaśrān] = fathers-in-law = श्वश्र (m.) + कर्म of अपश्यत् 2/3
- सुहृदः [suhṛdaḥ] = friends = सुहृद् (m.) + कर्म of अपश्यत् 2/3
- च [ca] = and = अव्ययम्
- एव [eva] = indeed = अव्ययम्
- सेनयोः [senayoḥ] = of the two army = सेना (f.) + सम्बन्धे to मध्ये 6/2
- उभयोः [ubhayoḥ] = of both = उभा (pron. f.) + adj. to सेनयोः 6/2
- अपि [api] = also = अव्ययम्
- तान् [tān] = them = तद् (pron. m.) + कर्म of समीक्ष्य 2/3
- समीक्ष्य [samīkṣya] = having seen = अव्ययम्
    - सम् + ईक्ष् to see + ल्यप् (having done …)
- सः [saḥ] = that = तद् (pron. m.) + adj. to कौन्तेयः 1/1
- कौन्तेयः [kaunteyaḥ] = Arjuna = अर्जुन (m.) + कर्तरि to [अब्रवीत् in the next verse] 1/1
- सर्वान् [sarvān] = all = सर्व (pron. m.) + कर्म of समीक्ष्य 2/3
- बन्धून् [bandhūn] = relatives = बन्धु (m.) + कर्म of समीक्ष्य 2/3
- अवस्थितान् [avasthitān] = relatives = अवस्थित (m.) + कर्म of समीक्ष्य 2/3
    - अव + स्था + क्त

॥२७॥

Sentence 1 (continued from the previous sentence):

श्वश्रान् $^{2/3}$ सुहृदः $^{2/3}$ च $^{0}$ एव $^{0}$ सेनयोः $^{7/2}$ उभयोः $^{7/2}$ अपि $^{0}$ ।
[Arjuna saw] fathers-in-law (श्वश्रान् $^{2/3}$), and (च $^{0}$ एव $^{0}$) friends (सुहृदः $^{2/3}$) in the both sides (उभयोः $^{7/2}$ अपि $^{0}$) of army (सेनयोः $^{7/2}$).

Sentence 2:

सः $^{1/1}$ कौन्तेयः $^{1/1}$ तान् $^{2/3}$ सर्वान् $^{2/3}$ बन्धून् $^{2/3}$ अवस्थितान् $^{2/3}$ समीक्ष्य $^{0}$ ॥२७॥ That (सः $^{1/1}$) Arjuna (कौन्तेयः $^{1/1}$), having seen (समीक्ष्य $^{0}$) those (तान् $^{2/3}$) alll (सर्वान् $^{2/3}$) relatives (बन्धून् $^{2/3}$) standing (अवस्थितान् $^{2/3}$) … to be continued to the next verse.

**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।**

**अर्जुन उवाच ।**

**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥**

kṛpayā parayāviṣṭo viṣīdannidamabravīt |

arjuna uvāca |

dṛṣṭvemaṃ svajanaṃ kṛṣṇa yuyutsuṃ samupasthitam ||28||

कृपया 3/1 परया 3/1 अवि ष्टः 1/1 विषीद न् 1/1 इ द म् 2/1 अब्रवीत् III/1 ।

अर्जु नः 1/1 उवाच III/1 ।

दृ ष्ट्वा 0 इ मम् 2/1 स्वजन म् 2/1 कृष्ण 8/1 युयु त्सुम् 2/1 समुपस्थितम् 2/1 ॥ २ ८ ॥

- कृपया [kṛpayā] = by compassion = कृपया (f.) + कर्तरि of आविष्टः 3/1
- परया [parayā] = great = परा (f.) + adj. to कृपया 3/1
- आविष्टः [āviṣṭaḥ] = being seized = आविष्ट (m.) + adj. to [कौन्तेयः in the previous verse] 1/1
    - आ+ विश् to possess + क्त (…ed) = आविष्ट (possessed)
- विषीदन् [viṣīdan] = being sorrowful = विषीदत् (m.) + adj. to [कौन्तेयः in the previous verse] 1/1
    - वि + सद् to be afflicted + शतृ (one who is …ing) = विषीदत्
- इदम् [idam] = this (these words) = इदम् (pron. m.) + कर्मणि of अब्रवीत् 2/1
- अब्रवीत् [abravīt] = said = ब्रू to say + लङ् /कर्तरि /III/1
- अर्जुनः [arjunaḥ] = Arjuna = अर्जुन (m.) + कर्तरि to उवाच 1/1
- उवाच [uvāca] = वच् (2P) to tell + लिट्/कर्तरि/III/1
- दृष्ट्वा [dṛṣṭvā] = having seen = अव्ययम्
    - दृश् (to see) + त्वा (having done …)
- इमम् [imam] = this = इदम् (pron. m.) + adj. to स्वजनम् 2/1
- स्वजनम् [svajanam] = our own people = स्वजन (m.) + कर्मणि of दृष्ट्वा 2/1

Sentence 1:

महानुभावान्$^{2/3}$ गुरून्$^{2/3}$ अहत्वा$^{0}$ हि$^{0}$

इह$^{0}$ लोके$^{7/1}$ भैक्ष्यम्$^{2/1}$ अपि$^{0}$ भोक्तुम्$^{0}$ श्रेयः$^{1/1}$ [स्यात्$^{III/1}$] ।

It would be ([स्यात्$^{III/1}$]) better (श्रेयः$^{1/1}$) to eat (भोक्तुम्$^{0}$) even (अपि$^{0}$) the food collected from others (भैक्ष्यम्$^{2/1}$) here (इह$^{0}$) in this world (लोके$^{7/1}$) after not killing (अहत्वा$^{0}$) highly exalted (महानुभावान्$^{2/3}$) teachers (गुरून्$^{2/3}$).

Sentence 2:

गुरून्$^{2/3}$ हत्वा$^{0}$

इह$^{0}$ एव$^{0}$ रुधिरप्रदिग्धान्$^{2/3}$ अर्थकामान्$^{2/3}$ भोगान्$^{2/3}$ भुञ्जीय$^{I/1}$ ॥२.५॥

Having killed (हत्वा$^{0}$) the teachers (गुरून्$^{2/3}$), I would experience (भुञ्जीय$^{I/1}$) enjoyments (भोगान्$^{2/3}$), which are securites and pleasures (अर्थकामान्$^{2/3}$), and which are stained with blood (रुधिरप्रदिग्धान्$^{2/3}$).

**न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।**

**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥२.६॥**

na caitadvidmaḥ kataranno garīyo yadvā jayema yadi vā no jayeyuḥ |

yāneva hatvā na jijīviṣāmaste'vasthitāḥ pramukhe dhārtarāṣṭrāḥ ||2.6||

न$^{0}$ च$^{0}$ एतद्$^{2/1}$ विद्मः$^{I/3}$ कतरत्$^{2/1}$ नः$^{6/3}$ गरीयः$^{2/1}$ यद्$^{0}$ वा$^{0}$ जयेम$^{I/3}$ यदि$^{0}$ वा$^{0}$ नः$^{2/3}$ जयेयुः$^{III/3}$ ।

यान्$^{2/3}$ एव$^{0}$ हत्वा$^{0}$ न$^{0}$ जिजीविषामः$^{I/3}$ ते$^{1/3}$ अवस्थिताः$^{1/3}$ प्रमुखे$^{7/1}$ धार्तराष्ट्राः$^{1/3}$ ॥२.६॥

जीव् to live + सन् to desire to … = जिजीविष to desire to live

जिजीविष + लट्/कर्तरि/I/3 = जिजीविषामः we desire to live

- न [na] = not = अव्ययम्
- च [ca] = and = अव्ययम्
- एतद् [etad] = this = एतद् (pron. n.) + कर्मणि 2/1
- कतरत् [katarat] = which of the two = कतरत् (pron. n.) + कर्मणि 2/1
- नः [naḥ] = for us = अस्मद् (pron. m.) + सम्बन्धे 6/3
- गरीयः [garīyaḥ] = better = गरीयस् (n.) + कर्मणि 2/1
    - गुरु (great) + ईयसुँन् (comperative)
- यद् [yad] = if = अव्ययम्
- वा [vā] = or = अव्ययम्
- जयेम [jayema] = we would win = जि (1P) to conquar + विधिलिङ्/कर्तरि/I/3
- यदि [yadi] = if = अव्ययम्
- वा [vā] = or = अव्ययम्
- नः [naḥ] = over us = अस्मद् (pron. m.) + कर्मणि to जयेयुः 2/3
- जयेयुः [jayeyuḥ] = they would win = जि (1P) to conquar + विधिलिङ्/कर्तरि/ III/3
- यान् [yān] = them = यद् (pron. m.) + कर्मणि to हत्वा 2/3
- एव [eva] = indeed = अव्ययम्
- हत्वा [hatvā] = having killed = अव्ययम्
    - हन् to kill, injure + क्त्वा
- न [na] = not = अव्ययम्
- जिजीविषामः [jijīviṣāmaḥ] = we want to live = जिजीविष to desire to live + विधिलिङ्/कर्तरि/I/3
    - जीवितुम् इच्छामः इति जिजीविषामः ।
    - जीव् (1P to live) + सन् (to desire to …) = जिजीविष
- ते [te] = they = तद् (pron. m.) + 1/3
- अवस्थिताः [avasthitāḥ] = standing = अवस्थित (m.) + 1/3
    - अव + स्था (to stand) + क्त (कर्तरि)
- प्रमुखे [pramukhe] = in the battle = सङ्ख्य (n.) + अधिकरणे to रथोपस्थे 7/1
- धार्तराष्ट्राः [dhārtarāṣṭrāḥ] = sons of Dhṛtarāṣṭra = धार्तराष्ट्र (m.) + कर्तरि to हन्युः 1/3

Sentence 1:

न $^{0}$ च $^{0}$ एतद् $^{2/1}$कतरत् $^{2/1}$ नः $^{6/3}$ गरीयः $^{2/1}$ विद्मः $^{I/3}$ यद् $^{0}$ वा $^{0}$ जयेम $^{I/3}$ यदि $^{0}$ वा $^{0}$ नः $^{2/3}$ जयेयुः $^{III/3}$।

And (च $^{0}$), we do not (न $^{0}$) know (विद्मः $^{I/3}$) which of the two (कतरत् $^{2/1}$) will be better (गरीयः $^{2/1}$) for us (नः $^{6/3}$) – that (एतद् $^{2/1}$) we should conquer them (जयेम $^{I/3}$) or that they should conquer (जयेयुः $^{III/3}$) us (नः $^{2/3}$).

Sentence 2:

यान् $^{2/3}$ एव $^{0}$ हत्वा $^{0}$ न $^{0}$ जिजीविषामः $^{I/3}$

ते $^{1/3}$ अवस्थिताः $^{1/3}$ प्रमुखे $^{7/1}$ धार्तराष्ट्राः $^{1/3}$ ॥२.६॥

The sons of Dhṛtarāṣṭra (धार्तराष्ट्राः $^{1/3}$), after slaying (हत्वा $^{0}$) whom (यान् $^{2/3}$) we will indeed (एव $^{0}$) not (न $^{0}$) want to live (जिजीविषामः $^{1/3}$), stand (ते $^{1/3}$ अवस्थिताः $^{1/3}$) facing us (प्रमुखे $^{7/1}$).

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः ।**

**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥२.७॥**

kārpaṇyadoṣopahatasvabhāvaḥ pṛcchāmi tvāṃ dharmasammūḍhacetāḥ |

yacchreyaḥ syānniścitaṃ brūhi tanme śiṣyaste:'haṃ śādhi māṃ tvāṃ prapannam ||2.7||

कार्पण्यदोषोपहतस्वभावः $^{1/1}$ पृच्छामि $^{I/1}$ त्वाम् $^{2/1}$ धर्मसम्मूढचेताः $^{1/1}$ ।

यत् $^{1/1}$ श्रेयः $^{1/1}$ स्यात् $^{III/1}$ निश्चितम् $^{1/1}$ ब्रूहि $^{II/1}$ तत् $^{2/1}$ मे $^{4/1}$ शिष्यः $^{1/1}$ ते $^{6/1}$ अहम् $^{1/1}$ शाधि $^{II/1}$ माम् $^{2/1}$ त्वाम् $^{2/1}$ प्रपन्नम् $^{2/1}$ ॥२.७॥

- कार्पण्यदोषोपहतस्वभावः [kārpaṇyadoṣopahatasvabhāvaḥ] = one who is overcome by faint-heartedness = कार्पण्यदोषोपहतस्वभाव (m.) + adj. to Arjuna 1/1
    - कृपणस्य (of miser) भावः (status) कार्पण्यम् (miserliness) ।
    - कार्पण्यम् एव दोषः (limitation) कार्पण्यदोषः । कर्मधारयतत्पुरुषसमासः
    - कार्पण्यदोषेण (by the limitation which is miserliness) उपहतः (overpowered) स्वभावः (one's nature) यस्य (for whom) सः कार्पण्यदोषोपहतस्वभावः । बहुव्रीहिसमासः 311-6B
- पृच्छामि [pṛcchāmi] = I ask = प्रछ् (6P) to question + लट्/कर्तरि/I/1
- त्वाम् [tvām] = you = युष्मद् (pron. m.) + कर्मणि to पृच्छामि 2/1

- धर्मसम्मूढचेताः [dharmasammūḍhacetāḥ] = confused about my duty= धर्मसम्मूढचेतस् (m.) + adj. to Arjuna 1/1
    - धर्मे [विषये] (about duty) सम्मूढं (confused) चेतः (mind) यस्य (for whom) सः धर्मसम्मूढचेताः । बहुव्रीहिसमासः 711-6B
- यद् [yad] = that which = यद् (pron. n.) + 1/1
- श्रेयः [śreyaḥ] = better = श्रेयस् (n.) + 1/1
- स्यात् [syāt] = would be = अस् (2P) to be + विधिलिङ्/कर्तरि/ III/1
- निश्चितम् [niścitam] = definetely = निश्चित (n.) + adj. to श्रेयः 1/1
- ब्रूहि [brūhi] = please tell = ब्रू (2P) to tell + लोट्/कर्तरि/II/1
- तद् [tad] = that = तद् (pron. n.) + कर्मणि to ब्रूहि 2/1
- मे [me] = for me = अस्मद् (pron. m.) + संप्रदाने to ब्रूहि 4/1
- शिष्यः [śiṣyaḥ] = student = शिष्य (m.) + 1/1
- ते [te] = your = युष्मद् (pron. m.) + सम्बन्धने 6/1
- अहम् [aham] = I = अस्मद् (pron. m.) + 1/1
- शाधि [śādhi] = please teach = शास् (2P) to teach + लोट्/कर्तरि/II/1
- माम् [mām] = me = अस्मद् (pron. m.) + कर्मणि to शाधि 2/1
- त्वाम् [tvām] = to you = युष्मद् (pron. m.) + कर्मणि to प्रपन्नम् 2/1
- प्रपन्नम् [prapannam] = one who has taken refuge = प्रपन्न (m.) + adj. to माम् 2/1
    - प्र + पद् (to take refuge) + क्त (कर्तरि)

Main sentence 1:

कार्पण्यदोषोपहतस्वभावः $^{1/1}$ धर्मसम्मूढचेताः $^{1/1}$ [अहं $^{1/1}$] त्वाम् $^{2/1}$ पृच्छामि $^{I/1}$ ।

Overcome by faint-heartedness (कार्पण्यदोषोपहतस्वभावः $^{1/1}$), confused about my duty (धर्मसम्मूढचेताः $^{1/1}$), I ask (पृच्छामि $^{I/1}$) you (त्वाम् $^{2/1}$).

Sentence 2 – तद् clause:

तत् $^{2/1}$ मे $^{4/1}$ ब्रूहि $^{II/1}$

Please tell (ब्रूहि $^{II/1}$) me (मे $^{4/1}$) that (तत् $^{2/1}$)

Sentence 2 – यद् clause:

यत् $^{1/1}$ श्रेयः $^{1/1}$ स्यात् $^{III/1}$ निश्चितम् $^{1/1}$

which (यत् $^{1/1}$) is (स्यात् $^{III/1}$) definitely (निश्चितम् $^{1/1}$) better for me (श्रेयः $^{1/1}$).

Sentence 3:

अहम् $^{1/1}$ ते $^{6/1}$ शिष्यः $^{1/1}$

I am (अहम् $^{1/1}$) your (ते $^{6/1}$) student (शिष्यः $^{1/1}$).

Sentence 4:

माम् $^{2/1}$ त्वाम् $^{2/1}$ प्रपन्नम् $^{2/1}$ शाधि $^{II/1}$ ॥२.७॥

Please teach (शाधि $^{II/1}$) me (माम् $^{2/1}$), who has taken refuge (प्रपन्नम् $^{2/1}$) in you (त्वाम् $^{2/1}$).

**न हि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोशनमिन्द्रियाणाम् ।**

**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥२.८॥**

na hi prapaśyāmi mamāpanudyād yacchokamucchośanamindriyāṇām |

avāpya bhūmāvasapatnamṛddhaṃ rājyaṃ surāṇāmapi cādhipatyam ||2.8||

न $^{0}$ हि $^{0}$ [तत् $^{2/1}$] प्रपश्यामि $^{I/1}$ मम $^{6/1}$ अपनुद्यात् $^{III/1}$ यत् $^{1/1}$ शोकम् $^{2/1}$ उच्छोशनम् $^{2/1}$ इन्द्रियाणाम् $^{6/3}$ ।

अवाप्य $^{0}$ भूमौ $^{7/1}$ असपत्नम् $^{2/1}$ ऋद्धम् $^{2/1}$ राज्यम् $^{2/1}$ सुराणाम् $^{6/3}$ अपि $^{0}$ च $^{0}$ आधिपत्यम् $^{2/1}$ ॥२.८॥

- न [na] = not = अव्ययम्
- हि [hi] = indeed = अव्ययम्
- प्रपश्यामि [prapaśyāmi] = I see = प्र + दृश् (1P) to see + लट्/कर्तरि/I/1
- मम [mama] = my = अस्मद् (pron. m.) + सम्बन्धे to इन्द्रियाणाम् 6/1

- अपनुद्यात् [apanudyāt] = would remove = अप + नुद् (6P) to remove + विधिलिङ्/कर्तरि/III/1
- यत् [yat] = this = यद् (pron. n.) + कर्तरि to अपनुद्यात् 1/1
- शोकम् [śokam] = sorrow = शोक (m.) + कर्मणि to अपनुद्यात् 2/1
- उच्छोशनम् [ucchośanam] = drying up = उच्छोशन (m.) + adj. to शोकम् 2/1
- इन्द्रियाणाम् [indriyāṇām] = of senses = इन्द्रिय (n.) + सम्बन्धे to उच्छोशनम् 6/3
- अवाप्य [avāpya] = having gained = अव्ययम्
    - अव + आप् to gain + ल्यप् (having …ed)
- भूमौ [bhūmau] = on the earth = भूमि (f.) + अधिकरणे to राज्यम् 7/1
- असपत्नम् [asapatnam] = unrivalled = असपत्न (n.) + adj. to राज्यम् 2/1
    - अविद्यमानं (non-existant) सपत्नं (enemy) यस्य (for it) तत् असपत्नं = राज्यम् । नञ्बहुव्रीहिसमासः
- ऋद्धम् [ṛddham] = prosperous = ऋद्ध (n.) + adj. to राज्यम् 2/1
- राज्यम् [rājyam] = kingdom = राज्य (n.) + कर्मणि to अवाप्य 2/1
- सुराणाम् [surāṇām] = of the denizens of heaven = सुर (m.) + सम्बन्धे to आधिपत्यम् 6/3
- अपि [api] = even = अव्ययम्
- च [ca] = and = अव्ययम्
- आधिपत्यम् [ādhipatyam] = sovereignty = आधिपत्य (n.) + कर्मणि to अवाप्य 2/1

Sentence:

न $^{0}$ हि $^{0}$ प्रपश्यामि $^{I/1}$

यत् $^{1/1}$ शोकम् $^{2/1}$ मम $^{6/1}$ इन्द्रियाणाम् $^{6/3}$ उच्छोशनम् $^{2/1}$ अपनुद्यात् $^{III/1}$ ।

असपत्नम् $^{2/1}$ ऋद्धम् $^{2/1}$ राज्यम् $^{2/1}$ भूमौ $^{7/1}$ अपि $^{0}$ च $^{0}$ सुराणाम् $^{6/3}$ आधिपत्यम् $^{2/1}$ अवाप्य $^{0}$ ॥२.८॥

I do not (न $^{0}$ हि $^{0}$) see (प्रपश्यामि $^{I/1}$)

that (यत् $^{1/1}$) will remove (अपनुद्यात् $^{III/1}$) the sorrow (शोकम् $^{2/1}$) that dries up (उच्छोशनम् $^{2/1}$) my (मम $^{6/1}$) senses (इन्द्रियाणाम् $^{6/3}$), even if I were to obtain (अवाप्य $^{0}$) an unrivalled (असपत्नम् $^{2/1}$) and prosperous (ऋद्धम् $^{2/1}$) kingdom (राज्यम् $^{2/1}$) on earth (भूमौ $^{7/1}$) and (च $^{0}$) sovereignty (आधिपत्यम् $^{2/1}$) over the denizens of heaven (सुराणाम् $^{6/3}$ अपि $^{0}$).

**सञ्जय उवाच**

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।**

**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥२.९॥**

sañjaya uvāca

evamuktvā hṛṣīkeśaṃ guḍākeśaḥ parantapaḥ ||

na yotsya iti govindamuktvā tūṣṇīṃ babhūva ha ||2.9||

सञ्जयः $^{1/1}$ उवाच $^{III/1}$ ।

एवम् $^{0}$ उक्त्वा $^{0}$ हृषीकेशम् $^{2/1}$ गुडाकेशः $^{1/1}$ परन्तपः $^{1/1}$ ।

न $^{0}$ योत्स्ये $^{I/1}$ इति $^{0}$ गोविन्दम् $^{2/1}$ उक्त्वा $^{0}$ तूष्णीम् $^{0}$ बभूव $^{III/1}$ ह $^{0}$ ॥२.९॥

- सञ्जयः [sañjayaḥ] = Sañjaya = सञ्जय (m.) + कर्तरि to उवाच 1/1
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1

- एवम् [evam] = in that manner = अव्ययम्
- उक्त्वा [uktvā] = having said= अव्ययम्
  - वच् (2P to say) + क्त्वा (having …ed)
- हृषीकेशम् [hṛṣīkeśam] = lord of senses (Kṛṣṇa) = हृषीकेश (m.) + कर्मणि to उक्त्वा 2/1
  - हृषीकणाम् (of senses) ईशः (lord) हृषीकेशः । षष्ठीतत्पुरुषसमासः
- गुडाकेशः [guḍākeśaḥ] = lord of sleep (Arjuna) = गुडाकेश (m.) + कर्तरि to बभूव 1/1
  - गुडाकानाम् (of sleep) ईशः (lord) गुडाकेशः । षष्ठीतत्पुरुषसमासः
- परन्तपः [parantapaḥ] = Vanquisher of enemies (Arjuna) = परन्तप (m.) + adj. to [अर्जुन] 1/1
  - परं तापयति इति परन्तपः ।
  - पर + अम् + तप् to heat + णिच् + खच्   3.2.39 द्विषत्परयोस्तापेः । ~ खच् ।

- न [na] = not = अव्ययम्
- योत्स्ये [yotsye] = will not fight = युध् (4A) to fight + लृट्/कर्तरि/I/1
    - युध् + लृट्/कर्तरि/I/1
      = युध् + ए     तिङ्
      = युध् +स्य + ए     3.1.33 स्यतासी लृलुटोः ।
      = योध् +स्य + ए     7.3.86 पुगन्तलघूपदस्य च । ~ सार्वधातुकार्धधातुकयोः गुण्
      = योत् +स्य + ए     8.4.55 खरि च । ~ चर् झलाम्
      = योत् +स्ये     6.1.97 अतो गुणे । ~ पररूपम् एकः पूर्वपरयोः
- इति [iti] = thus = अव्ययम्
- गोविन्दम् [govindam] = Govinda (Kṛṣṇa) = गोविन्द (m.) + कर्मणि to उक्त्वा 2/1
    - गोभिः (by the words) विन्यते (is gained) इति गोविन्दः। उपपदतत्पुरुषसमासः
- उक्त्वा [uktvā] = having said= अव्ययम्
    - वच् (2P to say) + क्त्वा (having …ed)
- तूष्णीम् [tūṣṇīm] = silent = अव्ययम्
- बभूव [babhūva] = has become = भू (1P) to be + लिट्/कर्तरि/III/1
- ह [ha] = as it was= अव्ययम्

Sentence 1:

सञ्जयः $^{1/1}$ उवाच $^{III/1}$ ।

Sañjaya (सञ्जयः $^{1/1}$) said (उवाच $^{III/1}$).

Sentence 2:

गुडाकेशः $^{1/1}$ परन्तपः $^{1/1}$ एवम् $^{0}$ हृषीकेशम् $^{2/1}$ उक्त्वा $^{0}$ ।

न $^{0}$ योत्स्ये $^{I/1}$ इति $^{0}$ गोविन्दम् $^{2/1}$ उक्त्वा $^{0}$ तूष्णीम् $^{0}$ बभूव $^{III/1}$ ह $^{0}$ ॥२.९॥

Having spoken (उक्त्वा $^{0}$) to Kṛṣṇa (हृषीकेशम् $^{2/1}$) in this manner (एवम् $^{0}$), Arjuna (गुडाकेशः $^{1/1}$), the scorcher of foes (परन्तपः $^{1/1}$), saying (उक्त्वा $^{0}$) to Govinda (गोविन्दम् $^{2/1}$), 'I shall not fight (न $^{0}$ योत्स्ये $^{I/1}$),' became (बभूव $^{III/1}$) silent (तूष्णीम् $^{0}$).

## तमुवाच हृषीकेशः प्रहसन्निव भारत ।

**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥२.१०॥**

tamuvāca hṛṣīkeśaḥ prahasanniva bhārata |

senayorubhayormadhye viṣīdantamidaṃ vacaḥ ||2.10||

तम् $^{2/1}$ उवाच $^{III/1}$ हृषीकेशः $^{1/1}$ प्रहसन् $^{1/1}$ इव $^{0}$ भारत $^{8/1}$ ।

सेनयोः $^{6/2}$ उभयोः $^{6/2}$ मध्ये $^{7/1}$ विषीदन्तम् $^{2/1}$ इदम् $^{2/1}$ वचः $^{2/1}$ ॥२.१०॥

- तम् [tam] = to that [Arjuna] = तद् (pron. m.) + कर्मणि to उवाच 2/1
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1
- हृषीकेशः [hṛṣīkeśaḥ] = lord of senses (Kṛṣṇa) = हृषीकेश (m.) + कर्तरि to उवाच 1/1
    - हृषीकणाम् (of senses) ईशः (lord) हृषीकेशः । षष्ठीतत्पुरुषसमासः
- प्रहसन् [prahasan] = laughing = प्रहसत् (m.) + adj. to हृषीकेशः 1/1
    - प्र + हस् (1P) to smile + शतृँ (one who is doing)
      = प्रहसत् (one who is laughing)
- इव [iva] = as though = अव्ययम्
- भारत [bhārata] = O! Descendant of Bharata! = भारत (m.) + सम्बोधने 1/1
- सेनयोः [senayoḥ] = of the two army = सेना (f.) + सम्बन्धे to मध्ये 6/2
- उभयोः [ubhayoḥ] = of both = उभा (pron. f.) + adj. to सेनयोः 6/2
- मध्ये [madhye] = in the middle = अव्ययम्
    - This word takes 6th case.
- विषीदन्तम् [viṣīdantam] = one who is despair = विषीदत् (m.) + adj. to [अर्जुन] 2/1
    - वि + सद् (1P) to be despar + शतृँ (one who is doing)
      = विषीदत् (one who is being despair)
- इदम् [idam] = this = इदम् (pron. n.) + adj. to वचः 2/1
- वचः [vacaḥ] = word = वचस् (n.) + कर्मणि to उवाच 2/1

Sentence:

भारत $^{8/1}$ उभयोः $^{6/2}$ सेनयोः $^{6/2}$ मध्ये $^{7/1}$ हृषीकेशः $^{1/1}$ प्रहसन् $^{1/1}$ इव $^{0}$ तम् $^{2/1}$ विषीदन्तम् $^{2/1}$ इदम् $^{2/1}$ वचः $^{2/1}$ उवाच $^{III/1}$ ॥२.१०॥

O! Descendant of Bharata (भारत $^{8/1}$)! In the middle (मध्ये $^{7/1}$) of both (उभयोः $^{6/2}$) armies (सेनयोः $^{6/2}$), Kṛṣṇa (हृषीकेशः $^{1/1}$), smiling (प्रहसन् $^{1/1}$ इव $^{0}$), told (उवाच $^{III/1}$) that [Arjuna] (तम् $^{2/1}$) who is despair (विषीदन्तम् $^{2/1}$) this (इदम् $^{2/1}$) word (वचः $^{2/1}$).

**श्रीभगवानुवाच**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**

**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥२.११॥**

śrībhagavānuvāca

aśocyānanvaśocastvaṃ prajñāvādāṃśca bhāṣase |

gatāsūnagatāsūṃśca nānuśocanti paṇḍitāḥ ||2.11||

श्रीभगवान् $^{1/1}$ उवाच $^{III/1}$

अशोच्यान् $^{2/3}$ अन्वशोचः $^{II/1}$ त्वम् $^{1/1}$ प्रज्ञावादान् $^{2/3}$ च $^{0}$ भाषसे $^{II/1}$ ।

गतासून् $^{2/3}$ अगतासून् $^{2/3}$ च $^{0}$ न $^{0}$ अनुशोचन्ति $^{III/3}$ पण्डिताः $^{1/3}$ ॥२.११॥

- श्रीभगवान् [śrībhagavān] = Śrībhagavān = श्रीभगवत् (m.) + कर्तरि to उवाच 1/1
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1

- अशोच्यान् [aśocyān] = those who should not be grieved for = अशोच्य (m.) + कर्मणि to अन्वशोचः 2/3
  - शुच् (to grieve) + य (object which should be …ed)
- अन्वशोचः [anvaśocaḥ] = grieve = अनु + शुच् + लङ्/कर्तरि/II/1

- अनु + शुच् + लङ्
    - अनु + शुच् + सिप्         तिबादि
    - अनु + शुच् + स्          अनुबन्धलोपः, इकारलोपः by 3.4.99 नित्यं ङितः।
    - अनु + शुच् + शप् + स्     गणविकरण-प्रत्यय for 1st conjugation by 3.1.68 कर्तरि शप् । ~ सार्वधातुके
    - अनु + शोच् + अ + स्      अनुबन्धलोपः, गुणः by 7.3.86 पुगन्तलघूपधस्य च । ~ सार्वधातुकार्धधातुकयोः गुणः
    - अनु + अट्+ शोच् + अ + स्       अडागमः by 6.4.71 लुङ्लङ्लृङ्क्ष्वडुदात्तः ।
    - अन्व् + अशोचः             यण्-सन्धिः, पदान्तसकार becomes विसर्ग
- त्वम् [tvam] = you= युष्मद् (pron. m.) + कर्तरि to अन्वशोचः 1/1
- प्रज्ञावादान् [prajñāvādān] = words of wisdom = प्रज्ञावाद (m.) + कर्मणि to भाषसे 2/3
- च [ca] = and = अव्ययम्
- भाषसे [bhāṣase] = speak = भाष् (1A) to speak + लट्/कर्तरि/II/1
- गतासून् [gatāsūn] = those from whom the breath has left = गतासु (m.) + कर्मणि to अनुशोचन्ति 2/3
    - गतः असुः येभ्यः ते गतासवः । Those from whom the breath (असु) is gone (गत)
- अगतासून् [agatāsūn] = those from whom the breath has not yet left = अगतासु (m.) + कर्मणि to अनुशोचन्ति 2/3
    - न गतासवः इति अगतासवः। Those who are not गतासवः, those who are alive
- च [ca] = and = अव्ययम्
- न [na] = not = अव्ययम्
- अनुशोचन्ति [anuśocanti] = grieve = अनु + शुच् + लट् /कर्तरि/III/3
- पण्डिताः [paṇḍitāḥ] = the wise = पण्डित (m.) + कर्तरि to अनुशोचन्ति 1/3
    - पण्डः अस्य सञ्जातम् इति पण्डितः । 5.2.36 तदस्य सञ्जातं तारकदिभ्य इतच् ।
    - पण्ड is not in तारकदिगण but it is आकृतिगण

Sentence 1:

श्रीभगवान्$^{1/1}$ उवाच$^{III/1}$ ।

Śrībhagavān (श्रीभगवान्$^{1/1}$) said (उवाच$^{III/1}$).

Sentence 2:

त्वम्$^{1/1}$ अशोच्यान्$^{2/3}$ अन्वशोचः$^{II/1}$ ।

You (त्वम्$^{1/1}$) grieve (अन्वशोचः$^{II/1}$) those who should not be grieved for (अशोच्यान्$^{2/3}$).

Sentence 3:

[त्वम्$^{1/1}$] प्रज्ञावादान्$^{2/3}$ च$^{0}$ भाषसे$^{II/1}$ ।

You (त्वम्$^{1/1}$) also (च$^{0}$) speak (भाषसे$^{II/1}$) words of wisdom (प्रज्ञावादान्$^{2/3}$).

Sentence 4:

पण्डिताः$^{1/3}$ गतासून्$^{2/3}$ अगतासून्$^{2/3}$ च$^{0}$ न$^{0}$ अनुशोचन्ति$^{III/3}$ ॥२.११॥

The wise (पण्डिताः$^{1/3}$) do not grieve (न$^{0}$ अनुशोचन्ति$^{III/3}$) for those who are dead (गतासून्$^{2/3}$) and (च$^{0}$) those who are alive (अगतासून्$^{2/3}$).

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**

**न चैव न भविष्यामः सर्वे वयमतः परम् ॥२.१२॥**

na tvevāhaṃ jātu nāsaṃ na tvaṃ neme janādhipāḥ |

na caiva na bhaviṣyāmaḥ sarve vayamataḥ param ||2.12||

न$^{0}$ तु$^{0}$ एव$^{0}$ अहम्$^{1/1}$ जातु$^{0}$ न$^{0}$ आसम्$^{I/1}$ न$^{0}$ त्वम्$^{1/1}$ न$^{0}$ इमे$^{1/3}$ जनाधिपाः$^{1/3}$ ।

न$^{0}$ च$^{0}$ एव$^{0}$ न$^{0}$ भविष्यामः$^{I/3}$ सर्वे$^{1/3}$ वयम्$^{1/3}$ अतः$^{0}$ परम्$^{1/1}$ ॥२.१२॥

- न [na] = not = अव्ययम्
- तु [tu] = indeed = अव्ययम्
- एव [eva] = only = अव्ययम्
- अहम् [aham] = I = अस्मद् (pron. m.) + कर्तरि to आसम् 1/1
- जातु [jātu] = ever = अव्ययम्
- न [na] = not = अव्ययम्
- आसम् [āsam] = was = अस् (2P) to be + लङ्/कर्तरि/I/1
- न [na] = not = अव्ययम्
- त्वम् [tvam] = you = युष्मद् (pron. m.) + कर्तरि to [आसः] 1/1
- न [na] = not = अव्ययम्
- इमे [ime] = these = इदम् (pron. m.) + adj. to जनाधिपाः 1/3
- जनाधिपाः [janādhipāḥ] = kings = जनाधिप (m.) + कर्तरि to [आसन्] 1/3
- न [na] = not = अव्ययम्
- च [ca] = and = अव्ययम्
- एव [eva] = only = अव्ययम्
- न [na] = not = अव्ययम्
- भविष्यामः [bhaviṣyāmaḥ] = will be = भू (1P) to be + लृट्/कर्तरि/I/3
- सर्वे [sarve] = all = सर्व (pron. m.) + adj. to वयम् 1/3
- वयम् [vayam] = we = अस्मद् (pron. m.) + कर्तरि to भविष्यामः 1/3
- अतः [ataḥ] = from now = अव्ययम्
- परम् [param] = after = अव्ययम्

Sentence 1:

अहम्$^{1/1}$ जातु$^{0}$ न$^{0}$ तु$^{0}$ आसम्$^{I/1}$ [इति$^{0}$] न$^{0}$ एव$^{0}$

"I (अहम्$^{1/1}$) was (आसम्$^{I/1}$) ever (जातु$^{0}$) not (न$^{0}$ तु$^{0}$) there" (इति$^{0}$) is not (न$^{0}$ एव$^{0}$).

= There was never a time when I did not exist.

Sentence 2:

न $^{0}$ त्वम् $^{1/1}$ [आसः $^{II/1}$ इति $^{0}$ न $^{0}$ एव $^{0}$]

= There was never a time when you did not exist.

Sentence 3:

न $^{0}$ इमे $^{1/3}$ जनाधिपाः $^{1/3}$ [आसन् $^{III/3}$ इति $^{0}$ न $^{0}$ एव $^{0}$]

= There was never a time when those kings did not exist.

Sentence 4:

अतः $^{0}$ परम् $^{1/1}$ च $^{0}$ सर्वे $^{1/3}$ वयम् $^{1/3}$ न $^{0}$ भविष्यामः $^{I/3}$ [इति $^{0}$] न $^{0}$ एव $^{0}$

“And (च $^{0}$) from now on (अतः $^{0}$ परम् $^{1/1}$), all (सर्वे $^{1/3}$) of us (वयम् $^{1/3}$) will not (न $^{0}$) be there (भविष्यामः $^{I/3}$)” (इति $^{0}$) is not (न $^{0}$ एव $^{0}$).

= And thereafter, there wiil never be a time when we all will not exist.

॥२.१२॥

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।**

**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥२.१३॥**

dehino'smin yathā dehe kaumāraṃ yauvanaṃ jarā ।

tathā dehāntaraprāptirdhīrastatra na muhyati ।।2.13।।

देहिनः $^{6/1}$ अस्मिन् $^{7/1}$ यथा $^{0}$ देहे $^{7/1}$ कौमारम् $^{1/1}$ यौवनम् $^{1/1}$ जरा $^{1/1}$ ।

तथा $^{0}$ देहान्तरप्राप्तिः $^{1/1}$ धीरः $^{1/1}$ तत्र $^{0}$ न $^{0}$ मुह्यति $^{III/1}$ ॥२.१३॥

- देहिनः [dehinaḥ] = for the indwellar of the body = देहिन् (m.) + सम्बन्धे to देहान्तरप्राप्तिः 1/1
    - देहः अस्य अस्ति इति देही । One who has body
      = देह + सुँ + इनिँ = देहिन्
- अस्मिन् [asmin] = in this = इदम् (pron. m.) + adj. to देहे 7/1
- यथा [yathā] = just as = अव्ययम्
- देहे [dehe] = body = देह (m.) + अधिकरणे to [भवन्ति] 7/1
- कौमारम् [kaumāram] = childhood = कौमार (n.) + 1/1
    - कुमारस्य भावः कौमारम् । The status of being a child
- यौवनम् [yauvanam] = youth = यौवन (n.) + 1/1
    - यूनः भावः यौवनम् । The status of being young
      = युवन् + ङस् + अण्
      = यौवन् + अ
- जरा [jarā] = old age = जरा (f.) + 1/1
- तथा [tathā] = so too = अव्ययम्
- देहान्तरप्राप्तिः [dehāntaraprāptiḥ] = gaining of another body = देहान्तरप्राप्ति (f.) + 1/1
    - अन्यः (another) देहः (body) देहान्तरम् । कर्मधारयतत्पुरुषसमासः ।
    - देहान्तरस्य (of another body) प्राप्तिः (gaining) देहान्तरप्राप्तिः । षष्ठीतत्पुरुषसमासः ।
- धीरः [dhīraḥ] = the wise = धीर (m.) + कर्तरि to मुह्यति 1/1
- तत्र [tatra] = in that = अव्ययम्
- न [na] = not = अव्ययम्
- मुह्यति [muhyati] = is deluded = मुह् (4P) to be confused + लट्/कर्तरि/I/1

Sentence 1:

यथा $^{0}$ देहिनः $^{6/1}$ अस्मिन् $^{7/1}$ देहे $^{7/1}$ कौमारम् $^{1/1}$ यौवनम् $^{1/1}$ जरा $^{1/1}$, तथा $^{0}$ देहान्तरप्राप्तिः $^{1/1}$

Just as (यथा $^{0}$) there are childhood (कौमारम् $^{1/1}$), youth (यौवनम् $^{1/1}$) and old age (जरा $^{1/1}$) in this (अस्मिन् $^{7/1}$) body (देहे $^{7/1}$) for the indweller of the body (देहिनः $^{6/1}$), so too (तथा $^{0}$) the gain of another body (देहान्तरप्राप्तिः $^{1/1}$).

Sentence 2:

तत्र $^{0}$ धीरः $^{1/1}$ न $^{0}$ मुह्यति $^{III/1}$ ॥२.१३॥

Regarding that (तत्र $^{0}$) the wise (धीरः $^{1/1}$) does not (न $^{0}$) grieve (मुह्यति $^{III/1}$).

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**

**आगमापयिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥२.१४॥**

mātrāsparśāstu kaunteya śītoṣṇasukhaduḥkhadāḥ |

āgamāpayino:'nityāstāṃstitikṣasva bhārata ||2.14||

मात्रास्पर्शाः $^{1/3}$ तु $^{0}$ कौन्तेय $^{8/1}$ शीतोष्णसुखदुःखदाः $^{1/3}$ ।

आगमापयिनः $^{1/3}$ अनित्याः $^{1/3}$ तान् $^{2/3}$ तितिक्षस्व $^{II/1}$ भारत $^{8/1}$ ॥२.१४॥

- मात्रास्पर्शाः [mātrāsparśāḥ] = the contacts of the sense organs with the sensory world = मात्रास्पर्श (m.) + 1/3
  - मात्राः (sense organs) च स्पर्शाः (contacts) च मात्रास्पर्शाः । इतरेतरद्वन्द्वसमासः
- तु [tu] = indeed; = अव्ययम्
- कौन्तेय [kaunteya] = O! Son of Kuntī (Arjuna) = कौन्तेय (m.) + सम्बोधने 1/1
- शीतोष्णसुखदुःखदाः [śītoṣṇasukhaduḥkhadāḥ] = which give rise to cold and heat, pleasure and pain = शीतोष्णसुखदुःखद (m.) + 1/3
  - शीतं च ऊष्णं च, सुखं च दुःखं च शीतोष्णसुखदुःखानि । इतरेतरद्वन्द्वसमासः
  - शीतोष्णसुखदुःखानि ददाति शीतोष्णसुखदुःखदः । उपपदतत्पुरुषसमासः
  - 3.2.3 आतोऽनुपसर्गे । ~ कः
- आगमापयिनः [āgamāpayinaḥ] = which are of the nature of coming and going = आगमापयिन् (m.) + 1/3
- अनित्याः [anityāḥ] = not constant = अनित्य (m.) + 1/3

- तान् [tān] = them = तद् (pron. m.) + कर्मणि to तितिक्षस्व 2/3
- तितिक्षस्व [titikṣasva] = endure = तितिक्ष to endure + लोट्/कर्तरि/II/1
    - तिज् + सन् 3.1.5 गुप्-तिज्-किद्भ्यः सन् ।
      = ति + तिज् + स 6.1.9 सन्यङोः ।
      = ति + तिग् + स 8.2.30 चोः कुः ।
      = ति + तिग् + ष 8.3.59 आदेशप्रत्यययोः ।
      = ति + तिक् + ष 8.4.55 खरि च ।
      = तितिक्ष 3.1.32 सनाद्यन्ता धातवः ।
- भारत [bhārata] = O! Descendnat of Bharata (Arjuna) = भारत (m.) + सम्बोधने 1/1

Sentence 1:

कौन्तेय $^{8/1}$ मात्रास्पर्शाः $^{1/3}$ तु $^{0}$ शीतोष्णसुखदुःखदाः $^{1/3}$ आगमापयिनः $^{1/3}$ अनित्याः $^{1/3}$

O! Son of Kuntī (कौन्तेय $^{8/1}$)! The contacts of the sense organs with the sensory world (मात्रास्पर्शाः $^{1/3}$), which give rise to cold and heat (शीतोष्णसुखदुःखदाः $^{1/3}$), which are of the nature of coming and going (आगमापयिनः $^{1/3}$) are indeed (तु $^{0}$) not constant (अनित्याः $^{1/3}$).

Sentence 2:

तान् $^{2/3}$ तितिक्षस्व $^{II/1}$ भारत $^{8/1}$ ॥२.१४॥

Endure (तितिक्षस्व $^{II/1}$) them (तान् $^{2/3}$), O! Descendnat of Bharata (भारत $^{8/1}$)!

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**

**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥२.१५॥**

yaṃ hi na vyathayantyete puruṣaṃ puruṣarṣabha |

samaduḥkhasukhaṃ dhīraṃ so'mṛtatvāya kalpate ||2.15||

यम् $^{2/1}$ हि $^{0}$ न $^{0}$ व्यथयन्ति $^{III/3}$ एते $^{1/3}$ पुरुषम् $^{2/1}$ पुरुषर्षभ $^{8/1}$ ।

समदुःखसुखम् $^{2/1}$ धीरम् $^{2/1}$ सः $^{1/1}$ अमृतत्वाय $^{4/1}$ कल्पते $^{III/1}$ ॥२.१५॥

- यम् [yam] = which = यद् (pron. m.) + adj. to पुरुषम् 2/1
- हि [hi] = indeed = अव्ययम्
- न [na] = not = अव्ययम्
- व्यथयन्ति [vyathayanti] = affect = व्यथ् (1A) to be afflicted + णिच् (causative) + लट्/कर्तरि/III/1
- एते [ete] = these = एतद् (pron. m.) + कर्तरि to व्यथयन्ति 1/3
- पुरुषम् [puruṣam] = person = पुरुष (m.) + कर्मणि to व्यथयन्ति 2/1
- पुरुषर्षभ [puruṣarṣabha] = O! The prominent among men (Arjuna) = पुरुषर्षभ (m.) + सम्बोधने 1/1
    - पुरुषाणाम् ऋषभः । षष्ठीतत्पुरुषः
- समदुःखसुखम् [samaduḥkhasukham] = the one who is same in pleasure and pain= समदुःखसुख (m.) + adj. to पुरुषम् 2/1
- धीरम् [dhīram] = one who is discriminating= धीर (m.) + adj. to पुरुषम् 2/1
- सः [saḥ] = he = तद् (pron. m.) + कर्तरि to कल्पते 1/1
- अमृतत्वाय [amṛtatvāya] = for gaining liberation= अमृतत्व (n.) + उपपदे to कल्पते 4/1
    - (वा०) क्लृपिसम्पद्यमाने चतुर्थी वक्तव्या ।
- कल्पते [kalpate] = is fit = क्लृप् (1A) to be fit + लट्/कर्तरि/III/1
    - 8.2.18 कृपो रो लः ।

Sentence 1 (यद्-clouse):

पुरुषर्षभ $^{8/1}$ एते $^{1/3}$ यम् $^{2/1}$ पुरुषम् $^{2/1}$ समदुःखसुखम् $^{2/1}$ धीरम् $^{2/1}$ न $^{0}$ व्यथयन्ति $^{III/3}$ ।

O! The prominent among men (पुरुषर्षभ $^{8/1}$)! These (एते $^{1/3}$) [pleasure and pain] do not (न $^{0}$) afflict (व्यथयन्ति $^{III/3}$) the person (पुरुषम् $^{2/1}$), who is (यम् $^{2/1}$) same in pleasure and pain (समदुःखसुखम् $^{2/1}$) and the one who is discriminating (धीरम् $^{2/1}$).

Sentence 2 (तद्-clouse):

सः $^{1/1}$ हि $^{0}$ अमृतत्वाय $^{4/1}$ कल्पते $^{III/1}$ ॥२.१५॥

He (सः $^{1/1}$) is indeed (हि $^{0}$) fit (कल्पते $^{III/1}$) for मोक्ष (अमृतत्वाय $^{4/1}$).

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**

**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥२.१६॥**

nāsato vidyate bhāvo nābhāvo vidyate sataḥ |
ubhayorapi dṛṣṭo'ntastvanayostattvadarśibhiḥ ||2.16||

न $^{0}$ असतः $^{6/1}$ विद्यते $^{III/1}$ भावः $^{1/1}$ न $^{0}$ अभावः $^{1/1}$ विद्यते $^{III/1}$ सतः $^{6/1}$ ।

उभयोः $^{6/2}$ अपि $^{0}$ दृष्टः $^{1/1}$ अन्तः $^{1/1}$ तु $^{0}$ अनयोः $^{6/2}$ तत्त्वदर्शिभिः $^{3/3}$ ॥२.१६॥

- न [na] = not = अव्ययम्
- असतः [asataḥ] = of मिथ्या = असत् (n.) + सम्बन्धे to भावः 6/1
- विद्यते [vidyate] = there is = विद् (4A) to exist + लट्/कर्तरि/III/1
- भावः [bhāvaḥ] = existence = भाव (m.) + कर्तरि to विद्यते 1/1
- न [na] = not = अव्ययम्
- अभावः [abhāvaḥ] = non existence = अभाव (m.) + कर्तरि to विद्यते 1/1
- विद्यते [vidyate] = there is = विद् (4A) to exist + लट्/कर्तरि/III/1
- सतः [sataḥ] = of the real = सत् (n.) + सम्बन्धे to अभावः 6/1
- उभयोः [ubhayoḥ] = of both = उभ (pron. m.) + सम्बन्धे to अन्तः 6/2
- अपि [api] = also = अव्ययम्
- दृष्टः [dṛṣṭaḥ] = seen = दृष्ट (m.) + 1/1
- अन्तः [antaḥ] = truth = अन्त (m.) + 1/1
- तु [tu] = indeed = अव्ययम्
- अनयोः [anayoḥ] = of these = इदम् (pron. m.) + सम्बन्धे to अन्तः 6/2
- तत्त्वदर्शिभिः [tattvadarśibhiḥ] = by the seers of thruth = तत्त्वदर्शिन् (m.) + कर्तरि to दृष्टः 3/3

- तस्य सर्वस्य ब्रह्मणः भावः तत्त्वं द्रष्टुं शीलं येषां ते तत्वदर्शिनः । उपपदतत्पुरुषसमासः
- तत्त्व + दृश् + णिनिँ ।

Sentence 1:

असतः $^{6/1}$ भावः $^{1/1}$ न $^{0}$ विद्यते $^{III/1}$

There is (विद्यते $^{III/1}$) no (न $^{0}$) existence (भावः $^{1/1}$) of मिथ्या (असतः $^{6/1}$).

Sentence 2:

सतः $^{6/1}$ अभावः $^{1/1}$ न $^{0}$ विद्यते $^{III/1}$ ।

There is (विद्यते $^{III/1}$) no (न $^{0}$) non-existence (अभावः $^{1/1}$) of the real (सतः $^{6/1}$).

Sentence 3:

उभयोः $^{6/2}$ अनयोः $^{6/2}$ अपि $^{0}$ अन्तः $^{1/1}$ तत्त्वदर्शिभिः $^{3/3}$ तु $^{0}$ दृष्टः $^{1/1}$ ॥२.१६॥

The truth (अन्तः $^{1/1}$) of these (अनयोः $^{6/2}$) two (उभयोः $^{6/2}$) is indeed (तु $^{0}$) seen (दृष्टः $^{1/1}$) by the seers of the truth (तत्त्वदर्शिभिः $^{3/3}$).

## अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
## विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥२.१७॥

avināśi tu tadviddhi yena sarvamidaṃ tatam |
vināśamavyayasyāsya na kaścitkartumarhati||2.17||

अविनाशि $^{2/1}$ तु $^{0}$ तद् $^{2/1}$ विद्धि $^{II/1}$ येन $^{3/1}$ सर्वम् $^{1/1}$ इदम् $^{1/1}$ ततम् $^{1/1}$ ।

विनाशम् $^{2/1}$ अव्ययस्य $^{6/1}$ अस्य $^{6/1}$ न $^{0}$ कश्चित् $^{0}$ कर्तुम् $^{0}$ अर्हति $^{III/1}$॥२.१७॥

- अविनाशि [avināśi] = indestructible = अविनाशिन् (n.) + 2/1
    - नञ् + वि + नश् + णिनिँ
- तु [tu] = indeed = अव्ययम्
- तद् [tad] = that = तद् (pron. n.) + 2/1
- विद्धि [viddhi] = May you know = विद् (2P) to know + लोट्/कर्तरि/II/1
- येन [yena] = by which = यद् (pron. n.) + कर्तरि to ततम् 3/1
- सर्वम् [sarvam] = all = सर्व (pron. n.) + 1/1
- इदम् [idam] = this [जगत्] = इदम् (pron. n.) + 1/1
- ततम् [tatam] = pervaded = तत (pron. n.) + 1/1
    - तन् (to pervade) + क्त (…ed)
- विनाशम् [vināśam] = destruction = विनाश (n.) + 2/1
- अव्ययस्य [avyayasya] = of the one that does not change = अव्यय (n.) + सम्बन्धे to विनाशम् 6/1
- अस्य [asya] = this = इदम् (pron. n.) + 6/1
- न [na] = not = अव्ययम्
- कश्चित् [kaścit] = anybody = अव्ययम्
    - कः + चित्
- कर्तुम् [kartum] = to do = अव्ययम्
    - कृ + तुमुँन्
- अर्हति [arhati] = is able = अर्ह् (1P) to be able + लट्/कर्तरि/III/1

Sentence 1:

तद् $^{2/1}$ अविनाशि $^{2/1}$ तु $^{0}$ विद्धि $^{II/1}$

May you know (विद्धि $^{II/1}$) indeed तु $^{0}$ () that (तद् $^{2/1}$) indestructible (अविनाशि $^{2/1}$)

Subordinate sentence of the Sentence 1:

येन $^{3/1}$ सर्वम् $^{1/1}$ इदम् $^{1/1}$ ततम् $^{1/1}$ ।

By which (येन $^{3/1}$) all (सर्वम् $^{1/1}$) this (इदम् $^{1/1}$) is pervaded (ततम् $^{1/1}$).

Sentence 2:

कश्चित् $^{0}$ अस्य $^{6/1}$ अव्ययस्य $^{6/1}$ विनाशम् $^{2/1}$ कर्तुम् $^{0}$ न $^{0}$ अर्हति $^{III/1}$ ॥२.१७॥

Anybody (कश्चित् $^{0}$) is not (न $^{0}$) able (अर्हति $^{III/1}$) to do (कर्तुम् $^{0}$) the destruction (विनाशम् $^{2/1}$) of this (अस्य $^{6/1}$) one that which does not change (अव्ययस्य $^{6/1}$).

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**

**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत॥२.१८॥**

antavanta ime dehā nityasyoktāḥ śarīriṇaḥ |
anāśino'prameyasya tasmādyudhyasva bhārata||2.18||

अन्तवन्तः $^{1/3}$ इमे $^{1/3}$ देहाः $^{1/3}$ नित्यस्य $^{6/1}$ उक्ताः $^{1/3}$ शरीरिणः $^{6/1}$ ।

अनाशिनः $^{6/1}$ अप्रमेयस्य $^{6/1}$ तस्मात् $^{5/1}$ युध्यस्व $^{II/1}$ भारत $^{8/1}$ ॥२.१८॥

- अन्तवन्तः [antavantaḥ] = one who has end = अन्तवत् (m.) + 1/3
  - अन्तः अस्य अस्ति इति अन्तवान् ।
    = अन्त + सुँ + मतुँप्
- इमे [ime] = these = इदम् (pron. m.) + 1/3
- देहाः [dehāḥ] = bodies = देह (m.) + 1/3
- नित्यस्य [nityasya] = of the eternal = नित्य (m.) + 6/1
- उक्ताः [uktāḥ] = are said = उक्त (m.) + 1/3
  - वच् (to say) + क्त (…ed)
- शरीरिणः [śarīriṇaḥ] = of the one who has body = शरीरिन् (m.) + 6/1

- शरीरम् अस्य अस्ति इति शरीरी ।
      = अन्त + सुँ + इनिँ
- अनाशिनः [anāśinaḥ] = indestructible = अनाशिन् (m.) + 6/1
    - नाशः अस्य अस्ति इति नाशी ।
      = नाश + सुँ + इनिँ
    - न नाशी इति अनाशी । नञ्तत्पुरुषसमासः
- अप्रमेयस्य [aprameyasya] = not the object = अप्रमेय (m.) + 6/1
    - प्र + मा (to know) + य (object) = प्रमेय (object of knowing)
    - न प्रमेयः अप्रमेयः । नञ्तत्पुरुषसमासः
- तस्मात् [tasmāt] = therefore = तद् (pron. n.) + 5/1
- युध्यस्व [yudhyasva] = May you fight = युध् (4A) to fight + लोट्/कर्तरि/II/1
- भारत [bhārata] = O! Descendant of Bharata! = भारत (m.) + सम्बोधने 1/1

Sentence 1:

नित्यस्य $^{6/1}$ अनाशिनः $^{6/1}$ अप्रमेयस्य $^{6/1}$ शरीरिणः $^{6/1}$ इमे $^{1/3}$ देहाः $^{1/3}$ अन्तवन्तः $^{1/3}$

उक्ताः $^{1/3}$ ।

These (इमे $^{1/3}$) bodies (देहाः $^{1/3}$) for the one who is not subject to change (नित्यस्य $^{6/1}$), undestractible (अनाशिनः $^{6/1}$), not the object of knowing (अप्रमेयस्य $^{6/1}$), and the one who has the body (शरीरिणः $^{6/1}$), are said (उक्ताः $^{1/3}$) to be the one who have ends (अन्तवन्तः $^{1/3}$)

Sentence 2:

तस्मात् $^{5/1}$ युध्यस्व $^{II/1}$ भारत $^{8/1}$ ॥२.१८॥

Therefore (तस्मात् $^{5/1}$) fight (युध्यस्व $^{II/1}$) O! Arjuna! (भारत $^{8/1}$)

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**

**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥२.१९॥**

ya enaṃ vetti hantāraṃ yaścainaṃ manyate hatam |

ubhau tau na vijānīto nāyaṃ hanti na hanyate ||2.19||

यः $^{1/1}$ एनम् $^{2/1}$ वेत्ति $^{III/1}$ हन्तारम् $^{2/1}$ यः $^{1/1}$ च $^{0}$ एनम् $^{2/1}$ मन्यते $^{III/1}$ हतम् $^{2/1}$ ।

उभौ $^{1/2}$ तौ $^{1/2}$ न $^{0}$ विजानीतः $^{III/2}$ न $^{0}$ अयम् $^{1/1}$ हन्ति $^{III/1}$ न $^{0}$ हन्यते $^{III/1}$ ॥२.१९॥

- यः [yaḥ] = the one who = यद् (pron. m.) + 1/1
- एनम् [enam] = this [ātmā] = इदम् (pron. m.) + 2/1
  - इदम्-शब्दस्य अन्वादेशः
  - अन्वादेश is an alternative form of pronoun इदम् and एतद् which have been used in one sentence and again used in another sentence.
- वेत्ति [vetti] = knows = विद् (2P) to know + लट्/कर्तरि/III/1
- हन्तारम् [hantāram] = one who kills = हन्तृ (m.) + 2/1
  - हन् to kill + तृच् (agent)
- यः [yaḥ] = the one who = यद् (pron. m.) + 1/1
- च [ca] = and = अव्ययम्
- एनम् [enam] = this [आत्मा] = इदम् (pron. m.) + 2/1
- मन्यते [manyate] = consider = मन् (4A) to consider + लट्/कर्तरि/III/1
- हतम् [hatam] = one who is killed = हत (m.) + 2/1
  - हन् to kill + क्त (object)
- उभौ [ubhau] = both = उभ (pron. m.) + 1/2
- तौ [tau] = they = तद् (pron. m.) + 1/2
- न [na] = do not = अव्ययम्
- विजानीतः [vijānītaḥ] = they two know = वि + ज्ञा (9P) to know + लट्/कर्तरि/III/2
- न [na] = do not = अव्ययम्

- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- हन्ति [hanti] = हन् (2P) to kill + लट्/कर्तरि/III/1
- न [na] = do not = अव्ययम्
- हन्यते [hanyate] = हन् (2P) to kill + लट्/कर्मणि/III/1

Subordinate Sentence 1:

यः $^{1/1}$ एनम् $^{2/1}$ हन्तारम् $^{2/1}$ वेत्ति $^{III/1}$

The one who (यः $^{1/1}$) knows (वेत्ति $^{III/1}$) this [ātmā] (एनम् $^{2/1}$) to be the killer (हन्तारम् $^{2/1}$),

Subordinate Sentence 2:

यः $^{1/1}$ च $^{0}$ एनम् $^{2/1}$ हतम् $^{2/1}$ मन्यते $^{III/1}$ ।

And (च $^{0}$) the one who (यः $^{1/1}$) considers (मन्यते $^{III/1}$) this [ātmā] (एनम् $^{2/1}$) to be the killed (हतम् $^{2/1}$),

Main Sentence 1:

तौ $^{1/2}$ उभौ $^{1/2}$ न $^{0}$ विजानीतः $^{III/2}$

They (तौ $^{1/2}$) both (उभौ $^{1/2}$) do not (न $^{0}$) know (विजानीतः $^{III/2}$).

Main Sentence 2:

अयम् $^{1/1}$ न $^{0}$ हन्ति $^{III/1}$

This [ātmā] (अयम् $^{1/1}$) does not (न $^{0}$) kill (हन्ति $^{III/1}$).

Main Sentence 2:

[अयम् $^{1/1}$] न $^{0}$ हन्यते $^{III/1}$ ॥२.१९॥

This [ātmā] (अयम् $^{1/1}$) is not (न $^{0}$) killed (हन्यते $^{III/1}$).

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता न भूयः ।**

**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२.२०॥**

na jāyate mriyate vā kadācinnāyaṃ bhūtvā bhavitā na bhūyaḥ |

ajo nityaḥ śāśvato'yaṃ purāṇo na hanyate hanyamāne śarīre ||2.20||

न $^{0}$ जायते $^{III/1}$ म्रियते $^{III/1}$ वा $^{0}$ कदाचित् $^{0}$ न $^{0}$ अयम् $^{1/1}$ भूत्वा $^{0}$ अभविता $^{1/1}$ न $^{0}$ भूयः $^{0}$ ।

अजः $^{1/1}$ नित्यः $^{1/1}$ शाश्वतः $^{1/1}$ अयम् $^{1/1}$ पुराणः $^{1/1}$ न $^{0}$ हन्यते $^{III/1}$ हन्यमाने $^{7/1}$ शरीरे $^{7/1}$ ॥२.२०॥

- न [na] = do not = अव्ययम्
- जायते [jāyate] = जन् (4A) to be born + लट्/कर्तरि/III/1
- म्रियते [mriyate] = मृ (6A) to die + लट्/कर्तरि/III/1
- वा [vā] = or = अव्ययम्
- कदाचित् [kadācit] = anytime = अव्ययम्
- न [na] = do not = अव्ययम्
- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- भूत्वा [bhūtvā] = having been = अव्ययम्
- अभविता [abhavitā] = one who is not = अभवितृ (m.) + 1/1
    - भू to be + तृच् agent = भवितृ one who is
    - न भविता इति अभविता ।
- अजः [ajaḥ] = one who has no birth = अज (m.) + 1/1
- नित्यः [nityaḥ] = one who is not within time = नित्य (m.) + 1/1
- शाश्वतः [śāśvataḥ] = one who undergoes no change = शाश्वत (m.) + 1/1
- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- पुराणः [purāṇaḥ] = one who has ever new = पुराण (m.) + 1/1

- न [na] = do not = अव्ययम्
- हन्यते [hanyate] = is killed = हन् (2P) to kill + लट्/कर्मणि/III/1
- हन्यमाने [hanyamāne] = being killed = हन्यमान (n.) + सति 7/1
- शरीरे [śarīre] = the body = शरीर (n.) + सति 7/1

Sentence 1:

अयम् $^{1/1}$ न $^{0}$ जायते $^{III/1}$

This [self] (अयम् $^{1/1}$) is not (न $^{0}$) born (जायते $^{III/1}$).

Sentence 2:

[अयम् $^{1/1}$] न $^{0}$ वा $^{0}$ म्रियते $^{III/1}$

Or, this [self] (अयम् $^{1/1}$) never (न $^{0}$) dies (म्रियते $^{III/1}$).

Sentence 3:

[अयम् $^{1/1}$] भूत्वा $^{0}$ भूयः $^{0}$ अभविता $^{1/1}$ न $^{0}$ कदाचित् $^{0}$ [भवति $^{III/1}$]

This [self] (अयम् $^{1/1}$) having being (भूत्वा $^{0}$), does not (न $^{0}$) become (भवति $^{III/1}$) non-existent (अभविता $^{1/1}$) again (भूयः $^{0}$) at any time (कदाचित् $^{0}$).

Sentence 4:

अयम् $^{1/1}$ अजः $^{1/1}$ नित्यः $^{1/1}$ शाश्वतः $^{1/1}$ पुराणः $^{1/1}$ शरीरे $^{7/1}$ हन्यमाने $^{7/1}$ न $^{0}$ हन्यते $^{III/1}$

॥२.२०॥

This [self] (अयम् $^{1/1}$) is unborn (अजः $^{1/1}$), eternal (नित्यः $^{1/1}$), undergoes no change whatsoever (शाश्वतः $^{1/1}$), and is ever new (पुराणः $^{1/1}$). When the body (शरीरे $^{7/1}$) is destroyed (हन्यमाने $^{7/1}$), it is not (न $^{0}$) destroyed (हन्यते $^{III/1}$).

This (self) is never born; nor does it die. It is not that, having been, it ceases to exist again. This (self) is unborn, eternal, undergoes no change whatsoever, and is ever new. When the body is destroyed, it is not destroyed.

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**

**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२.२१॥**

vedāvināśinaṃ nityaṃ ya enamajamavyayam ।

kathaṃ sa puruṣaḥ pārtha kaṃ ghātayati hanti kam ||2.21||

**वेद् $^{III/1}$ अविनाशिनम् $^{2/1}$ नित्यम् $^{2/1}$ यः $^{1/1}$ एनम् $^{2/1}$ अजम् $^{2/1}$ अव्ययम् $^{2/1}$ ।**

**कथम् $^{0}$ सः $^{1/1}$ पुरुषः $^{1/1}$ पार्थ $^{8/1}$ कम् $^{2/1}$ घातयति $^{III/1}$ हन्ति $^{III/1}$ कम् $^{2/1}$ ॥२.२१॥**

- वेद् [veda] = विद् (2P) to know + लट्/कर्तरि/III/1
- अविनाशिनम् [avināśinam] = indestructible = अविनाशिन् (m.) + 2/1
    - विनाशः अस्य अस्ति इति विनाशी
      = विनाश + इनि
      = विनाशिन्
    - न विनाशी इति अविनाशी
- नित्यम् [nityam] = timeless = नित्य (m.) + 2/1
- यः [yaḥ] = one who = यद् (pron. m.) + 1/1
- एनम् [enam] = this [आत्मन्] = इदम् (m.) + 2/1
    - अन्वादेशः
- अजम् [nityam] = unborn = अज (m.) + 2/1
- अव्ययम् [nityam] = not subject to decline = अव्यय (m.) + 2/1
- कथम् [katham] = how = अव्ययम्
- सः [saḥ] = he = तद् (pron. m.) + 1/1
- पुरुषः [puruṣaḥ] = person = पुरुष (m.) + 1/1
- पार्थ [pārtha] = O! son of Pṛthā! = पार्थ (m.) + सम्बोधने 1/1

- कम् [kam] = who = किम् (pron. m.) + 2/1
- घातयति [ghātayati] = घाति to cause to kill + लट्/ कर्तरि /III/1
    - हन् (2P) to kill + णिच् (causative)
      = हान् + इ ७.२.११६ अत उपधायाः। ~वृद्धिः
      = घान् + इ ७.३.५४ होहन्तेर्ञ्णिन्नेषु । ~ कु
      = घात्+ इ ७.३.३२ हनस्तोऽचिण्-णलोः।
      = घाति ३.१.३२ सनाद्यन्ता धातवः ।
- हन्ति [hanti] = हन् (2P) to kill + लट्/कर्तरि/III/1
- कम् [kam] = who = किम् (pron. m.) + 2/1

Subordinate sentence:

यः $^{1/1}$ एनम् $^{2/1}$ अविनाशिनम् $^{2/1}$ नित्यम् $^{2/1}$ अजम् $^{2/1}$ अव्ययम् $^{2/1}$ वेद $^{III/1}$ ।

One who (यः $^{1/1}$) knows (वेद $^{III/1}$) this [ātman] (एनम् $^{2/1}$) to be indestructible (अविनाशिनम् $^{2/1}$), timeless (नित्यम् $^{2/1}$), unborn (अजम् $^{2/1}$), and not subject to decline (अव्ययम् $^{2/1}$),

Main sentence 1:

पार्थ $^{8/1}$ कथम् $^{0}$ सः $^{1/1}$ पुरुषः $^{1/1}$ कम् $^{2/1}$ घातयति $^{III/1}$

O! son of Pṛthā! (पार्थ $^{8/1}$) How does (कथम् $^{0}$) this (सः $^{1/1}$) person (पुरुषः $^{1/1}$) cause anybody (कम् $^{2/1}$) kill (घातयति $^{III/1}$)?

Main sentence 2:

[सः $^{1/1}$ पुरुषः $^{1/1}$] कम् $^{2/1}$ हन्ति $^{III/1}$ ॥२.२१॥

How does (कथम् $^{0}$) this (सः $^{1/1}$) person (पुरुषः $^{1/1}$) kill (हन्ति $^{III/1}$) anybody (कम् $^{2/1}$)?

Oh! Son of Pṛthā the one who knows this (self) to be indestructible, timeless, unborn, and not subject to decline, how and whom does that person kill? Whom does he cause to kill?

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**

**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२.२२॥**

vāsāṃsi jīrṇāni yathā vihāya navāni gṛhṇāti naro'parāṇi |

tathā śarīrāṇi vihāya jīrṇānyanyāni saṃyāti navāni dehī ||2.22||

**वासांसि** $^{2/3}$ **जीर्णानि** $^{2/3}$ **यथा** $^{0}$ **विहाय** $^{0}$ **नवानि** $^{2/3}$ **गृह्णाति** $^{III/1}$ **नरः** $^{1/1}$ **अपराणि** $^{2/3}$ **।**

**तथा** $^{0}$ **शरीराणि** $^{2/3}$ **विहाय** $^{0}$ **जीर्णानि** $^{2/3}$ **अन्यानि** $^{2/3}$ **संयाति** $^{III/1}$ **नवानि** $^{2/3}$ **देही** $^{1/1}$ **॥२.२२॥**

- वासांसि [vāsāṃsi] = clothes = वासस् (n.) + कर्मणि to विहाय 2/3
- जीर्णानि [jīrṇāni] = old = जीर्ण (n.) + adj. to वासांसि 2/3
- यथा [yathā] = just as = अव्ययम्
- विहाय [vihāya] = having giving up = अव्ययम्
    - वि + ओँहाक् त्यागे + ल्यप्
- नवानि [navāni] = old = नवा (n.) + adj. to वासांसि 2/3
- गृह्णाति [gṛhṇāti] = ग्रह् (9U) to take + लट्/ कर्तरि /III/1
- नरः [naraḥ] = a person = नर (m.) + 1/1
- अपराणि [aparāṇi] = other = अपर (pron. n.) + adj. to [वासांसि] 2/3
- तथा [tathā] = so too = अव्ययम्
- शरीराणि [śarīrāṇi] = bodies = शरीर (n.) + कर्मणि to विहाय 2/3
- विहाय [vihāya] = having giving up = अव्ययम्
- जीर्णानि [jīrṇāni] = old = जीर्ण (n.) + adj. to शरीराणि 2/3
- अन्यानि [anyāni] = other = अन्य (pron. n.) + adj. to [शरीराणि] 2/3
- संयाति [saṃyāti] = सम् + या (2P) to gain + लट्/ कर्तरि /III/1
- नवानि [navāni] = old = नवा (n.) + adj. to वासांसि 2/3
- देही [dehī] = one who has body = देहिन् (m.) + 1/1
    - देहः अस्य अस्ति इति देही

यथा clause:

यथा $^{0}$ नरः $^{1/1}$ जीर्णानि $^{2/3}$ वासांसि $^{2/3}$ विहाय $^{0}$ अपराणि $^{2/3}$ नवानि $^{2/3}$ [वासांसि $^{2/3}$] गृह्णाति $^{III/1}$ ।

Just as (यथा $^{0}$) a person (नरः $^{1/1}$) takes (गृह्णाति $^{III/1}$) new (नवानि $^{2/3}$) other (अपराणि $^{2/3}$) clothes (वासांसि $^{2/3}$) having given up (विहाय $^{0}$) old (जीर्णानि $^{2/3}$) clothes (वासांसि $^{2/3}$),

तथा clause:

तथा $^{0}$ देही $^{1/1}$ जीर्णानि $^{2/3}$ शरीराणि $^{2/3}$ विहाय $^{0}$ अन्यानि $^{2/3}$ नवानि $^{2/3}$ [शरीराणि $^{2/3}$] संयाति $^{III/1}$ ॥२.२२॥

So too, (तथा $^{0}$) an indweller of the body (देही $^{1/1}$) gains (संयाति $^{III/1}$) new (नवानि $^{2/3}$) other (अन्यानि $^{2/3}$) bodies (शरीराणि $^{2/3}$) having given up (विहाय $^{0}$) old (जीर्णानि $^{2/3}$) bodies (शरीराणि $^{2/3}$).

## नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
## न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२.२३॥

nainaṃ chindanti śastrāṇi nainaṃ dahati pāvakaḥ ।

na cainaṃ kledayantyāpo na śoṣayati mārutaḥ||2.23||

न $^{0}$ एनम् $^{2/1}$ छिन्दन्ति $^{III/3}$ शस्त्राणि $^{1/3}$ न $^{0}$ एनम् $^{2/1}$ दहति $^{III/1}$ पावकः $^{1/1}$ ।

न $^{0}$ च $^{0}$ एनम् $^{2/1}$ क्लेदयन्ति $^{III/3}$ आपः $^{1/3}$ न $^{0}$ शोषयति $^{III/1}$ मारुतः $^{1/1}$ ॥२.२३॥

- न [na] = do not = अव्ययम्
- एनम् [enam] = this [ātmā] = इदम् (pron. m.) + 2/1
- छिन्दन्ति [chindanti] = cut = छिद् (7U) to cut + लट्/कर्तरि/III/3

- शस्त्राणि [śastrāṇi] = the weapons = शस्त्र (n.) + 1/3
- न [na] = do not = अव्ययम्
- एनम् [enam] = this [ātmā] = इदम् (pron. m.) + 2/1
- दहति [dahati] = burn = दह् (1P) to burn + लट्/कर्तरि/III/1
- पावकः [pāvakaḥ] = fire = पावक (m.) + 1/1
- न [na] = do not = अव्ययम्
- च [ca] = and = अव्ययम्
- एनम् [enam] = this [ātmā] = इदम् (pron. m.) + 2/1
- क्लेदयन्ति [kledayanti] = drown = क्लिद् to become wet + णिच् + लट्/कर्तरि/III/3
- आपः [āpaḥ] = water = अप् (f.) + 1/3
- न [na] = do not = अव्ययम्
- शोषयति [śoṣayati] = burn = शुष् + णिच् to make dry + लट्/कर्तरि/III/1
- मारुतः [mārutaḥ] = wind = मारुत (m.) + 1/1

Sentence 1:

शस्त्राणि $^{1/3}$ एनम् $^{2/1}$ [आत्मानम् $^{2/1}$] न $^{0}$ छिन्दन्ति $^{III/3}$

The weapons (शस्त्राणि $^{1/3}$) do not (न $^{0}$) cut (छिन्दन्ति $^{III/3}$) this (एनम् $^{2/1}$) [ātmā].

Sentence 2:

पावकः $^{1/1}$ एनम् $^{2/1}$ न $^{0}$ दहति $^{III/1}$ ।

The fire (पावकः $^{1/1}$) does not (न $^{0}$) burn (दहति $^{III/1}$) this (एनम् $^{2/1}$) [ātmā].

Sentence 3:

आपः $^{1/3}$ च $^{0}$ एनम् $^{2/1}$ न $^{0}$ क्लेदयन्ति $^{III/3}$

The water (आपः $^{1/3}$) does not (न $^{0}$) drown (क्लेदयन्ति $^{III/3}$) this (एनम् $^{2/1}$) [ātmā].

Sentence 4:

मारुतः $^{1/1}$ [एनम् $^{2/1}$ आत्मानम् $^{2/1}$] न $^{0}$ शोषयति $^{III/1}$ ॥२.२३॥

The wind (मारुतः $^{1/1}$) does not (न $^{0}$) dry (शोषयति $^{III/1}$) [this ātmā].

## अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
## नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२.२४॥

acchedyo'yamadāhyo'yamakledyo'śoṣya eva ca ।

nityaḥ sarvagataḥ sthāṇuracalo'yaṃ sanātanaḥ||2.24||

अच्छेद्यः $^{1/1}$ अयम् $^{1/1}$ अदाह्यः $^{1/1}$ अयम् $^{1/1}$ अक्लेद्यः $^{1/1}$ अशोष्यः $^{1/1}$ एव $^{0}$ च $^{0}$ ।

नित्यः $^{1/1}$ सर्वगतः $^{1/1}$ स्थाणुः $^{1/1}$ अचलः $^{1/1}$ अयम् $^{1/1}$ सनातनः $^{1/1}$ ॥२.२४॥

- अच्छेद्यः [acchedyaḥ] = that which cannot be cut = अच्छेद्य (m.) + 1/1
  - छिद् (to cut) + ण्यत् (object which can be done) = छेद्य
  - न छेद्यः इति अच्छेद्यः । नञ्तत्पुरुषसमासः
- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- अदाह्यः [adāhyaḥ] = that which cannot be burned = अदाह्य (m.) + 1/1
  - दह् (to burn) + ण्यत् (object which can be done) = दाह्य
  - न दाह्यः इति अदाह्यः । नञ्तत्पुरुषसमासः

- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- अक्लेद्यः [akledyaḥ] = that which cannot be wet = अक्लेद्य (m.) + 1/1
    - क्लिद् (to wet) + ण्यत् (object which can be done)
      = क्लेद्य
    - न क्लेद्यः इति अक्लेद्यः । नञ्तत्पुरुषसमासः
- अशोष्यः [aśoṣyaḥ] = that which cannot be dried = अशोष्य (m.) + 1/1
    - शुष् (to dry) + ण्यत् (object which can be done)
      = शोष्य
    - न शोष्यः इति अशोष्यः । नञ्तत्पुरुषसमासः
- एव [eva] = indeed = अव्ययम्
- च [ca] = and = अव्ययम्
- नित्यः [nityaḥ] = changeless = नित्य (m.) + 1/1
- सर्वगतः [sarvagataḥ] = all pervasive = सर्वगत (m.) + 1/1
- स्थाणुः [sthāṇuḥ] = stable = सर्वगत (m.) + 1/1
- अचलः [acalaḥ] = immovable = अचल (m.) + 1/1
- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- सनातनः [sanātanaḥ] = eternal = सनातन (m.) + 1/1

This (self) cannot be cut, burnt, drowned, or dried. It is changeless, all-pervading, stable, immovable, and eternal.

## अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
## तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२.२५॥

avyakto'yamacintyo'yamavikāryo'yamucyate |

tasmādevaṃ viditvainaṃ nānuśocitumarhasi ||2.25||

अव्यक्तः 1/1 अयम् 1/1 अचिन्त्यः 1/1 अयम् 1/1 अविकार्यः 1/1 अयम् 1/1 उच्यते III/1 ।

तस्मात् $^{5/1}$ एवम् $^{0}$ विदित्वा $^{0}$ एनम् $^{2/1}$ न $^{0}$ अनुशोचितुम् $^{0}$ अर्हसि $^{II/1}$ ॥२.२५॥

- अव्यक्तः [avyaktaḥ] = unmanifest = अव्यक्त (m.) + 1/1
    - वि + अञ्ज् (to manifest) + क्त (...ed)
      = व्यक्त
    - न व्यक्तः अव्यक्तः । नञ्तत्पुरुषसमासः
- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- अचिन्त्यः [acintyaḥ] = not an object of thinking = अचिन्त्य (m.) + 1/1
    - चिन्त् (to think) + ण्यत् (object fit to be …ed)
      = चिन्त्य
    - न चिन्त्यः अचिन्त्यः । नञ्तत्पुरुषसमासः
- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- अविकार्यः [avikāryaḥ] = not subject to change = अविकार्य (m.) + 1/1
    - वि + कृ (to modify) + ण्यत् (object fit to be …ed)
      = विकार्य
    - न विकार्यः अविकार्यः । नञ्तत्पुरुषसमासः
- अयम् [ayam] = this [ātmā] = इदम् (pron. m.) + 1/1
- उच्यते [ucyate] = is said to be = वच् (2P) to say + लट्/कर्मणि/III/1
- तस्मात् [tasmāt] = therefore = तद् (pron. m.) + 5/1
- एवम् [evam] = in this manner = अव्ययम्
- विदित्वा [viditvā] = having known = अव्ययम्
    - विद् (2P) to know + क्त्वा (having …ed)
- एनम् [enam] = this [ātmā] = इदम् (pron. m.) + 2/1
- न [na] = not = अव्ययम्
- अनुशोचितुम् [anuśocitum] = to grieve = अव्ययम्
    - अनु + शुच् (to grieve) + तुम् (to infinitive)
- अर्हसि [arhasi] = (you) deserve = अर्ह् (1P) to deserve + लट्/कर्तरि/II/1

This (self) is said to be unmanifet, not an object of thought, and not subject to change. Therefore, knowing this, you should not grieve.

Sentence 1:

अयम्$^{1/1}$ अव्यक्तः$^{1/1}$ [उच्यते$^{III/1}$] ।

This [self] (अयम्$^{1/1}$) is said to be (उच्यते$^{III/1}$) unmanifest (अव्यक्तः$^{1/1}$).

Sentence 2:

अयम्$^{1/1}$ अचिन्त्यः$^{1/1}$ [उच्यते$^{III/1}$] ।

This [self] (अयम्$^{1/1}$) is said to be (उच्यते$^{III/1}$) not subject of thinking (अचिन्त्यः$^{1/1}$).

Sentence 3:

अयम्$^{1/1}$ अविकार्यः$^{1/1}$ उच्यते$^{III/1}$ ।

This [self] (अयम्$^{1/1}$) is said to be (उच्यते$^{III/1}$) not subject to change (अविकार्यः$^{1/1}$).

Sentence 4:

तस्मात्$^{5/1}$ एवम्$^{0}$ एनम्$^{2/1}$ विदित्वा$^{0}$ [त्वम्$^{1/1}$] अनुशोचितुम्$^{0}$ न$^{0}$ अर्हसि$^{II/1}$ ॥२.२५॥

Therefore (तस्मात्$^{5/1}$), knowing (विदित्वा$^{0}$ [) this [self] (एनम्$^{2/1}$) in this manner (एवम्$^{0}$), [you (त्वम्$^{1/1}$)] need (अर्हसि$^{II/1}$) not (न$^{0}$) grieve (अनुशोचितुम्$^{0}$).

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**

**तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥२.२६॥**

atha cainaṃ nityajātaṃ nityaṃ vā manyase mṛtam |

tathāpi tvaṃ mahābāho naivaṃ śocitumarhasi ||2.26||

अथ $^{0}$ च $^{0}$ एनम् $^{2/1}$ नित्यजातम् $^{2/1}$ नित्यम् $^{2/1}$ वा $^{0}$ मन्यसे $^{II/1}$ मृतम् $^{2/1}$ ।

तथा $^{0}$ अपि $^{0}$ त्वम् $^{1/1}$ महाबाहो $^{8/1}$ न $^{0}$ एवम् $^{0}$ शोचितुम् $^{0}$ अर्हसि $^{II/1}$ ॥२.२६॥

- अथ [atha] = if = अव्ययम्
- च [ca] = and = अव्ययम्
- एनम् [enam] = this [ātmā] = इदम् (pron. m.) + कर्मणि to मन्यसे 2/1
- नित्यजातम् [nityajātam] = always being born = नित्यजात (m.) + 2/1
    - नित्यं जातः इति नित्यजातः । कर्मधारयतत्पुरुषसमासः ।
- नित्यम् [nityam] = eternal = नित्य (m.) + 2/1
- वा [vā] = or = अव्ययम्
- मन्यसे [manyase] = (you) consider = मन् (4A) to consider + लट्/कर्तरि/II/1
- मृतम् [mṛtam] = dead = मृत (m.) + 2/1
- तथा [tathā] = then = अव्ययम्
- अपि [api] = even = अव्ययम्
- त्वम् [tvam] = you = युष्मद् (pron. m.) + कर्तरि to अर्हसि 1/1
- महाबाहो [mahābāho] = O! mighty armed = महाबाहु (pron. m.) + सम्बोधने 1/1
- न [na] = not = अव्ययम्
- एवम् [evam] = in this manner = अव्ययम्
- शोचितुम् [śocitum] = to grieve = अव्ययम्
    - शुच् (to grieve) + तुम् (to infinitive)
- अर्हसि [arhasi] = (you) deserve = अर्ह् (1P) to deserve + लट्/कर्तरि/II/1

And if you take this self to have constant birth and death, even then, Oh! Mighty armed, you ought not to grieve for the self in this manner.

Sentence 1:

अथ $^{0}$ च $^{0}$ एनम् $^{2/1}$ नित्यजातम् $^{2/1}$ नित्यम् $^{2/1}$ मृतम् $^{2/1}$ वा $^{0}$ मन्यसे $^{II/1}$ ।

यथा⁰ कृताय $^{4/1}$ (4 points) विजिताय $^{4/1}$ अधरेयाः $^{1/3}$ (त्रेत 3 pts, द्वपर 2pts, कलि 1pts) संयन्ति $^{III/3}$ (अधिके अन्तर्भवति)

एवम् $^{0}$ एनं $^{2/1}$ सर्वं $^{2/1}$ तत् $^{2/1}$ अभिसमेति $^{III/1}$ (प्राप्नोति) [यत् $^{2/1}$ किञ्चित् $^{2/1}$ प्रजाः $^{1/3}$ साधु $^{2/1}$ कुर्वन्ति $^{III/3}$]

यः $^{1/1}$ तद् $^{2/1}$ (ब्रह्म $^{2/1}$) वेद $^{III/1}$ यत् $^{2/1}$ (ब्रह्म $^{2/1}$) सः $^{1/1}$ (रैक्व-मुनिः $^{1/1}$) वेद $^{III/1'}$ इति श्रुतेः $^{5/1}$ (छा० 4.1.4)।

अधरेयाः अधिके अन्तर्भवति ।

प्रजाः यत् किञ्च साधु सत्कर्म कुर्वन्ति, सः तत् सर्वं अभिसमेति प्राप्नोति ।

रैक्वमुनिः यद् ब्रह्म वेद, यः तद् ब्रह्म वेद ।

'सर्वं कर्माखिलम्' इति च वक्ष्यति।

तस्मात् $^{5/1}$ प्राक् $^{0}$ ज्ञाननिष्ठाधिकारप्राप्तेः $^{5/1}$ कर्मणि $^{7/1}$ अधिकृतेन $^{3/1}$ (पुरुषेण $^{3/1}$) कूपतडागादि-अर्थस्थानीयम् $^{1/1}$ अपि $^{0}$ कर्म $^{1/1}$ कर्तव्यम् $^{1/1}$ (योगबुद्ध्या $^{3/1}$ ज्ञान-अधिकारप्राप्ति-अर्थम् $^{0}$) ॥

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**

**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥२.४७॥**

karmaṇyevādhikāraste mā phaleṣu kadācana |

mā karmaphalaheturbhūrmā te saṅgo'stvakarmaṇi ||2.47||

कर्मणि $^{7/1}$ एव $^{0}$ अधिकारः $^{1/1}$ ते $^{6/1}$ मा $^{0}$ फलेषु $^{7/3}$ कदाचन $^{0}$ ।

मा $^{0}$ कर्मफलहेतुः $^{1/1}$ भूः $^{II/1}$ मा $^{0}$ ते $^{6/1}$ सङ्गः $^{1/1}$ अस्तु $^{III/1}$ अकर्मणि $^{7/1}$ ॥२.४७॥

- कर्मणि [karmaṇi] = in action = कर्मन् (n.) + 7/1
- एव [eva] = only = अव्ययम्
- अधिकारः [adhikāraḥ] = choice = अधिकार (m.) + 1/1
- ते [te] = your = युष्मद् (pron. m.) + 6/1
- मा [mā] = not = अव्ययम्

- फलेषु [phaleṣu] = in the results = फल (n.) + 7/3
- कदाचन [kadācana] = anytime = अव्ययम्
    - कदा + चन (a particle attached to interrogative pronoun to make indefinite pronoun)
- मा [mā] = not = अव्ययम्
- कर्मफलहेतुः [karmaphalahetuḥ] = the cause of the results = कर्मफलहेतु (m.) + 1/1
- भूः [bhūḥ] = be = भू (1P) to be + लुङ्/कर्तरि/II/1
    - By न माङ्योगे । ~ अट्, the अट्-आगम does not come.
- मा [mā] = not = अव्ययम्
- ते [te] = your = युष्मद् (pron. m.) + 6/1
- सङ्गः [saṅgaḥ] = attachment = सङ्ग (m.) + 1/1
- अस्तु [astu] = be = अस् (2P) to be + लोट्/कर्तरि/III/1
- अकर्मणि [akarmaṇi] = in inaction = अकर्मन् (n.) + 7/1

Your choice is in action only, never in the results thereof. Do not be the author of the results of action. Let your attachment not be to inaction.

Sentence 1:

ते $^{6/1}$ अधिकारः $^{1/1}$ कर्मणि $^{7/1}$ एव $^{0}$, मा $^{0}$ फलेषु $^{7/3}$ कदाचन $^{0}$ ।

Your (ते $^{6/1}$) choice (अधिकारः $^{1/1}$) is in action (कर्मणि $^{7/1}$) only (एव $^{0}$), never (मा $^{0}$) in the results (फलेषु $^{7/3}$) thereof (कदाचन $^{0}$).

Sentence 2:

मा $^{0}$ कर्मफलहेतुः $^{1/1}$ भूः $^{II/1}$

Do not be (मा $^{0}$ भूः $^{II/1}$) the author of the results of action (कर्मफलहेतुः $^{1/1}$).

Sentence 3:

**ते** $^{6/1}$ **सङ्गः** $^{1/1}$ **अकर्मणि** $^{7/1}$ **मा** $^{0}$ **अस्तु** $^{III/1}$ ॥२.४७॥

Let your (**ते** $^{6/1}$) attachment (**सङ्गः** $^{1/1}$) not be (**मा** $^{0}$ **अस्तु** $^{III/1}$) to inaction (**अकर्मणि** $^{7/1}$).

तव $^{6/1}$ च $^{0}$ --

(2.47) – कर्मणि $^{7/1}$ एव $^{0}$ अधिकारः $^{1/1}$ न $^{0}$ ज्ञाननिष्ठायां $^{7/1}$ ते $^{6/1}$ तव $^{6/1}$। तत्र $^{0}$ च $^{0}$ कर्म $^{2/1}$ कुर्वतः $^{6/1}$ मा $^{0}$ फलेषु $^{7/3}$ अधिकारः $^{1/1}$ अस्तु $^{III/1}$, कर्मफलतृष्णा $^{1/1}$ मा $^{0}$ भूत् $^{III/1}$ कदाचन $^{0}$ कस्याञ्चित् $^{7/1}$ अपि $^{0}$ अवस्थायाम् $^{7/1}$ इत्यर्थः $^{1/1}$। यदा $^{0}$ कर्मफले $^{7/1}$ तृष्णा $^{1/1}$ ते $^{6/1}$ स्यात् $^{III/1}$ तदा $^{0}$ कर्मफलप्राप्तेः $^{6/1}$ हेतुः $^{1/1}$ स्याः $^{II/1}$, एवं $^{0}$ मा $^{0}$ कर्मफलहेतुः $^{1/1}$ भूः $^{II/1}$। यदा $^{0}$ हि $^{0}$ कर्मफलतृष्णाप्रयुक्तः $^{1/1}$ कर्मणि $^{7/1}$ प्रवर्तते $^{III/1}$ तदा $^{0}$ कर्मफलस्य $^{6/1}$ एव $^{0}$ जन्मनः $^{6/1}$ हेतुः $^{1/1}$ भवेत् $^{III/1}$। यदि $^{0}$ कर्मफलं $^{1/1}$ न $^{0}$ इष्यते $^{III/1}$, किं $^{0}$ कर्मणा $^{3/1}$ दुःखरूपेण $^{3/1}$? इति $^{0}$ मा $^{0}$ ते $^{6/1}$ तव $^{6/1}$ सङ्गः $^{1/1}$ अस्तु $^{III/1}$ अकर्मणि $^{7/1}$ अकरणे $^{7/1}$ प्रीतिः $^{1/1}$ मा $^{0}$ भूत् $^{III/1}$।।

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥२.४८॥**

yogasthaḥ kuru karmāṇi saṅgaṃ tyaktvā dhanañjaya |

siddhyasiddhyoḥ samo bhūtvā samatvaṃ yoga ucyate ||2.48||

योगस्थः $^{1/1}$ कुरु $^{II/1}$ कर्माणि $^{2/3}$ सङ्गम् $^{2/1}$ त्यक्त्वा $^{0}$ धनञ्जय $^{8/1}$ ।

सिद्ध्यसिद्ध्योः $^{7/2}$ समः $^{1/1}$ भूत्वा $^{0}$ समत्वम् $^{1/1}$ योगः $^{1/1}$ उच्यते $^{III/1}$ ॥२.४८॥

- योगस्थः [yogasthaḥ] = the one who remains steadfast in yoga = योगस्थ (m.) + 1/1
- कुरु [kuru] = do = कृ (8U) to do + लोट्/कर्तरि/II/1
- कर्माणि [karmāṇi] = actions to be done, duties = कर्मन् (n.) + 2/3
- सङ्गम् [saṅgam] = attachment = सङ्ग (m.) + 2/1
- त्यक्त्वा [tyaktvā] = having given up = अव्ययम्
    - त्यज् (1P) to give up + क्त्वा (…ed)
- धनञ्जय [Dhanañjaya] = the one who conquer over the wealth (another name of Arjuna) = धनञ्जय (m.) + सम्बोधने 1/1

- सिद्ध्यसिद्ध्योः [siddhyasiddhyoḥ] = with reference to success and failure = सिद्ध्यसिद्धि (f.) + 7/2
    - सिद्धिः च असिद्धिः च सिद्ध्यसिद्धी । इतरेतरद्वन्द्वसमासः
- समः [samaḥ] = the same = सम (m.) + 1/1
- भूत्वा [bhūtvā] = having been = अव्ययम्
    - भू (1P) to be + त्त्वा (…ed)
- समत्वम् [samatvam] = evenness of the mind = समत्व (n.) + 1/1
- योगः [yogaḥ] = yoga = योग (m.) + 1/1
- उच्यते [ucyate] = is said = वच् (2P) to say + लट्/कर्मणि/III/1

O! Dhanañjaya! Remaining steadfast in yoga, perform actions, abandoning attachment, remaining the same to success and failure alike. This evenness of mind is called yoga.

Sentence 1:

धनञ्जय $^{8/1}$ सङ्गम् $^{2/1}$ त्यक्त्वा $^{0}$ सिद्ध्यसिद्ध्योः $^{7/2}$ समः $^{1/1}$ भूत्वा $^{0}$ योगस्थः $^{1/1}$ कर्माणि $^{2/3}$ कुरु $^{II/1}$

धनञ्जय $^{8/1}$ (O! Dhanañjaya!) त्यक्त्वा $^{0}$ (giving up) सङ्गम् $^{2/1}$ (attachment), भूत्वा $^{0}$ (being) समः $^{1/1}$ (the same) सिद्ध्यसिद्ध्योः $^{7/2}$ (in success and failure), योगस्थः $^{1/1}$ (being steadfast in yoga) कुरु $^{II/1}$ (perform) कर्माणि $^{2/3}$ (actions to be done).

Sentence 2:

समत्वम् $^{1/1}$ योगः $^{1/1}$ उच्यते $^{III/1}$ ॥२.४८॥

समत्वम् $^{1/1}$ (The evenness) उच्यते $^{III/1}$ (is called) योगः $^{1/1}$ (yoga)॥२.४८॥

यदि $^{0}$ कर्मफलप्रयुक्तेन $^{3/1}$ न $^{0}$ कर्तव्यं $^{1/1}$ कर्म $^{1/1}$, कथं $^{0}$ तर्हि $^{0}$ कर्तव्यम् $^{1/1}$ इति $^{0}$; उच्यते $^{III/1}$ --

(2.48) – योगस्थः $^{1/1}$ सन् $^{1/1}$ कुरु $^{II/1}$ कर्माणि $^{2/3}$ केवलम् $^{0}$ ईश्वरार्थम् $^{0}$; तत्र $^{0}$ अपि $^{0}$ 'ईश्वरः $^{1/1}$ मे $^{6/1}$ तुष्यतु $^{III/1}$' इति $^{0}$ सङ्गं $^{2/1}$ त्यक्त्वा $^{0}$ धनञ्जय $^{8/1}$। फलतृष्णाशून्येन $^{3/1}$ क्रियमाणे $^{7/1}$ कर्मणि $^{7/1}$ सत्त्वशुद्धिजा $^{1/1}$ ज्ञानप्राप्तिलक्षणा $^{1/1}$ सिद्धिः $^{1/1}$, तद्-विपर्ययजा $^{1/1}$ असिद्धिः $^{1/1}$, तयोः $^{7/2}$ सिद्ध्यसिद्ध्योः

[7/2] अपि [0] समः [1/1] तुल्यः [1/1] भूत्वा [0] कुरु [II/1] कर्माणि [2/3]। कः [1/1] असौ [1/1] योगः [1/1] "यत्रस्थः कुरु" इति उक्तम् [1/1]? इदम् [1/1] एव तत् [1/1] -- सिद्ध्यसिद्ध्योः [7/2] समत्वं [1/1] योगः [1/1] उच्यते [III/1]।।

## दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
## बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥२.४९॥

dūreṇa hyavaraṃ karma buddhiyogāddhanañjaya |

buddhau śaraṇamanviccha kṛpaṇāḥ phalahetavaḥ ||2.49||

दूरेण [3/1] हि [0] अवरम् [1/1] कर्म [1/1] बुद्धियोगात् [5/1] धनञ्जय [8/1] ।

बुद्धौ [7/1] शरणम् [2/1] अन्विच्छ [II/1] कृपणाः [1/3] फलहेतवः [1/3] ॥२.४९॥

- दूरेण [dūreṇa] = by far = दूर (n.) + 3/1
    - 3rd case ending used for दूर word by 2.3.35 दूरान्तिकार्थेभ्यो द्वितीया च ।
- हि [hi] = therefore = अव्ययम्
- अवरम् [avaram] = inferior = अवर (n.) + 1/1
- कर्म [karma] = action = कर्मन् (n.) + 1/1
- बुद्धियोगात् [buddhiyogāt] = than *buddhi-yoga* = बुद्धियोग (m.) + विभक्ते 5/1
- धनञ्जय [Dhanañjaya] = the one who conquer over the wealth (another name of Arjuna) = धनञ्जय (m.) + सम्बोधने 1/1
- बुद्धौ [buddhau] = in proper attitude = बुद्धि (f.) + अधिकरणे to अन्विच्छ 7/1
- शरणम् [buddhau] = refuge = शरण (n.) + कर्मणि to अन्विच्छ 2/1
- अन्विच्छ [anviccha] = seek = अनु + इष् (6P) to seek + लोट्/कर्तरि/II/1
- कृपणाः [kṛpaṇāḥ] = misers = कृपण (m.) + 1/3
- फलहेतवः [phalahetavaḥ] = those who perform actions only for results = फलहेतु (m.) + 1/3

Action (based on desire) is therefore far inferior to that performed with the proper attitude of karma-yoga. Seek refuge in this buddhi-yoga (of proper attitude), O! Dhanañjaya!  Those who perform action only for the results are misers.

Sentence 1:

कर्म $^{1/1}$ बुद्धियोगात् $^{5/1}$ दूरेण $^{3/1}$ हि $^{0}$ अवरम् $^{1/1}$ धनञ्जय $^{8/1}$ ।

Action (based on desire) (कर्म $^{1/1}$) is therefore (हि $^{0}$) far (दूरेण $^{3/1}$) inferior (अवरम् $^{1/1}$) to that performed with the proper attitude of karma-yoga (बुद्धियोगात् $^{5/1}$) O! Dhanañjaya! (धनञ्जय $^{8/1}$).

Sentence 2:

शरणम् $^{2/1}$ बुद्धौ $^{7/1}$ अन्विच्छ $^{II/1}$

Seek (अन्विच्छ $^{II/1}$) refuge (शरणम् $^{2/1}$) in this buddhi-yoga (बुद्धौ $^{7/1}$).

Sentence 3:

कृपणाः $^{1/3}$ फलहेतवः $^{1/3}$ ॥२.४९॥

Those who perform action only for the results (फलहेतवः $^{1/3}$) are misers (कृपणाः $^{1/3}$).

यत्$^{1/1}$ पुनः समत्व-बुद्धि-युक्तम्$^{1/1}$ ईश्वर-आराधनार्थम्$^{1/1}$ कर्म$^{1/1}$ उक्तम्$^{1/1}$, तस्मात्$^{5/1}$ कर्मणः$^{5/1}$ --

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय। बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः।।2.49।।

दूरेण$^{3/1}$ अतिविप्रकर्षेण$^{3/1}$ अत्यन्तम्$^{0}$ एव$^{0}$ हि$^{0}$ अवरम्$^{1/1}$ अधमं$^{1/1}$ निकृष्टं$^{1/1}$ कर्म$^{1/1}$ फलार्थिना$^{3/1}$ क्रियमाणं$^{1/1}$ बुद्धियोगात्$^{5/1}$ समत्वबुद्धियुक्तात्$^{5/1}$ कर्मणः$^{5/1}$, जन्ममरणादिहेतुत्वात्$^{H5/1}$। हे$^{0}$ धनञ्जय$^{8/1}$, यतः$^{0 (5/1)}$ एवं$^{0}$ ततः$^{0 (5/1)}$ योगविषयायां$^{7/1}$ बुद्धौ$^{7/1}$ तत्परिपाकजायां$^{7/1}$ वा$^{0}$ सांख्यबुद्धौ$^{7/1}$ शरणम्$^{2/1}$ आश्रयम्$^{2/1}$ अभयप्राप्तिकारणम्$^{2/1}$ अन्विच्छ$^{II/1}$ प्रार्थयस्व$^{II/1}$, परमार्थज्ञानशरणः$^{1/1}$ भव$^{II/1}$ इति$^{0}$ अर्थः$^{1/1}$। यतः$^{0 (5/1)}$ अवरं$^{2/1}$ कर्म$^{2/1}$ कुर्वाणाः$^{1/3}$ कृपणाः$^{1/3}$ दीनाः$^{1/3}$ फलहेतवः$^{1/3}$ फलतृष्णाप्रयुक्ताः$^{1/3}$ सन्तः$^{1/3}$, "यः$^{1/1}$ वै$^{0}$ एतत्$^{2/1}$ अक्षरं$^{2/1}$ गार्गि$^{8/1}$ अविदित्वा$^{0}$ अस्मात्$^{5/1}$ लोकात्$^{5/1}$ प्रैति$^{III/1}$ सः$^{1/1}$ कृपणः$^{1/1}$" इति$^{0}$ श्रुतेः$^{H5/1}$ ।।

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥२.५०॥**

buddhiyukto jahātīha ubhe sukṛtaduṣkṛte |

tasmādyogāya yujyasva yogaḥ karmasu kauśalam ||2.50||

बुद्धियुक्तः$^{1/1}$ जहाति$^{III/1}$ इह$^{0}$ उभे$^{2/2}$ सुकृतदुष्कृते$^{2/2}$ ।

तस्मात्$^{5/1}$ योगाय$^{4/1}$ युज्यस्व$^{II/1}$ योगः$^{1/1}$ कर्मसु$^{7/3}$ कौशलम्$^{1/1}$ ॥२.५०॥

- बुद्धियुक्तः [buddhiyuktaḥ] = One who is endowed with the *samatva-buddhi* = बुद्धियुक्त (m.) + 1/1
- जहाति [jahāti] = gives up = हा (3P) to give up + लट्/कर्तरि/III/1
- इह [iha] = here = अव्ययम्
- उभे [ube] = both = उभ (pron. n.) + adj. to सुकृतदुष्कृते 2/2
- सुकृतदुष्कृते [sukṛtaduṣkṛte] = *puṇya* and *pāpa* = सुकृतदुष्कृत (n.) + कर्मणि to जहाति 2/2

- सुकृतं (*puṇya*) च दुष्कृतं (*pāpa*) च सुकृतदुष्कृते (इतरेतरद्वन्द्वसमासः)
- तस्मात् [tasmāt] = therefore = तद् (pron. n.) + हेतौ 5/1
- योगाय [yogāya] = to *karma-yoga* = योग (m.) + 4/1
- युज्यस्व [yujyasva] = commit yourself = युज् (4A) to concentrate the mind + लोट्/कर्तरि/II/1
- योगः [yogaḥ] = *karma-yoga* = योग (m.) + 1/1
- कर्मसु [karmasu] = in action = कर्मन् (n.) + 7/3
- कौशलम् [kauśalam] = discretion = कौशल (n.) + 1/1
    - कुशलस्य भावः कौशलम्
    - कुशल + ङस् + ष्यञ्

One who is endowed with the *samatva-buddhi*, sameness of mind, gives up both *puṇya* and *pāpa* here, in this world. Therefore, commit yourself to *karma-yoga*. *Karma-yoga* is discretion in action.

Sentence 1:

बुद्धियुक्तः $^{1/1}$ उभे $^{2/2}$ सुकृतदुष्कृते $^{2/2}$ इह $^{0}$ जहाति $^{III/1}$ ।

One who is endowed with the *samatva-buddhi*, sameness of mind (बुद्धियुक्तः $^{1/1}$), gives up (जहाति $^{III/1}$) both (उभे $^{2/2}$) *puṇya* and *pāpa* (सुकृतदुष्कृते $^{2/2}$) here, in this world (इह $^{0}$).

Sentence 2:

तस्मात् $^{5/1}$ योगाय $^{4/1}$ युज्यस्व $^{II/1}$

Therefore (तस्मात् $^{5/1}$), commit yourself (युज्यस्व $^{II/1}$) to *karma-yoga* (योगाय $^{4/1}$).

Sentence 3:

योगः $^{1/1}$ कर्मसु $^{7/3}$ कौशलम् $^{1/1}$ ॥२.५०॥

*Karma-yoga* (योगः $^{1/1}$) is discretion (कौशलम् $^{1/1}$) in action (कर्मसु $^{7/3}$).

समत्वबुद्धियुक्तः $^{1/1}$ सन् $^{1/1}$ स्वधर्मम् $^{2/1}$ अनुतिष्ठन् $^{1/1}$ यत् $^{2/1}$ फलं $^{2/1}$ प्राप्नोति $^{III/1}$ तत् $^{2/1}$ श्रुणु $^{II/1}$ --

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।

तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्।।2.50।।

बुद्धियुक्तः $^{1/1}$ कर्मसमत्वविषयया $^{3/1}$ बुद्ध्या $^{3/1}$ युक्तः $^{1/1}$ बुद्धियुक्तः $^{1/1}$ सः $^{1/1}$ जहाति $^{III/1}$ परित्यजति $^{III/1}$ इह $^{0}$ अस्मिन् $^{7/1}$ लोके $^{7/1}$ उभे $^{2/2}$ सुकृत-दुष्कृते $^{2/2}$ पुण्यपापे $^{2/2}$ सत्त्वशुद्धि-ज्ञानप्राप्तिद्वारेण $^{3/1}$ यतः $^{0}$, तस्मात् $^{5/1}$ समत्वबुद्धियोगाय $^{4/1}$ युज्यस्व $^{II/1}$ घटस्व $^{II/1}$। योगः $^{1/1}$ हि $^{0}$ कर्मसु $^{7/3}$ कौशलम् $^{1/1}$ स्वधर्माख्येषु $^{7/3}$ कर्मसु $^{7/3}$ वर्तमानस्य $^{6/1}$ या $^{1/1}$ सिद्ध्यसिद्ध्योः $^{6/1}$ समत्वबुद्धिः $^{1/1}$ ईश्वरार्पितचेतस्तया $^{3/1}$ तत् $^{1/1}$ कौशलं $^{1/1}$ कुशलभावः $^{1/1}$। तत् $^{0}$ हि $^{0}$ कौशलं $^{1/1}$ यत् $^{0}$ बन्धनस्वभावानि $^{1/3}$ अपि $^{0}$ कर्माणि $^{1/3}$ समत्वबुद्ध्या $^{3/1}$ स्वभावात् $^{5/1}$ निवर्तन्ते $^{III/3}$। तस्मात् $^{5/1}$ समत्वबुद्धियुक्तः $^{1/1}$ भव $^{II/1}$ त्वम् $^{2/1}$ ।।

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥२.५१॥**

karmajaṃ buddhiyuktā hi phalaṃ tyaktvā manīṣiṇaḥ |

janmabandhavinirmuktāḥ padaṃ gacchantyanāmayam ||2.51||

कर्मजम् $^{2/1}$ बुद्धियुक्ताः $^{1/3}$ हि $^{0}$ फलम् $^{2/1}$ त्यक्त्वा $^{0}$ मनीषिणः $^{1/3}$ ।

जन्मबन्धविनिर्मुक्ताः $^{1/3}$ पदम् $^{2/1}$ गच्छन्ति $^{III/3}$ अनामयम् $^{2/1}$ ॥२.५१॥

- कर्मजम् [karmajam] = born of action = कर्मज (n.) + adj. to फलम् 2/1

- बुद्धियुक्ताः [buddhiyuktāḥ] = those who are endowed with the *samatva-buddhi* = बुद्धियुक्त (m.) + 1/3
- हि [hi] = indeed = अव्ययम्
- फलम् [phalam] = result = फल (n.) + कर्मणि to त्यक्त्वा 2/1
- त्यक्त्वा [tyaktvā] = having given up = अव्ययम्
- मनीषिणः [manīṣiṇaḥ] = the wise = मनीषिन् (m.) + 1/3
    - मनीषा अस्य अस्ति इति
- जन्मबन्धविनिर्मुक्ताः [janmabandhavinirmuktāḥ] = those who are free from the bandage of birth = जन्मबन्धनिविर्मुक्त (m.) + 1/3
    - जन्म एव बन्धः इति जन्मबन्धः । कर्मधारयतत्पुरुषसमासः
    - जन्मबन्धेन विनिर्मुक्ताः जन्मबन्धविनिर्मुक्ताः । तृतीयातत्पुरुषसमासः
- पदम् [padam] = the end = पद (n.) + कर्मणि to गच्छन्ति 2/1
- गच्छन्ति [gacchanti] = they gain = गम् (1P) to go + लट्/कर्तरि/III/3
- अनामयम् [anāmayam] = free from all afflictions = अनामय (n.) + adj. to पदम् 2/1
    - अविद्यमानम् आमयम् यस्मिन् इति अनामयम् । NB

The wise, endowed with the attitude of *karma-yoga*, having given up the results of action free from the bandage of birth indeed accomplish the end that is free from all afflictions.

Sentence 1:

कर्मजम् $^{2/1}$ फलम् $^{2/1}$ त्यक्त्वा $^{0}$ मनीषिणः $^{1/3}$ बुद्धियुक्ताः $^{1/3}$ जन्मबन्धविनिर्मुक्ताः $^{1/3}$ अनामयम् $^{2/1}$ पदम् $^{2/1}$ हि $^{0}$ गच्छन्ति $^{III/3}$ ॥२.५१॥

The wise (मनीषिणः $^{1/3}$), endowed with the attitude of *karma-yoga* (बुद्धियुक्ताः $^{1/3}$), having given up (त्यक्त्वा $^{0}$) the results (फलम् $^{2/1}$) of action (कर्मजम् $^{2/1}$) free from the bandage of birth (जन्मबन्धविनिर्मुक्ताः $^{1/3}$) indeed (हि $^{0}$) accomplish (गच्छन्ति $^{III/3}$) the end (पदम् $^{2/1}$) that is free from all afflictions (अनामयम् $^{2/1}$).

यस्मात् $^{5/1}$ --

कर्मजम् $^{2/1}$ बुद्धियुक्ताः $^{1/3}$ हि $^{0}$ फलम् $^{2/1}$ त्यक्त्वा $^{0}$ मनीषिणः $^{1/3}$ ।

जन्मबन्धविनिर्मुक्ताः $^{1/3}$ पदम् $^{2/1}$ गच्छन्ति $^{III/3}$ अनामयम् $^{2/1}$ ॥२.५१॥

"कर्मजं $^{2/1}$ फलं $^{2/1}$ त्यक्त्वा $^{0}$" इति $^{0}$ व्यवहितेन $^{3/1}$ संबन्धः $^{1/1}$। इष्टानिष्टदेहप्राप्तिः $^{1/1}$ कर्मजं $^{1/1}$ फलं $^{1/1}$ कर्मभ्यो $^{5/3}$ जातं $^{1/1}$ । बुद्धियुक्ताः $^{1/3}$ समत्वबुद्धियुक्ताः $^{1/3}$ सन्तः $^{1/3}$ हि $^{0}$ = यस्मात् $^{5/1}$ फलं $^{2/1}$ त्यक्त्वा $^{0}$ परित्यज्य $^{0}$ मनीषिणः $^{1/3}$ = ज्ञानिनः $^{1/3}$ भूत्वा $^{0}$, जन्मबन्धविनिर्मुक्ताः $^{1/3}$ (जन्म $^{1/1}$ एव बन्धः $^{1/1}$ जन्मबन्धः $^{1/1}$, तेन $^{3/1}$ विनिर्मुक्ताः $^{1/3}$ जीवन्तः $^{1/3}$ एव $^{0}$ जन्मबन्धात् $^{5/1}$ विनिर्मुक्ताः $^{1/3}$ सन्तः $^{1/3}$, पदं $^{2/1}$ परमं $^{2/1}$ विष्णोः $^{6/1}$ मोक्षाख्यं $^{2/1}$ गच्छन्ति $^{III/3}$ अनामयं $^{2/1}$ = सर्वोपद्रवरहितम् $^{2/1}$ इत्यर्थः $^{1/1}$। अथवा $^{0}$ "बुद्धियोगाद् धनञ्जय" इत्यारभ्य $^{0}$ परमार्थदर्शनलक्षणा $^{1/1}$ एव $^{0}$ सर्वतःसंप्लुतोदकस्थानीया $^{1/1}$ कर्मयोगजसत्त्वशुद्धिजनिता $^{1/1}$ बुद्धिः $^{1/1}$ दर्शिता $^{1/1}$, साक्षात् $^{0}$ सुकृतदुष्कृतप्रहाणादि-हेतुत्वश्रवणात् $^{5/1}$ ॥

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥२.५२॥**

yadā te mohakalilaṃ buddhirvyatitariṣyati |

tadā gantāsi nirvedaṃ śrotavyasya śrutasya ca ||2.52||

यदा $^{0}$ ते $^{6/1}$ मोहकलिलम् $^{2/1}$ बुद्धिः $^{1/1}$ व्यतितरिष्यति $^{III/1}$ ।

तदा $^{0}$ गन्तासि $^{II/1}$ निर्वेदम् $^{2/1}$ श्रोतव्यस्य $^{6/1}$ श्रुतस्य $^{6/1}$ च $^{0}$ ॥२.५२॥

- यदा [yadā] = when = अव्ययम्
- ते [te] = your = युष्मद् (pron. m.) + 6/1
- मोहकलिलम् [mohakalilam] = the impurity of delusion = मोहकलिल (n.) + कर्मणि. to व्यतितरिष्यति 2/1
    - मोहः एव कलिलं मोहकलिलम् । कर्मधारयतत्पुरुषसमासः
- बुद्धिः [buddhiḥ] = intellect = बुद्धियुक्त (f.) + 1/1
- व्यतितरिष्यति [vyatitariṣyati] = will cross = वि + अति + तॄ (1P) to cross + लृट्/कर्तरि/III/1
- तदा [tadā] = then = अव्ययम्

- गन्तासि [gantāsi] = you will gain = गम् (1P) to go + लुट्/कर्तरि/II/1
- निर्वेदम् [nirvedam] = dispassion = निर्वेद (m.) + कर्मणि. to गन्तासि 2/1
- श्रोतव्यस्य [śrotavyasya] = what is yet to be heard = श्रोतव्य (n.) + 6/1
- श्रुतस्य [śrutasya] = what has already heard = श्रुत (n.) + 6/1
- च [ca] = and = अव्ययम्

When your intellect crosses over the impurity of delusion, then you shall gain a dispassion towards what has been heard and what is yet to be heard.

यदा $^{0}$ ते $^{6/1}$ बुद्धिः $^{1/1}$ मोहकलिलम् $^{2/1}$ व्यतितरिष्यति $^{III/1}$ ।

तदा $^{0}$ निर्वेदम् $^{2/1}$ श्रोतव्यस्य $^{6/1}$ श्रुतस्य $^{6/1}$ च $^{0}$ गन्तासि $^{II/1}$ ॥२.५२॥

Sentence 1 (यद्-clause):

यदा $^{0}$ ते $^{6/1}$ बुद्धिः $^{1/1}$ मोहकलिलम् $^{2/1}$ व्यतितरिष्यति $^{III/1}$ ।

When (यदा $^{0}$) your (ते $^{6/1}$) intellect (बुद्धिः $^{1/1}$) crosses over (व्यतितरिष्यति $^{III/1}$) the impurity of delusion (मोहकलिलम् $^{2/1}$),

Sentence 2 (तद्-clause):

तदा $^{0}$ निर्वेदम् $^{2/1}$ श्रोतव्यस्य $^{6/1}$ श्रुतस्य $^{6/1}$ च $^{0}$ गन्तासि $^{II/1}$ ॥२.५२॥

Then (तदा $^{0}$) you shall gain (गन्तासि $^{II/1}$) a dispassion (निर्वेदम् $^{2/1}$) towards what has been heard (श्रुतस्य $^{6/1}$) and (च $^{0}$) what is yet to be heard (श्रोतव्यस्य $^{6/1}$).

योग-अनुष्ठान-जनित-सत्त्वशुद्ध-जा $^{1/1}$ बुद्धिः $^{1/1}$ कदा $^{0}$ प्राप्स्यते $^{III/1}$ इत्युच्यते $^{III/1}$

यदा[0] ते[6/1] मोहकलिलम्[2/1] बुद्धिः[1/1] व्यतितरिष्यति[III/1] ।
तदा[0] गन्तासि[II/1] निर्वेदम्[2/1] श्रोतव्यस्य[6/1] श्रुतस्य[6/1] च[0] ॥२.५२॥
यदा[0] यस्मिन्[7/1] काले[7/1] ते[6/1] तव[6/1] मोहकलिलं[2/1] मोह-आत्मकम्[2/1] अविवेकरूपं[2/1] कालुष्यं[2/1] येन[3/1] (मोहकलिलेन[3/1]) आत्मानात्मविवेकबोधं[2/1] कलुषीकृत्य[0] विषयं[2/1] प्रति[0] अन्तःकरणं[1/1] प्रवर्तते[III/1], तत्[2/1] (मोहकलिलम्[2/1]) तव[6/1] बुद्धिः[1/1] व्यतितरिष्यति[III/1] व्यतिक्रमिष्यति[III/1], अतिशुद्धभावम्[2/1] आपत्स्यते[आङ् + पद् + लृट्/कर्तरि/III/1] इत्यर्थः।
तदा[0] तस्मिन्[7/1] काले[7/1] गन्तासि[II/1] प्राप्स्यसि[II/1] निर्वेदं[2/1] वैराग्यं[2/1] श्रोतव्यस्य[6/1] श्रुतस्य[6/1] च[0], तदा[0] श्रोतव्यं[1/1] श्रुतं[1/1] च[0] ते[6/1] निष्फलं[1/1] प्रतिभाति[III/1] इति[0] अभिप्रायः[1/1]।।

मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगमवाप्स्यामीति चेत्, तत् श्रृणु --

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।

समाधावचला बुद्धिस्तदा योगमवाप्स्यसि।।2.53।।

(2.53) -- श्रुतिविप्रतिपन्ना अनेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रवणैः प्रवृत्तिनिवृत्तिलक्षणैः विप्रतिपन्ना नानाप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिः यदा यस्मिन् काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती समाधौ, समाधीयते चित्तमस्मिन्निति समाधिः आत्मा, तस्मिन् आत्मनि इत्येतत्। अचला तत्रापि विकल्पवर्जिता इत्येतत्। बुद्धिः अन्तःकरणम्। तदा तस्मिन्काले योगम् अवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि।।

प्रश्नबीजं प्रतिलभ्य अर्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया --

अर्जुन उवाच

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।

स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्।।2.54।।

(2.54) -- स्थिता प्रतिष्ठिता 'अहमस्मि परं ब्रह्म' इति प्रज्ञा यस्य सः स्थितप्रज्ञः तस्य स्थितप्रज्ञस्य का भाषा किं भाषणं वचनं कथमसौ परैर्भाष्यते समाधिस्थस्य समाधौ स्थितस्य हे केशव। स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत। किम् आसीत व्रजेत किम् आसनं व्रजनं वा तस्य कथमित्यर्थः। स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति।।

यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः, यश्च कर्मयोगेन, तयोः 'प्रजहाति' इत्यारभ्य आ अध्यायपरिसमाप्तेः स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते। सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनानि उपदिश्यन्ते, यत्नसाध्यत्वात्। यानि

यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि --

श्री भगवानुवाच

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते।।2.55।।

(2.55) -- प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन्काले सर्वान् समस्तान् कामान् इच्छाभेदान् हे पार्थ, मनोगतान् मनसि प्रविष्टान् हृदि प्रविष्टान्। सर्वकामपरित्यागे तुष्टिकारणाभावात् शरीरधारणनिमित्तशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्ता, इत्यत उच्यते -- आत्मन्येव प्रत्यगात्मस्वरूपे एव आत्मना स्वेनैव बाह्यलाभनिरपेक्षः तुष्टः परमार्थदर्शनामृतरसलाभेन

अन्यस्मादलंप्रत्ययवान् स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य सः स्थितप्रज्ञः विद्वान् तदा उच्यते। त्यक्तपुत्रवित्तलोकैषणः संन्यासी आत्माराम आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः।।

किञ्च --

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।

वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।।2.56।।

(2.56) -- दुःखेषु आध्यात्मिकादिषु प्राप्तेषु न उद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयम् अनुद्विग्नमनाः। तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य, न अग्निरिव इन्धनाद्याधाने सुखान्यनु विवर्धते

स विगतस्पृहः। वीतरागभयक्रोधः रागश्च भयं च क्रोधश्च वीता विगता यस्मात् स वीतरागभयक्रोधः। स्थितधीः स्थितप्रज्ञो मुनिः संन्यासी तदा उच्यते।।

किञ्च --

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।

नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता।।2.57।।

(2.57) -- यः मुनिः सर्वत्र देहजीवितादिष्वपि अनभिस्नेहः अभिस्नेहवर्जितः तत्तत् प्राप्य शुभाशुभं तत्तत् शुभं अशुभं वा लब्ध्वा न अभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यति, अशुभं च प्राप्य न द्वेष्टि इत्यर्थः। तस्य एवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति।।

किञ्च --

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।2.58।।

(2.58) -- यदा संहरते सम्यगुपसंहरते च अयं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मः अङ्गानि इव यथा कूर्मः भयात् स्वान्यङ्गानि उपसंहरति सर्वशः सर्वतः, एवं ज्ञाननिष्ठः इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वविषयेभ्यः उपसंहरते। तस्य प्रज्ञा प्रतिष्ठिता इत्युक्तार्थं वाक्यम्।।

तत्र विषयाननाहरतः आतुरस्यापि इन्द्रियाणि कूर्माङ्गानीव संह्रियन्ते न तु तद्विषयो रागः स कथं संह्रियते इति

उच्यते --

विषया विनिवर्तन्ते निराहारस्य देहिनः।

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते।।2.59।।

(2.59) -- यद्यपि विषयाः विषयोपलक्षितानि विषयशब्दवाच्यानि इन्द्रियाणि निराहारस्य अनाह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिनो देहवतः रसवर्जं रसो रागो विषयेषु यः तं वर्जयित्वा। रसशब्दो रागे प्रसिद्धः, स्वरसेन प्रवृत्तः रसिकः रसज्ञः, इत्यादिदर्शनात्। सोऽपि रसो रञ्जनारूपः सूक्ष्मः अस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वा उपलभ्य

'अहमेव तत्' इति वर्तमानस्य निवर्तते निर्बीजं विषयविज्ञानं संपद्यते इत्यर्थः। न असति सम्यग्दर्शने रसस्य उच्छेदः। तस्मात् सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः।।

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षता आदौ इन्द्रियाणि स्ववशे स्थापयितव्यानि, यस्मात्तदनवस्थापने दोषमाह --

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।

इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः।।2.60।।

(2.60) -- यततः प्रयत्नं कुर्वतः अपि हि यस्मात् कौन्तेय पुरुषस्य विपश्चितः मेधाविनः अपि इति व्यवहितेन संबन्धः। इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्ति आकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनः।।

यतः तस्मात् --

तानि सर्वाणि संयम्य युक्त आसीत मत्परः।

वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।।2.61।।

(2.61) -- तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितः सन् आसीत मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य सः मत्परः, 'न अन्योऽहं तस्मात्' इति आसीत इत्यर्थः। वमासीनस्य यतेः वशे हि यस्य इन्द्रियाणि वर्तन्ते अभ्यासबलात् तस्य प्रज्ञा प्रतिष्ठिता।।

अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते --

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।

सङ्गात् संजायते कामः कामात्क्रोधोऽभिजायते।।2.62।।

(2.62) -- ध्यायतः चिन्तयतः विषयान् शब्दादीन् विषयविशेषान् आलोचयतः पुंसः पुरुषस्य सङ्गः आसक्तिः प्रीतिः तेषु विषयेषु उपजायते उत्पद्यते। सङ्गात् प्रीतेः संजायते समुत्पद्यते कामः तृष्णा। कामात् कुतश्चित् प्रतिहतात् क्रोधः अभिजायते।।

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।

स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति।।2.63।।

(2.63) -- क्रोधात् भवति संमोहः अविवेकः कार्याकार्यविषयः। क्रुद्धो हि संमूढः सन् गुरुमप्याक्रोशति। संमोहात् स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्यात् विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिः। ततः स्मृतिभ्रंशात् बुद्धिनाशः बुद्धेर्नाशः। कार्याकार्यविषयविवेकायोग्यता अन्तःकरणस्य बुद्धेर्नाश उच्यते। बुद्धिनाशात् प्रणश्यति। तावदेव हि पुरुषः यावदन्तःकरणं तदीयं कार्याकार्यविषयविवेकयोग्यम्। तदयोग्यत्वे नष्ट एव पुरुषो भवति। अतः तस्यान्तःकरणस्य बुद्धेर्नाशात् प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः।।

सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानम्। अथ इदानीं मोक्षकारणमिदमुच्यते --

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।

आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति।।2.64।।

(2.64) -- रागद्वेषवियुक्तैः रागश्च द्वेषश्च रागद्वेषौ, तत्पुरःसरा हि इन्द्रियाणां प्रवृत्तिः स्वाभाविकी, तत्र यो मुमुक्षुः भवति सः ताभ्यां वियुक्तैः श्रोत्रादिभिः इन्द्रियैः विषयान् अवर्जनीयान् चरन् उपलभमानः

आत्मवश्यैः आत्मनः वश्यानि वशीभूतानि इन्द्रियाणि तैः आत्मवश्यैः विधेयात्मा इच्छातः विधेयः आत्मा अन्तःकरणं यस्य सः अयं प्रसादम् अधिगच्छति। प्रसादः प्रसन्नता स्वास्थ्यम्।।

प्रसादे सति किं स्यात् इत्युच्यते --

प्रसादे सर्वदुःखानां हानिरस्योपजायते।

प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते।।2.65।।

(2.65) -- प्रसादे सर्वदुःखानाम् आध्यात्मिकादीनां हानिः विनाशः अस्य यतेः उपजायते। किञ्च -- प्रसन्नचेतसः

स्वस्थान्तःकरणस्य हि यस्मात् आशु शीघ्रं बुद्धिः पर्यवतिष्ठते आकाशमिव परि समन्तात् अवतिष्ठते, आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः।। एवं प्रसन्नचेतसः अवस्थितबुद्धेः कृतकृत्यता यतः, तस्मात् रागद्वेषवियुक्तैः इन्द्रियैः शास्त्राविरुद्धेषु अवर्जनीयेषु युक्तः समाचरेत् इति वाक्यार्थः।।

सेयं प्रसन्नता स्तूयते --

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।

न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्।।2.66।।

(2.66) -- नास्ति न विद्यते न भवतीत्यर्थः, बुद्धिः आत्मस्वरूपविषया अयुक्तस्य असमाहितान्तःकरणस्य। न च अस्ति अयुक्तस्य भावना आत्मज्ञानाभिनिवेशः। तथा -- न च अस्ति अभावयतः आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिः उपशमः। अशान्तस्य कुतः सुखम्? इन्द्रियाणां हि विषयसेवातृष्णातः निवृत्तिर्या तत्सुखम् , न विषयविषया तृष्णा। दुःखमेव हि सा। न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यते इत्यर्थः।।

अयुक्तस्य कस्माद्बुद्धिर्नास्ति इत्युच्यते --

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।

तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि।।2.67।।

(2.67) -- इन्द्रियाणां हि यस्मात् चरतां स्वस्वविषयेषु प्रवर्तमानानां यत् मनः अनुविधीयते अनुप्रवर्तते तत्

इन्द्रियविषयविकल्पनेन प्रवृत्तं मनः अस्य यतेः हरति प्रज्ञाम् आत्मानात्मविवेकजां नाशयति। कथम्? वायुः नावमिव अम्भसि उदके जिगमिषतां मार्गादुद्धृत्य उन्मार्गे यथा वायुः नावं प्रवर्तयति, एवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति।।

'यततो हि' इत्युपन्यस्तस्यार्थस्य अनेकधा उपपत्तिमुक्त्वा तं चार्थमुपपाद्य उपसंहरति --

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।2.68।।

(2.68) -- इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्, तस्मात् यस्य यतेः हे महाबाहो, निगृहीतानि सर्वशः सर्वप्रकारैः मानसादिभेदैः इन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः तस्य प्रज्ञा प्रतिष्ठिता।।

योऽयं लौकिको वैदिकश्च व्यवहारः स

उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य अविद्याकार्यत्वात् अविद्यानिवृत्तौ निवर्तते, अविद्यायाश्च विद्याविरोधात् निवृत्तिः, इत्येतमर्थं स्फुटीकुर्वन् आह --

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।

यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।।2.69।।

(2.69) -- या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात् सर्वभूतानां सर्वेषां भूतानाम्। किं तत् परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः। यथा नक्तञ्चराणाम् अहरेव सदन्येषां निशा भवति, तद्वत् नक्तञ्चरस्थानीयानामज्ञानां सर्वभूतानां निशेव निशा परमार्थतत्त्वम्, अगोचरत्वादतद्बुद्धीनाम्। तस्यां परमार्थतत्त्वलक्षणायामज्ञाननिद्रायाः प्रबुद्धो जागर्ति संयमी संयमवान्, जितेन्द्रियो योगीत्यर्थः। यस्यां

ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां प्रसुप्तान्येव भूतानि जाग्रति इति उच्यन्ते, यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः, सा निशा अविद्यारूपत्वात् परमार्थतत्त्वं पश्यतो मुनेः।। अतः कर्माणि अविद्यावस्थायामेव चोद्यन्ते, न

विद्यावस्थायाम्। विद्यायां हि सत्याम् उदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छति अविद्या। प्राक् विद्योत्पत्तेः अविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते। न अप्रमाणबुद्ध्या गृह्यमाणायाः

कर्महेतुत्वोपपत्तिः, 'प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म' इति हि कर्मणि कर्ता प्रवर्तते, न 'अविद्यामात्रमिदं सर्वं निशेव ' इति। यस्य पुनः 'निशेव अविद्यामात्रमिदं सर्वं भेदजातम्' इति ज्ञानं तस्य आत्मज्ञस्य सर्वकर्मसंन्यासे एव अधिकारो न प्रवृत्तौ। तथा च दर्शयिष्यति -- तद्बुद्धयस्तदात्मानः' इत्यादिना ज्ञाननिष्ठायामेव तस्य अधिकारम्।। तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिः इति चेत्, न; स्वात्मविषयत्वादात्मविज्ञानस्य। न हि आत्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षता, आत्मत्वादेव। तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य। न हि आत्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति। प्रमातृत्वं हि आत्मनः निवर्तयति अन्त्यं प्रमाणम्; निवर्तयदेव च अप्रमाणीभवति, स्वप्नकालप्रमाणमिव प्रबोधे। लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य। तस्मात् न आत्मविदः कर्मण्यधिकार इति सिद्धम्।।

विदुषः त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः, न तु असंन्यासिनः कामकामिनः इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन् आह --

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्। तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी।।2.70।।

(2.70) -- आपूर्यमाणम् अद्भिः अचलप्रतिष्ठम् अचलतया प्रतिष्ठा अवस्थितिः यस्य तम् अचलप्रतिष्ठं समुद्रम् आपः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्, तद्वत् कामाः विषयसंनिधावपि सर्वतः इच्छाविशेषाः यं पुरुषम् – समुद्रमिव आपः -- अविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति, सः शान्तिं मोक्षम् आप्नोति, न इतरः कामकामी, काम्यन्त इति कामाः विषयाः तान् कामयितुं शीलं यस्य सः कामकामी, नैव प्राप्नोति इत्यर्थः।।

यस्मादेवं तस्मात् -

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः।

निर्ममो निरहंकारः स शांतिमधिगच्छति।।2.71।।

(2.71) -- विहाय परित्यज्य कामान् यः संन्यासी पुमान् सर्वान् अशेषतः कार्त्स्न्येन चरति, जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः। निःस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य सः निःस्पृहः सन्, निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदम्

इत्यभिनिवेशवर्जितः, निरहंकारः विद्यावत्त्वादिनिमित्तात्मसंभावनारहितः इत्येतत्। सः एवंभूतः स्थितप्रज्ञः ब्रह्मवित् शान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्याम् अधिगच्छति प्राप्नोति ब्रह्मभूतो भवति इत्यर्थः।।

सैषा ज्ञाननिष्ठा स्तूयते।।

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति। स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति।।2.72।।

(2.72) -- एषा यथोक्ता ब्राह्मी ब्रह्मणि भवा इयं स्थितिः सर्वं कर्म संन्यस्य ब्रह्मरूपेणैव अवस्थानम् इत्येतत्। हे पार्थ, न एनां स्थितिं प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति। स्थित्वा अस्यां स्थितौ ब्राह्म्यां यथोक्तायां अन्तकालेऽपि अन्त्ये वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षम् ऋच्छति गच्छति। किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येव अवतिष्ठते स ब्रह्मनिर्वाणमृच्छति इति।।

1ॐ तत्सत् इति श्रीमद्भगवद्गीतासूपनिषत्सु 1ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे 1सांख्ययोगो नाम द्वितीयोऽध्यायः।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये द्वितीयोऽध्यायः।।

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥२.५३॥**

śrutivipratipannā te yadā sthāsyati niścalā |

samādhāvacalā buddhistadā yogamavāpsyasi ||2.53||

श्रुतिविप्रतिपन्ना $^{1/1}$ ते $^{6/1}$ यदा $^{0}$ स्थास्यति $^{III/1}$ निश्चला $^{1/1}$ ।

समाधौ $^{7/1}$ अचला $^{1/1}$ बुद्धिः $^{1/1}$ तदा $^{0}$ योगम् $^{2/1}$ अवाप्स्यसि $^{II/1}$ ॥२.५३॥

- श्रुतिविप्रतिपन्ना [śrutivipratipannā] = distracted by the Vedas = श्रुतिविप्रतिपन्ना (f.) + adj. to बुद्धिः 1/1
  - वि + प्रति + पद् + क्त (कर्मणि) = विप्रतिपन्न
  - श्रुतिभिः विप्रतिपन्ना श्रुतिविप्रतिपन्ना (3T)
- ते [te] = your = युष्मद् (pron. m.) + 6/1
- यदा [yadā] = when = अव्ययम्
- स्थास्यति [sthāsyati] = will established = स्था (1P) to stay + लृट्/कर्तरि/III/1
- निश्चला [niścalā] = remain steady = निश्चला (f.) + adj. to बुद्धिः 1/1
- समाधौ [samādhau] = in the ātmā = समाधि (f.) + adj. to बुद्धिः 1/1
- अचला [acalā] = firm = अचला (f.) + adj. to बुद्धिः 1/1
- बुद्धिः [buddhiḥ] = intellect = बुद्धियुक्त (f.) + 1/1
- तदा [tadā] = then = अव्ययम्
- योगम् [yogam] = yoga = योग (m.) + कर्मणि. to अवाप्स्यसि 2/1
- अवाप्स्यसि [avāpsyasi] = you will gain = अव + आप् (1P) to go + लृट्/कर्तरि/II/1

When your mind is no longer distracted by the Vedas (which present various means and ends to be gained) it will remain steady, firmly established in the self. Then you will gain self-knowledge.

Sentence 1 (यद्-clause):

यदा $^{0}$ ते $^{6/1}$ श्रुतिविप्रतिपन्ना $^{1/1}$ बुद्धिः $^{1/1}$ समाधौ $^{7/1}$ निश्चला $^{1/1}$ अचला $^{1/1}$ स्थास्यति $^{III/1}$ ।

When (यदा $^{0}$) your (ते $^{6/1}$) mind (बुद्धिः $^{1/1}$) is no longer (स्थास्यति $^{III/1}$) distracted by the Vedas (श्रुतिविप्रतिपन्ना $^{1/1}$) it will remain steady (निश्चला $^{1/1}$), firmly established (अचला $^{1/1}$) in the self (समाधौ $^{7/1}$).

Sentence 2 (तद्-clause):

तदा $^{0}$ (त्वम् $^{1/1}$) योगम् $^{2/1}$ अवाप्स्यसि $^{II/1}$ ॥२.५३॥

Then (तदा $^{0}$) you (त्वम् $^{1/1}$) will gain (अवाप्स्यसि $^{II/1}$ ) self-knowledge (योगम् $^{2/1}$ ).

"मोहकलिल-अत्यय-द्वारेण $^{3/1}$ लब्ध-अत्म-विवेक-ज-प्रज्ञः $^{1/1}$ कदा $^{0}$ कर्मयोगजं $^{2/1}$ फलं $^{2/1}$ परमार्थ-योगम् $^{2/1}$ अवाप्स्यामि $^{I/1}$" इति $^{0}$ चेत् $^{0}$, तत् $^{2/1}$ श्रृणु $^{II/1}$ --

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।

समाधावचला बुद्धिस्तदा योगमवाप्स्यसि।।2.53।।

(2.53) – श्रुति-विप्रतिपन्ना $^{1/1}$ अनेक-साध्य-साधन-संबन्ध-प्रकाशन-श्रुतिभिः $^{3/3}$ श्रवणैः $^{3/3}$ प्रवृत्ति-निवृत्ति-लक्षणैः $^{3/3}$ विप्रतिपन्ना $^{1/1}$ नानाप्रतिपन्ना $^{1/1}$ विक्षिप्ता $^{1/1}$ सती $^{1/1}$ ते $^{6/1}$ तव $^{6/1}$ बुद्धिः $^{1/1}$ यदा $^{0}$ = यस्मिन् $^{7/1}$ काले $^{7/1}$ स्थास्यति $^{III/1}$ = स्थिरीभूता $^{1/1}$ भविष्यति $^{III/1}$ निश्चला $^{1/1}$ विक्षेप-चलन-वर्जिता $^{1/1}$ सती $^{1/1}$ समाधौ $^{7/1}$, समाधीयते $^{III/1}$ चित्तम् $^{1/1}$ अस्मिन् $^{7/1}$ इति समाधिः $^{1/1}$ आत्मा $^{1/1}$, तस्मिन्

$^{7/1}$ आत्मनि $^{7/1}$ इत्येतत् $^{1/1}$। अचला $^{1/1}$ तत्र $^{0}$ अपि $^{0}$ विकल्प-वर्जिता $^{1/1}$ इत्येतत् $^{1/1}$। बुद्धिः $^{1/1}$ अन्तःकरणम् $^{1/1}$। तदा $^{0}$ तस्मिन् $^{7/1}$ काले $^{7/1}$ योगम् $^{2/1}$ अवाप्स्यसि $^{II/1}$ विवेक-प्रज्ञां $^{2/1}$ समाधिं $^{2/1}$ प्राप्स्यसि $^{II/1}$।।

**अर्जुन उवाच ।**
**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥२.५४॥**

arjuna uvāca |

sthitaprajñasya kā bhāṣā samādhisthasya keśava |

sthitadhīḥ kiṃ prabhāṣeta kimāsīta vrajeta kim ||2.54||

अर्जुनः $^{1/1}$ उवाच $^{III/1}$ ।

स्थितप्रज्ञस्य $^{6/1}$ का $^{1/1}$ भाषा $^{1/1}$ समाधिस्थस्य $^{6/1}$ केशव $^{8/1}$ ।

स्थितधीः $^{1/1}$ किम् $^{0}$ प्रभाषेत $^{III/1}$ किम् $^{0}$ आसीत $^{III/1}$ व्रजेत $^{III/1}$ किम् $^{0}$ ॥२.५४॥

- अर्जुनः [arjunaḥ] = Arjuna = सञ्जय (m.) + कर्तरि to उवाच 1/1
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1
- स्थितप्रज्ञस्य [sthitaprajñasya] = of a person of firm wisdom = स्थितप्रज्ञ (m.) + 6/1
    - स्थिता प्रज्ञा यस्य सः स्थितप्रज्ञः । 116B
- का [kā] = what = किम् (pron. f.) + 1/1
- भाषा [bhāṣā] = description = भाषा (f.) + 1/1
- समाधिस्थस्य [samādhisthasya] = of a person whose mind abides in the self = समाधिस्थ (m.) + 6/1
    - समाधौ तिष्ठति इति समाधिस्थः । उपपदतत्पुरुषसमासः
- केशव [keśava] = O! Keśava = केशव (m.) + सम्बोधने 1/1

- स्थितधीः [sthitadhīḥ] = a person whose mind is not shaken by anything = स्थितधी (m.) + 1/1
    - स्थिता धीः यस्य सः स्थितधीः । 116B
- किम् [kim] = how = अव्ययम्
- प्रभाषेत [prabhāṣeta] = would speak = प्र + भाष् (1A) to speak + विधिलिङ्/कर्तरि/III/1
- किम् [kim] = how = अव्ययम्
- आसीत [āsīta] = would sit = आस् (2A) to sit + विधिलिङ्/कर्तरि/III/1
- व्रजेत [vrajeta] = would walk = व्रज् (1A) to walk + विधिलिङ्/कर्तरि/III/1
- किम् [kim] = how = अव्ययम्

Arjuna said:

Oh! Keśava, what is the description of a person of firm wisdom, one whose mind abides in the self? How does such a person, whose mind is not shaken by anything, speak, sit, and walk?

Sentence 1:

अर्जुनः [1/1] उवाच [III/1] ।

Arjuna (अर्जुनः [1/1]) said (उवाच [III/1]).

Sentence 2:

स्थितप्रज्ञस्य [6/1] समाधिस्थस्य [6/1] भाषा [1/1] का [1/1] केशव [8/1] ।

O! Keśava (केशव [8/1]), what (का [1/1]) is the description (भाषा [1/1]) of a person of firm wisdom (स्थितप्रज्ञस्य [6/1]), one whose mind abides in the self (समाधिस्थस्य [6/1])?

Sentence 3:

स्थितधीः [1/1] किम् [0] प्रभाषेत [III/1], किम् [0] आसीत [III/1], किम् [0] व्रजेत [III/1]?

How (किम् [0]) does such a person, whose mind is not shaken by anything (स्थितधीः [1/1]), speak (प्रभाषेत [III/1]), sit (आसीत [III/1]), and walk (व्रजेत [III/1])?

प्रश्नबीजं प्रतिलभ्य अर्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया --

प्रश्न-बीजम् [2/1] प्रतिलभ्य [0] अर्जुनः [1/1] उवाच [III/1] लब्धसमाधिप्रज्ञस्य [6/1] लक्षण-बुभुत्सया [3/1] --

अर्जुन उवाच

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।

स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्।।2.54।।

(2.54) – स्थिता [1/1] = प्रतिष्ठिता [1/1] 'अहम् [1/1] अस्मि [I/1] परम् [1/1] ब्रह्म [1/1]' इति [0] प्रज्ञा [1/1] यस्य [6/1] सः [1/1] स्थितप्रज्ञः [1/1] तस्य [6/1] स्थितप्रज्ञस्य [6/1] का [1/1] भाषा [1/1] किम् [1/1] भाषणम् [1/1] = वचनम् [1/1] कथम् [0] असौ [1/1] परैः [3/3] भाष्यते [III/1] समाधिस्थस्य [6/1] समाधौ [7/1] स्थितस्य [6/1] हे [0] केशव [8/1]। स्थितधीः [1/1] स्थितप्रज्ञः [1/1] स्वयम् [0] वा [0] किम् [0] प्रभाषेत [III/1]। किम् [0] आसीत [III/1] व्रजेत [III/1] किम् [0] आसनम् [1/1] व्रजनम् [1/1] वा [0] तस्य [6/1] कथम् [0] इत्यर्थः। स्थितप्रज्ञस्य [6/1] लक्षणम् [2/1] अनेन [3/1] श्लोकेन [3/1] पृच्छति [III/1]।।

यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः, यश्च कर्मयोगेन, तयोः 'प्रजहाति' इत्यारभ्य आ अध्यायपरिसमाप्तेः स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते। सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनानि उपदिश्यन्ते, यत्नसाध्यत्वात्। यानि

यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि --

श्री भगवानुवाच

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते।।2.55।।

(2.55) -- प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन्काले सर्वान् समस्तान् कामान् इच्छाभेदान् हे पार्थ, मनोगतान् मनसि प्रविष्टान् हृदि प्रविष्टान्। सर्वकामपरित्यागे तुष्टिकारणाभावात् शरीरधारणनिमित्तशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्ता, इत्यत उच्यते -- आत्मन्येव प्रत्यगात्मस्वरूपे एव आत्मना स्वेनैव बाह्यलाभनिरपेक्षः तुष्टः परमार्थदर्शनामृतरसलाभेन

अन्यस्मादलंप्रत्ययवान् स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य सः स्थितप्रज्ञः विद्वान् तदा उच्यते। त्यक्तपुत्रवित्तलोकैषणः संन्यासी आत्माराम आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः।।

किञ्च --

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।

वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।।2.56।।

(2.56) -- दुःखेषु आध्यात्मिकादिषु प्राप्तेषु न उद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयम् अनुद्विग्नमनाः। तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य, न अग्निरिव इन्धनाद्याधाने सुखान्यनु विवर्धते स विगतस्पृहः। वीतरागभयक्रोधः रागश्च भयं च क्रोधश्च वीता विगता यस्मात् स वीतरागभयक्रोधः। स्थितधीः स्थितप्रज्ञो मुनिः संन्यासी तदा उच्यते।।

किञ्च --

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।

नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता।।2.57।।

(2.57) -- यः मुनिः सर्वत्र देहजीवितादिष्वपि अनभिस्नेहः अभिस्नेहवर्जितः तत्तत् प्राप्य शुभाशुभं तत्तत् शुभं अशुभं वा लब्ध्वा न अभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यति, अशुभं च प्राप्य न द्वेष्टि इत्यर्थः। तस्य एवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति।।

किञ्च --

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।2.58।।

(2.58) -- यदा संहरते सम्यगुपसंहरते च अयं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मः अङ्गानि इव यथा कूर्मः भयात् स्वान्यङ्गानि उपसंहरति सर्वशः सर्वतः, एवं ज्ञाननिष्ठः इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वविषयेभ्यः उपसंहरते। तस्य प्रज्ञा प्रतिष्ठिता इत्युक्तार्थं वाक्यम्।।

तत्र विषयाननाहरतः आतुरस्यापि इन्द्रियाणि कूर्माङ्गानीव संह्रियन्ते न तु तद्विषयो रागः स कथं संह्रियते इति

उच्यते --

विषया विनिवर्तन्ते निराहारस्य देहिनः।

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते।।2.59।।

(2.59) -- यद्यपि विषयाः विषयोपलक्षितानि विषयशब्दवाच्यानि इन्द्रियाणि निराहारस्य अनाह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिनो देहवतः रसवर्जं रसो रागो विषयेषु यः तं वर्जयित्वा। रसशब्दो रागे प्रसिद्धः, स्वरसेन प्रवृत्तः रसिकः रसज्ञः, इत्यादिदर्शनात्। सोऽपि रसो रञ्जनारूपः सूक्ष्मः अस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वा उपलभ्य

'अहमेव तत्' इति वर्तमानस्य निवर्तते निर्बीजं विषयविज्ञानं संपद्यते इत्यर्थः। न असति सम्यग्दर्शने रसस्य उच्छेदः। तस्मात् सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः।।

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षता आदौ इन्द्रियाणि स्ववशे स्थापयितव्यानि, यस्मात्तदनवस्थापने दोषमाह --

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।

इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः।।2.60।।

(2.60) -- यततः प्रयत्नं कुर्वतः अपि हि यस्मात् कौन्तेय पुरुषस्य विपश्चितः मेधाविनः अपि इति व्यवहितेन संबन्धः। इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्ति आकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनः।।

यतः तस्मात् --

तानि सर्वाणि संयम्य युक्त आसीत मत्परः।

वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।।2.61।।

(2.61) -- तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितः सन् आसीत मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य सः मत्परः, 'न अन्योऽहं तस्मात्' इति आसीत इत्यर्थः। वमासीनस्य यतेः वशे हि यस्य इन्द्रियाणि वर्तन्ते अभ्यासबलात् तस्य प्रज्ञा प्रतिष्ठिता।।

अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते --

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।

सङ्गात् संजायते कामः कामात्क्रोधोऽभिजायते।।2.62।।

(2.62) -- ध्यायतः चिन्तयतः विषयान् शब्दादीन् विषयविशेषान् आलोचयतः पुंसः पुरुषस्य सङ्गः आसक्तिः प्रीतिः तेषु विषयेषु उपजायते उत्पद्यते। सङ्गात् प्रीतेः संजायते समुत्पद्यते कामः तृष्णा। कामात् कुतश्चित् प्रतिहतात् क्रोधः अभिजायते।।

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।

स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति।।2.63।।

(2.63) -- क्रोधात् भवति संमोहः अविवेकः कार्याकार्यविषयः। क्रुद्धो हि संमूढः सन् गुरुमप्याक्रोशति। संमोहात् स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्यात् विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिः। ततः स्मृतिभ्रंशात् बुद्धिनाशः बुद्धेर्नाशः। कार्याकार्यविषयविवेकायोग्यता अन्तःकरणस्य बुद्धेर्नाश उच्यते। बुद्धिनाशात् प्रणश्यति। तावदेव हि पुरुषः

यावदन्तःकरणं तदीयं कार्याकार्यविषयविवेकयोग्यम्। तदयोग्यत्वे नष्ट एव पुरुषो भवति। अतः तस्यान्तःकरणस्य बुद्धेर्नाशात् प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः।।

सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानम्। अथ इदानीं मोक्षकारणमिदमुच्यते --

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।

आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति।।2.64।।

(2.64) -- रागद्वेषवियुक्तैः रागश्च द्वेषश्च रागद्वेषौ, तत्पुरःसरा हि इन्द्रियाणां प्रवृत्तिः स्वाभाविकी, तत्र यो मुमुक्षुः भवति सः ताभ्यां वियुक्तैः श्रोत्रादिभिः इन्द्रियैः विषयान् अवर्जनीयान् चरन् उपलभमानः आत्मवश्यैः आत्मनः वश्यानि वशीभूतानि इन्द्रियाणि तैः आत्मवश्यैः विधेयात्मा इच्छातः विधेयः आत्मा अन्तःकरणं यस्य सः अयं प्रसादम् अधिगच्छति। प्रसादः प्रसन्नता स्वास्थ्यम्।।

प्रसादे सति किं स्यात् इत्युच्यते --

प्रसादे सर्वदुःखानां हानिरस्योपजायते।

प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते।।2.65।।

(2.65) -- प्रसादे सर्वदुःखानाम् आध्यात्मिकादीनां हानिः विनाशः अस्य यतेः उपजायते। किञ्च -- प्रसन्नचेतसः

स्वस्थान्तःकरणस्य हि यस्मात् आशु शीघ्रं बुद्धिः पर्यवतिष्ठते आकाशमिव परि समन्तात् अवतिष्ठते, आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः।। एवं प्रसन्नचेतसः अवस्थितबुद्धेः कृतकृत्यता यतः, तस्मात् रागद्वेषवियुक्तैः इन्द्रियैः शास्त्राविरुद्धेषु अवर्जनीयेषु युक्तः समाचरेत् इति वाक्यार्थः।।

सेयं प्रसन्नता स्तूयते --

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।

न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्।।2.66।।

(2.66) -- नास्ति न विद्यते न भवतीत्यर्थः, बुद्धिः आत्मस्वरूपविषया अयुक्तस्य असमाहितान्तःकरणस्य। न च अस्ति अयुक्तस्य भावना आत्मज्ञानाभिनिवेशः। तथा -- न च अस्ति अभावयतः आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिः उपशमः। अशान्तस्य कुतः सुखम्? इन्द्रियाणां हि विषयसेवातृष्णातः निवृत्तिर्या तत्सुखम् , न विषयविषया तृष्णा। दुःखमेव हि सा। न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यते इत्यर्थः।।

अयुक्तस्य कस्माद्बुद्धिर्नास्ति इत्युच्यते --

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।

तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि।।2.67।।

(2.67) -- इन्द्रियाणां हि यस्मात् चरतां स्वस्वविषयेषु प्रवर्तमानानां यत् मनः अनुविधीयते अनुप्रवर्तते तत् इन्द्रियविषयविकल्पनेन प्रवृत्तं मनः अस्य यतेः हरति प्रज्ञाम् आत्मानात्मविवेकजां नाशयति। कथम्? वायुः नावमिव अम्भसि उदके जिगमिषतां मार्गादुद्धृत्य उन्मार्गे यथा वायुः नावं प्रवर्तयति, एवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति।।

'यततो हि' इत्युपन्यस्तस्यार्थस्य अनेकधा उपपत्तिमुक्त्वा तं चार्थमुपपाद्य उपसंहरति --

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।2.68।।

(2.68) -- इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्, तस्मात् यस्य यतेः हे महाबाहो, निगृहीतानि सर्वशः सर्वप्रकारैः मानसादिभेदैः इन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः तस्य प्रज्ञा प्रतिष्ठिता।।

योऽयं लौकिको वैदिकश्च व्यवहारः स

उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य अविद्याकार्यत्वात् अविद्यानिवृत्तौ निवर्तते, अविद्यायाश्च विद्याविरोधात् निवृत्तिः, इत्येतमर्थं स्फुटीकुर्वन् आह --

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।

यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।।2.69।।

(2.69) -- या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात् सर्वभूतानां सर्वेषां भूतानाम्। किं तत् परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः। यथा नक्तञ्चराणाम् अहरेव सदन्येषां निशा भवति, तद्वत् नक्तञ्चरस्थानीयानामज्ञानां सर्वभूतानां निशेव निशा परमार्थतत्त्वम्, अगोचरत्वादतद्बुद्धीनाम्। तस्यां परमार्थतत्त्वलक्षणायामज्ञाननिद्रायाः प्रबुद्धो जागर्ति संयमी संयमवान्, जितेन्द्रियो योगीत्यर्थः। यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां प्रसुप्तान्येव भूतानि जाग्रति इति उच्यन्ते, यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः, सा निशा अविद्यारूपत्वात् परमार्थतत्त्वं पश्यतो मुनेः।। अतः कर्माणि अविद्यावस्थायामेव चोद्यन्ते, न

विद्यावस्थायाम्। विद्यायां हि सत्याम् उदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छति अविद्या। प्राक् विद्योत्पत्तेः अविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते। न अप्रमाणबुद्ध्या गृह्यमाणायाः

कर्महेतुत्वोपपत्तिः, 'प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म' इति हि कर्मणि कर्ता प्रवर्तते, न 'अविद्यामात्रमिदं सर्वं निशेव ' इति। यस्य पुनः 'निशेव अविद्यामात्रमिदं सर्वं भेदजातम्' इति ज्ञानं तस्य आत्मज्ञस्य सर्वकर्मसंन्यासे एव अधिकारो न प्रवृत्तौ। तथा च दर्शयिष्यति -- तद्बुद्धयस्तदात्मानः' इत्यादिना ज्ञाननिष्ठायामेव तस्य अधिकारम्।। तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिः इति चेत्, न; स्वात्मविषयत्वादात्मविज्ञानस्य। न हि आत्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षता, आत्मत्वादेव। तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य। न हि आत्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति। प्रमातृत्वं

हि आत्मनः निवर्तयति अन्त्यं प्रमाणम्; निवर्तयदेव च अप्रमाणीभवति, स्वप्नकालप्रमाणमिव प्रबोधे। लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य। तस्मात् न आत्मविदः कर्मण्यधिकार इति सिद्धम्।।

विदुषः त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः, न तु असंन्यासिनः कामकामिनः इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन् आह --

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्। तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी।।2.70।।

(2.70) -- आपूर्यमाणम् अद्भिः अचलप्रतिष्ठम् अचलतया प्रतिष्ठा अवस्थितिः यस्य तम् अचलप्रतिष्ठं समुद्रम् आपः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्, तद्वत् कामाः विषयसंनिधावपि सर्वतः इच्छाविशेषाः यं पुरुषम् – समुद्रमिव आपः -- अविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति, सः शान्तिं मोक्षम् आप्नोति, न इतरः कामकामी, काम्यन्त इति कामाः विषयाः तान् कामयितुं शीलं यस्य सः कामकामी, नैव प्राप्नोति इत्यर्थः।।

यस्मादेवं तस्मात् -

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः।

निर्ममो निरहंकारः स शांतिमधिगच्छति।।2.71।।

(2.71) -- विहाय परित्यज्य कामान् यः संन्यासी पुमान् सर्वान् अशेषतः कार्त्स्न्येन चरति, जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः। निःस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य सः निःस्पृहः सन्, निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदम्

इत्यभिनिवेशवर्जितः, निरहंकारः विद्यावत्त्वादिनिमित्तात्मसंभावनारहितः इत्येतत्। सः एवंभूतः स्थितप्रज्ञः ब्रह्मवित् शान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्याम् अधिगच्छति प्राप्नोति ब्रह्मभूतो भवति इत्यर्थः।।

सैषा ज्ञाननिष्ठा स्तूयते।।

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति। स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति।।2.72।।

(2.72) -- एषा यथोक्ता ब्राह्मी ब्रह्मणि भवा इयं स्थितिः सर्वं कर्म संन्यस्य ब्रह्मरूपेणैव अवस्थानम् इत्येतत्। हे पार्थ, न एनां स्थितिं प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति। स्थित्वा अस्यां स्थितौ ब्राह्म्यां यथोक्तायां अन्तकालेऽपि अन्त्ये वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षम् ऋच्छति गच्छति। किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येव अवतिष्ठते स ब्रह्मनिर्वाणमृच्छति इति।।

1ॐ तत्सत् इति श्रीमद्भगवद्गीतासूपनिषत्सु 1ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे 1सांख्ययोगो नाम द्वितीयोऽध्यायः।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये द्वितीयोऽध्यायः।।

**श्रीभगवानुवाच ।**
**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥२.५५॥**

śrībhagavānuvāca |

prajahāti yadā kāmān sarvān pārtha manogatān |

ātmanyevātmanā tuṣṭaḥ sthitaprajñastadocyate ||2.55||

श्रीभगवान् $^{1/1}$ उवाच $^{III/1}$ ।

प्रजहाति $^{III/1}$ यदा $^{0}$ कामान् $^{2/3}$ सर्वान् $^{2/3}$ पार्थ $^{8/1}$ मनोगतान् $^{2/3}$ ।

आत्मनि $^{7/1}$ एव $^{0}$ आत्मना $^{3/1}$ तुष्टः $^{1/1}$ स्थितप्रज्ञः $^{1/1}$ तदा $^{0}$ उच्यते $^{III/1}$ ॥२.५५॥

- श्रीभगवान् [śrībhagavān] = Bhagavān = भगवत् (m.) + कर्तरि to उवाच 1/1
    - श्रिया सहित भगवान् श्रीभगवान् ।
    - भगः अस्य अस्ति इति भगवान् ।
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1
- प्रजहाति [prajahāti] = gives up = प्र + हा (3P) to give up+ लट्/कर्तरि/III/1
- यदा [yadā] = when = अव्ययम्
    - यद् + दा = यदा = यस्मिन् काले
- कामान् [kāmān] = desires = कामा (m.) + 2/3
- सर्वान् [sarvān] = all = सार्व (pron. m.) + adj. to कामान् 2/3
- पार्थ [pārtha] = O! Pārtha = पार्थ (m.) + सम्बोधने 1/1
- मनोगतान् [manogatān] = that which obtain in the mind = मनोगत (m.) + 2/3
- आत्मनि [ātmani] = in oneself = आत्मन् (m.) + 7/1
- एव [eva] = alone = अव्ययम्
- आत्मना [ātmanā] = with oneself = आत्मन् (m.) + 7/1
- तुष्टः [tuṣṭaḥ] = happy = तुष्ट (m.) + 1/1
- स्थितप्रज्ञः [sthitaprajñaḥ] = person who has ascertained knowledge = स्थितप्रज्ञ (m.) + 1/1
    - स्थिता प्रज्ञा यस्य सः स्थितप्रज्ञः । 116B
- तदा [tadā] = then = अव्ययम्
    - तद् + दा = तदा = तस्मिन् काले
- उच्यते [ucyate] = is said to be = वच् (2P) to say + लट्/कर्मणि/III/1

Śrībhagavān said:

When a person gives up all the desires as they appear in the mind, Oh! Pārtha, happy in oneself, with oneself alone, that person is said to be one of ascertained knowledge.

Sentence 1:

श्रीभगवान्[1/1] उवाच[III/1] ।

Śrībhagavān (श्रीभगवान्[1/1]) said (उवाच[III/1]).

Sentence 2 (यत्-clause):

पार्थ[8/1] यदा[0] सार्वान्[2/3] मनोगतान्[2/3] कामान्[2/3] प्रजहाति[III/1] । आत्मना[3/1] एव[0] आत्मनि[7/1] तुष्टः[1/1]

When (यदा[0]) a person gives up (प्रजहाति[III/1]) all (सार्वान्[2/3]) the desires (कामान्[2/3]) as they appear in the mind (मनोगतान्[2/3]), Oh! Pārtha (पार्थ[8/1]), happy (तुष्टः[1/1]) in oneself (आत्मनि[7/1]), with oneself (आत्मना[3/1]) alone (एव[0]),

Sentence 3 (तत्-clause):

तदा[0] स्थितप्रज्ञः[1/1] उच्यते[III/1] ॥२.५५॥

Then (तदा[0]) that person is said to be (उच्यते[III/1]) one of ascertained knowledge (स्थितप्रज्ञः[1/1]).

यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः, यश्च कर्मयोगेन, तयोः 'प्रजहाति' इत्यारभ्य आ अध्यायपरिसमाप्तेः स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते।
यः[1/1] हि[0] आदितः[0] एव[0] कर्माणि[2/3] संन्यस्य[0] ज्ञानयोगनिष्ठायाम्[7/1] प्रवृत्तः[1/1], यः[1/1] च[0] कर्मयोगेन[3/1], तयोः[6/2] 'प्रजहाति (2.55)' इत्यारभ्य[0] आ[0] (up to …) अध्यायपरिसमाप्तेः[5/1] स्थितप्रज्ञ-लक्षणम्[1/1] साधनम्[1/1] च[0] उपदिश्यते[III/1]।

सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनानि उपदिश्यन्ते, यत्नसाध्यत्वात्। सर्वत्र[0] एव[0] हि[0] अध्यात्म-शास्त्रे[7/1] कृतार्थ-लक्षणानि[1/3] यानि[1/3] तानि[1/3] एव[0] साधनानि[1/3] उपदिश्यन्ते[III/3], यत्न-साध्यत्वात्[5/1]।

यानि  यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि --
यानि[1/3] यत्नसाध्यानि[1/3] साधनानि[1/3] लक्षणानि[1/3] च[0] भवन्ति[III/3] तानि[1/3] --

श्री भगवानुवाच

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।

आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते।।2.55।।

प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन्काले सर्वान् समस्तान् कामान् इच्छाभेदान् हे पार्थ, मनोगतान् मनसि प्रविष्टान् हृदि प्रविष्टान्।

प्रजहाति [III/1] प्रकर्षेण [0] जहाति [III/1] परित्यजति [III/1] यदा [0] यस्मिन् [7/1] काले [7/1] सर्वान् [2/3] समस्तान् [2/3] कामान् [2/3] इच्छा-भेदान् [2/3] हे [0] पार्थ [8/1], मनोगतान् [2/3] मनसि [7/1] प्रविष्टान् [2/3] हृदि [7/1] प्रविष्टान् [2/3] ।

सर्वकामपरित्यागे तुष्टिकारणाभावात् शरीरधारणनिमित्तशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्ता, इत्यत उच्यते -- आत्मन्येव प्रत्यगात्मस्वरूपे एव आत्मना स्वेनैव बाह्यलाभनिरपेक्षः तुष्टः परमार्थदर्शनामृतरसलाभेन अन्यस्मादलंप्रत्ययवान् स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य सः स्थितप्रज्ञः विद्वान् तदा उच्यते।

सर्व-काम-परित्यागे [S7/1] तुष्टि-कारण-अभावात् [H5/1] शरीर-धारण-निमित्त-शेषे [S7/1] च [0] सति [S7/1] उन्मत्त-प्रमत्तस्य [6/1] इव [0] प्रवृत्तिः [1/1] प्राप्ता [1/1], इति [0] अतः [0] उच्यते [III/1] – आत्मनि [V7/1] एव [0] प्रत्यगात्म-स्वरूपे [V7/1] एव [0] आत्मना [3/1] स्वेन [3/1] एव [0] बाह्य-लाभ-निरपेक्षः [1/1] तुष्टः [1/1] परमार्थ-दर्शन-अमृत-रस-लाभेन [3/1] अन्यस्मात् [5/1] अलंप्रत्ययवान् [1/1] स्थित-प्रज्ञः [m1/1] [<u>स्थिता</u> [f1/1] प्रतिष्ठिता [f1/1] आत्मानात्मविवेकजा [f1/1] <u>प्रज्ञा</u> [f1/1] यस्य [6/1] सः [1/1] स्थितप्रज्ञः [1/1]] विद्वान् [1/1] तदा [0] उच्यते [III/1]।

त्यक्तपुत्रवित्तलोकैषणः संन्यासी आत्माराम आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः।।

त्यक्त-पुत्र-वित्त-लोक-एषणः [1/1] संन्यासी [1/1] आत्मारामः [1/1] आत्मक्रीडः [1/1] स्थितप्रज्ञः [1/1] इत्यर्थः [1/1] ॥

किञ्च --

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।

वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।।2.56।।

(2.56) -- दुःखेषु आध्यात्मिकादिषु प्राप्तेषु न उद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयम् अनुद्विग्नमनाः। तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य, न अग्निरिव इन्धनाद्याधाने सुखान्यनु विवर्धते स विगतस्पृहः। वीतरागभयक्रोधः रागश्च भयं च क्रोधश्च वीता विगता यस्मात् स वीतरागभयक्रोधः। स्थितधीः स्थितप्रज्ञो मुनिः संन्यासी तदा उच्यते।।

किञ्च --

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।

नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता।।2.57।।

(2.57) -- यः मुनिः सर्वत्र देहजीवितादिष्वपि अनभिस्नेहः अभिस्नेहवर्जितः तत्तत् प्राप्य शुभाशुभं तत्तत् शुभं अशुभं वा लब्ध्वा न अभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यति, अशुभं च प्राप्य न द्वेष्टि इत्यर्थः। तस्य एवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति।।

किञ्च --

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।2.58।।

(2.58) -- यदा संहरते सम्यगुपसंहरते च अयं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मः अङ्गानि इव यथा कूर्मः भयात् स्वान्यङ्गानि उपसंहरति सर्वशः सर्वतः, एवं ज्ञाननिष्ठः इन्द्रियाणि इन्द्रियार्थेभ्यः सर्वविषयेभ्यः उपसंहरते। तस्य प्रज्ञा प्रतिष्ठिता इत्युक्तार्थं वाक्यम्।।

तत्र विषयाननाहरतः आतुरस्यापि इन्द्रियाणि कूर्माङ्गानीव संह्रियन्ते न तु तद्विषयो रागः स कथं संह्रियते इति

उच्यते --

विषया विनिवर्तन्ते निराहारस्य देहिनः।

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते।।2.59।।

(2.59) -- यद्यपि विषयाः विषयोपलक्षितानि विषयशब्दवाच्यानि इन्द्रियाणि निराहारस्य अनाह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते देहिनो देहवतः रसवर्जं रसो रागो विषयेषु यः तं वर्जयित्वा। रसशब्दो रागे प्रसिद्धः, स्वरसेन प्रवृत्तः रसिकः रसज्ञः, इत्यादिदर्शनात्। सोऽपि रसो रञ्जनारूपः सूक्ष्मः अस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वा उपलभ्य

'अहमेव तत्' इति वर्तमानस्य निवर्तते निर्बीजं विषयविज्ञानं संपद्यते इत्यर्थः। न असति सम्यग्दर्शने रसस्य उच्छेदः। तस्मात् सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः।।

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षता आदौ इन्द्रियाणि स्ववशे स्थापयितव्यानि, यस्मात्तदनवस्थापने दोषमाह --

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।

इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः।।2.60।।

(2.60) -- यततः प्रयत्नं कुर्वतः अपि हि यस्मात् कौन्तेय पुरुषस्य विपश्चितः मेधाविनः अपि इति व्यवहितेन संबन्धः। इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्ति आकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनः।।

यतः तस्मात् --

तानि सर्वाणि संयम्य युक्त आसीत मत्परः।

वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता।।2.61।।

(2.61) -- तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितः सन् आसीत मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य सः मत्परः, 'न अन्योऽहं तस्मात्' इति आसीत इत्यर्थः। वमासीनस्य यतेः वशे हि यस्य इन्द्रियाणि वर्तन्ते अभ्यासबलात् तस्य प्रज्ञा प्रतिष्ठिता।।

अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते --

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।

सङ्गात् संजायते कामः कामात्क्रोधोऽभिजायते।।2.62।।

(2.62) -- ध्यायतः चिन्तयतः विषयान् शब्दादीन् विषयविशेषान् आलोचयतः पुंसः पुरुषस्य सङ्गः आसक्तिः प्रीतिः तेषु विषयेषु उपजायते उत्पद्यते। सङ्गात् प्रीतेः संजायते समुत्पद्यते कामः तृष्णा। कामात् कुतश्चित् प्रतिहतात् क्रोधः अभिजायते।।

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।

स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति।।2.63।।

(2.63) -- क्रोधात् भवति संमोहः अविवेकः कार्याकार्यविषयः। क्रुद्धो हि संमूढः सन् गुरुमप्याक्रोशति। संमोहात् स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्यात् विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौ अनुत्पत्तिः। ततः स्मृतिभ्रंशात् बुद्धिनाशः बुद्धेर्नाशः। कार्याकार्यविषयविवेकायोग्यता अन्तःकरणस्य बुद्धेर्नाश उच्यते। बुद्धिनाशात् प्रणश्यति। तावदेव हि पुरुषः यावदन्तःकरणं तदीयं कार्याकार्यविषयविवेकयोग्यम्। तदयोग्यत्वे नष्ट एव पुरुषो भवति। अतः तस्यान्तःकरणस्य बुद्धेर्नाशात् प्रणश्यति पुरुषार्थायोग्यो भवतीत्यर्थः।।

सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानम्। अथ इदानीं मोक्षकारणमिदमुच्यते --

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।

आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति।।2.64।।

(2.64) -- रागद्वेषवियुक्तैः रागश्च द्वेषश्च रागद्वेषौ, तत्पुरःसरा हि इन्द्रियाणां प्रवृत्तिः स्वाभाविकी, तत्र यो मुमुक्षुः भवति सः ताभ्यां वियुक्तैः श्रोत्रादिभिः इन्द्रियैः विषयान् अवर्जनीयान् चरन् उपलभमानः

आत्मवश्यैः आत्मनः वश्यानि वशीभूतानि इन्द्रियाणि तैः आत्मवश्यैः विधेयात्मा इच्छातः विधेयः आत्मा अन्तःकरणं यस्य सः अयं प्रसादम् अधिगच्छति। प्रसादः प्रसन्नता स्वास्थ्यम्।।

प्रसादे सति किं स्यात् इत्युच्यते --

प्रसादे सर्वदुःखानां हानिरस्योपजायते।

प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते।।2.65।।

(2.65) -- प्रसादे सर्वदुःखानाम् आध्यात्मिकादीनां हानिः विनाशः अस्य यतेः उपजायते। किञ्च -- प्रसन्नचेतसः

स्वस्थान्तःकरणस्य हि यस्मात् आशु शीघ्रं बुद्धिः पर्यवतिष्ठते आकाशमिव परि समन्तात् अवतिष्ठते, आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः।। एवं प्रसन्नचेतसः अवस्थितबुद्धेः कृतकृत्यता यतः, तस्मात् रागद्वेषवियुक्तैः इन्द्रियैः शास्त्राविरुद्धेषु अवर्जनीयेषु युक्तः समाचरेत् इति वाक्यार्थः।।

सेयं प्रसन्नता स्तूयते --

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।

न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्।।2.66।।

(2.66) -- नास्ति न विद्यते न भवतीत्यर्थः, बुद्धिः आत्मस्वरूपविषया अयुक्तस्य असमाहितान्तःकरणस्य। न च अस्ति अयुक्तस्य भावना आत्मज्ञानाभिनिवेशः। तथा -- न च अस्ति अभावयतः आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिः उपशमः। अशान्तस्य कुतः सुखम्? इन्द्रियाणां हि विषयसेवातृष्णातः निवृत्तिर्या तत्सुखम्, न विषयविषया तृष्णा। दुःखमेव हि सा। न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यते इत्यर्थः।।

अयुक्तस्य कस्माद्बुद्धिर्नास्ति इत्युच्यते --

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।

तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि।।2.67।।

(2.67) -- इन्द्रियाणां हि यस्मात् चरतां स्वस्वविषयेषु प्रवर्तमानानां यत् मनः अनुविधीयते अनुप्रवर्तते तत्

इन्द्रियविषयविकल्पनेन प्रवृत्तं मनः अस्य यतेः हरति प्रज्ञाम् आत्मानात्मविवेकजां नाशयति। कथम्? वायुः नावमिव अम्भसि उदके जिगमिषतां मार्गादुद्धृत्य उन्मार्गे यथा वायुः नावं प्रवर्तयति, एवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां करोति।।

'यततो हि' इत्युपन्यस्तस्यार्थस्य अनेकधा उपपत्तिमुक्त्वा तं चार्थमुपपाद्य उपसंहरति --

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।2.68।।

(2.68) -- इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्, तस्मात् यस्य यतेः हे महाबाहो, निगृहीतानि सर्वशः सर्वप्रकारैः मानसादिभेदैः इन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः तस्य प्रज्ञा प्रतिष्ठिता।।

योऽयं लौकिको वैदिकश्च व्यवहारः स

उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्य अविद्याकार्यत्वात् अविद्यानिवृत्तौ निवर्तते, अविद्यायाश्च विद्याविरोधात् निवृत्तिः, इत्येतमर्थं स्फुटीकुर्वन् आह --

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।

यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।।2.69।।

(2.69) -- या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात् सर्वभूतानां सर्वेषां भूतानाम्। किं तत् परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः। यथा नक्तञ्चराणाम् अहरेव सदन्येषां निशा भवति, तद्वत् नक्तञ्चरस्थानीयानामज्ञानां सर्वभूतानां निशेव निशा परमार्थतत्त्वम्, अगोचरत्वादतद्बुद्धीनाम्। तस्यां परमार्थतत्त्वलक्षणायामज्ञाननिद्रायाः प्रबुद्धो जागर्ति संयमी संयमवान्, जितेन्द्रियो योगीत्यर्थः। यस्यां

ग्राह्यग्राहकभेदलक्षणायामविद्यानिशायां प्रसुप्तान्येव भूतानि जाग्रति इति उच्यन्ते, यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः, सा निशा अविद्यारूपत्वात् परमार्थतत्त्वं पश्यतो मुनेः।। अतः कर्माणि अविद्यावस्थायामेव चोद्यन्ते, न

विद्यावस्थायाम्। विद्यायां हि सत्याम् उदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छति अविद्या। प्राक् विद्योत्पत्तेः अविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते। न अप्रमाणबुद्ध्या गृह्यमाणायाः

कर्महेतुत्वोपपत्तिः, 'प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्म' इति हि कर्मणि कर्ता प्रवर्तते, न 'अविद्यामात्रमिदं सर्वं निशेव ' इति। यस्य पुनः 'निशेव अविद्यामात्रमिदं सर्वं भेदजातम्' इति ज्ञानं तस्य आत्मज्ञस्य सर्वकर्मसंन्यासे एव अधिकारो न प्रवृत्तौ। तथा च दर्शयिष्यति -- तद्बुद्धयस्तदात्मानः' इत्यादिना ज्ञाननिष्ठायामेव तस्य अधिकारम्।। तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिः इति चेत्, न; स्वात्मविषयत्वादात्मविज्ञानस्य। न हि आत्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षता, आत्मत्वादेव। तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य। न हि आत्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति। प्रमातृत्वं हि आत्मनः निवर्तयति अन्त्यं प्रमाणम्; निवर्तयदेव च अप्रमाणीभवति, स्वप्नकालप्रमाणमिव प्रबोधे। लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य। तस्मात् न आत्मविदः कर्मण्यधिकार इति सिद्धम्।।

विदुषः त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः, न तु असंन्यासिनः कामकामिनः इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन् आह --

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्। तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी।।2.70।।

(2.70) -- आपूर्यमाणम् अद्भिः अचलप्रतिष्ठम् अचलतया प्रतिष्ठा अवस्थितिः यस्य तम् अचलप्रतिष्ठं समुद्रम् आपः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्, तद्वत् कामाः विषयसंनिधावपि सर्वतः इच्छाविशेषाः यं पुरुषम् – समुद्रमिव आपः -- अविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति, सः शान्ति मोक्षम् आप्नोति, न इतरः कामकामी, काम्यन्त इति कामाः विषयाः तान् कामयितुं शीलं यस्य सः कामकामी, नैव प्राप्नोति इत्यर्थः।।

यस्मादेवं तस्मात् -

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः।

निर्ममो निरहंकारः स शांतिमधिगच्छति।।2.71।।

(2.71) -- विहाय परित्यज्य कामान् यः संन्यासी पुमान् सर्वान् अशेषतः कार्त्स्न्येन चरति, जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः। निःस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य सः निःस्पृहः सन्, निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदम्

इत्यभिनिवेशवर्जितः, निरहंकारः विद्यावत्त्वादिनिमित्तात्मसंभावनारहितः इत्येतत्। सः एवंभूतः स्थितप्रज्ञः ब्रह्मवित् शान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्याम् अधिगच्छति प्राप्नोति ब्रह्मभूतो भवति इत्यर्थः।।

सैषा ज्ञाननिष्ठा स्तूयते।।

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति। स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति।।2.72।।

(2.72) -- एषा यथोक्ता ब्राह्मी ब्रह्मणि भवा इयं स्थितिः सर्वं कर्म संन्यस्य ब्रह्मरूपेणैव अवस्थानम् इत्येतत्। हे पार्थ, न एनां स्थितिं प्राप्य लब्ध्वा न विमुह्यति न मोहं प्राप्नोति। स्थित्वा अस्यां स्थितौ ब्राह्म्यां यथोक्तायां अन्तकालेऽपि अन्त्ये वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षम् ऋच्छति गच्छति। किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येव अवतिष्ठते स ब्रह्मनिर्वाणमृच्छति इति।।

1ॐ तत्सत् इति श्रीमद्भगवद्गीतासूपनिषत्सु 1ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे 1सांख्ययोगो नाम द्वितीयोऽध्यायः।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये द्वितीयोऽध्यायः।।

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥२.५६॥

duḥkheṣvanudvignamanāḥ sukheṣu vigataspṛhaḥ |

vītarāgabhayakrodhaḥ sthitadhīrmunirucyate ||2.56||

दुःखेषु $^{7/3}$ अनुद्विग्नमनाः $^{1/1}$ सुखेषु $^{7/3}$ विगतस्पृहः $^{1/1}$ ।

वीतरागभयक्रोधः $^{1/1}$ स्थितधीः $^{1/1}$ मुनिः $^{1/1}$ उच्यते $^{III/1}$ ॥२.५६॥

- दुःखेषु [duḥkheṣu] = in adversities = दुःख (n.) + 7/3
- अनुद्विग्नमनाः [anudvignamanāḥ] = one who is not affected= अनुद्विग्नमनस् (m.) + 1/1
    - उद् + विज् to be afflicted + क्त (कर्तरि) = उद्विग्न
    - न (not) उद्विग्नम् (afflicted) अनुद्विग्नम् । (NT)
    - अनुद्विग्नम् मनः यस्य सः अनुद्विग्नमनाः । (116B)
- सुखेषु [sukheṣu] = in pleasures = सुख (n.) + 7/3
- विगतस्पृहः [vigataspṛhaḥ] = one who is without yearning for pleasure = विगतस्पृह (m.) + 1/1
    - विगता (gone) स्पृहा (longing) यस्य (from him) सः विगतस्पृहः । (116B)
- वीतरागभयक्रोधः [vītarāgabhayakrodhaḥ] = one who is is free longing, fear, and anger = वीतरागभयक्रोध (m.) + 1/1
    - वीताः रागः च भयं च क्रोधः च यस्मात् सः वीतरागभयक्रोधः । (115B)
- स्थितधीः [sthitadhīḥ] = one whose knowledge remains = स्थितधी (m.) + 1/1
    - स्थिता धीः यस्य सः स्थितधीः । (116B)
- मुनिः [muniḥ] = a wise person = मुनि (m.) + 1/1
- उच्यते [ucyate] = is said to be = वच् (2P) to say + लट्/कर्मणि/III/1

The one who is not affected by adversities, who is without yearning for pleasures and is free from longing, fear, and anger is said to be a wise person whose knowledge remains.

Sentence 1:

दुःखेषु $^{7/3}$ अनुद्विग्नमनाः $^{1/1}$ सुखेषु $^{7/3}$ विगतस्पृहः $^{1/1}$ । वीतरागभयक्रोधः $^{1/1}$ स्थितधीः $^{1/1}$ मुनिः $^{1/1}$ उच्यते $^{III/1}$ ॥२.५६॥

The one who is not affected (अनुद्विग्नमनाः $^{1/1}$) by adversities (दुःखेषु $^{7/3}$), who is without yearning (विगतस्पृहः $^{1/1}$) for pleasures (सुखेषु $^{7/3}$) and is free from longing, fear, and anger (वीतरागभयक्रोधः $^{1/1}$) is said to be (उच्यते $^{III/1}$) a wise person (मुनिः $^{1/1}$) whose knowledge remains (स्थितधीः $^{1/1}$).

किञ्च --

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।

वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।।2.56।।

दुःखेषु $^{7/3}$ आध्यात्मिकादिषु $^{7/3}$ प्राप्तेषु $^{7/3}$ न $^{0}$ उद्विग्नं $^{1/1}$ न $^{0}$ प्रक्षुभितं $^{1/1}$ दुःखप्राप्तौ $^{7/1}$ मनः $^{1/1}$ यस्य $^{6/1}$ सः $^{1/1}$ अयम् $^{1/1}$ अनुद्विग्नमनाः $^{1/1}$। तथा $^{0}$ सुखेषु $^{7/3}$ प्राप्तेषु $^{7/3}$ विगता $^{1/1}$ स्पृहा $^{1/1}$ तृष्णा $^{1/1}$ यस्य $^{6/1}$, न $^{0}$ अग्निः $^{1/1}$ इव $^{0}$ इन्धनादि-आधाने $^{7/1}$ सुखानि $^{2/3}$ अनु $^{0}$ विवर्धते $^{III/1}$ स $^{1/1}$ विगतस्पृहः $^{1/1}$। वीतरागभयक्रोधः $^{1/1}$ रागः $^{1/1}$ च भयं $^{1/1}$ च क्रोधः $^{1/1}$ च वीताः $^{1/3}$ विगताः $^{1/3}$ यस्मात् $^{5/1}$ सः $^{1/1}$ वीतरागभयक्रोधः। स्थितधीः $^{1/1}$ स्थितप्रज्ञः $^{1/1}$ मुनिः $^{1/1}$ संन्यासी $^{1/1}$ तदा $^{0}$ उच्यते $^{III/1}$।।

**अर्जुन उवाच ।**

**ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥३.१॥**

arjuna uvāca |

jyāyasī cet karmaṇaste matā buddhirjanārdana |

tatkiṃ karmaṇi ghore māṃ niyojayasi keśava ||3.1||

अर्जुनः $^{1/1}$ उवाच $^{III/1}$ ।

ज्यायसी $^{1/1}$ चेत् $^{0}$ कर्मणः $^{5/1}$ ते $^{6/1}$ मता $^{1/1}$ बुद्धिः $^{1/1}$ जनार्दन $^{8/1}$ ।

तत् $^{0}$ किम् $^{0}$ कर्मणि $^{7/1}$ घोरे $^{7/1}$ माम् $^{2/1}$ नियोजयसि $^{II/1}$ केशव $^{8/1}$ ॥३.१॥

- अर्जुनः [arjunaḥ] = Arjuna = अर्जुन (m.) + कर्तरि to उवाच 1/1
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1
- ज्यायसी [jyāyasī] = better = ज्यायसी (f.) + 1/1
- चेत् [cet] = if = अव्ययम्
- कर्मणः [karmaṇaḥ] = than action = कर्मन् (n.) + 5/1
- ते [te] = your = युष्मद् (pron. m.) + सम्बन्धे to मता 6/1
- मता [matā] = contention = मता (f.) + 1/1
    - मन् + क्त (कर्मणि वर्तमाने) + टाप्
- बुद्धिः [buddhiḥ] = knowledge = बुद्धि (f.) + 1/1
- जनार्दन [janārdana] = Oh! Janārdana = जनार्दन (m.) + सम्बोधने + 1/1
- तत् [tat] = then = अव्ययम्
- किम् [kim] = why= अव्ययम्
- कर्मणि [karmaṇi] = toward action = कर्मन् (n.) + 7/1
- घोरे [ghore] = guresome = घोर (n.) + adj. to कर्मणि 7/1
- माम् [mām] = me = अस्मद् (pron. m.) + कर्मणि to नियोजयसि 2/1

- नियोजयसि [niyojayasi] = impel = नि + युज् + णिच् (to impel) + लट्/कर्तरि/II/1
    - नि युज् + णिच्    हेतुमति च ।
      नि योज् + इ
      नियोजि    सनाद्यन्ता धातवः ।
    - नियोजि + सिप्
      नियोजे + शप् + सि
      नियोजय् + अ + सि
- केशव [janārdana] = O! Keśava = केशव (m.) + सम्बोधने + 1/1

Arjuna said:

If, Oh! Janārdana, your contention is that knowledge is better than action, why then do you impel me into this gruesome action, Oh! Keśava.

.

Sentence 1:

अर्जुनः $^{1/1}$ उवाच $^{III/1}$ ।

Arjuna (अर्जुनः $^{1/1}$) said (उवाच $^{III/1}$):

Sentence 2:

जनार्दन $^{8/1}$ कर्मणः $^{5/1}$ बुद्धिः $^{1/1}$ ज्यायसी $^{1/1}$ ते $^{6/1}$ मता $^{1/1}$ चेत् $^{0}$ ।

तत् $^{0}$ किम् $^{0}$ घोरे $^{7/1}$ कर्मणि $^{7/1}$ माम् $^{2/1}$ नियोजयसि $^{II/1}$ केशव $^{8/1}$ ॥३.१॥

If (चेत् $^{0}$), Oh! Janārdana (जनार्दन $^{8/1}$), your (ते $^{6/1}$) contention (मता $^{1/1}$) is that knowledge (बुद्धिः $^{1/1}$) is better (ज्यायसी $^{1/1}$) than action (कर्मणः $^{5/1}$), why (किम् $^{0}$) then (तत् $^{0}$) do you impel (नियोजयसि $^{II/1}$) me (माम् $^{2/1}$) into this gruesome (घोरे $^{7/1}$) action (कर्मणि $^{7/1}$), Oh! Keśava (केशव $^{8/1}$).

।।3.1।। --

ज्यायसी श्रेयसी चेत् यदि कर्मणः सकाशात् ते तव मता अभिप्रेता बुद्धिः ज्ञानं हे जनार्दन। यदि बुद्धिकर्मणी समुच्चिते इष्टे तदा एकं श्रेयःसाधनमिति कर्मणो ज्यायसी बुद्धिः इति कर्मणः अतिरिक्तकरणं बुद्धेरनुपपन्नम् अर्जुनेन कृतं स्यात्; न हि तदेव तस्मात् फलतोऽतिरिक्तं स्यात्। तथा च, कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिः, अश्रेयस्करं च कर्म कुर्विति मां प्रतिपादयति, तत् किं नु कारणमिति भगवत उपालम्भमिव कुर्वन् तत् किं कस्मात् कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशव इति च यदाह, तच्च नोपपद्यते। अथ स्मार्तेनैव कर्मणा समुच्चयः सर्वेषां भगवता उक्तः अर्जुनेन च अवधारितश्चेत् , 'तत्किं कर्मणि घोरे मां नियोजयसि' (गीता 3.1) इत्यादि कथं युक्तं वचनम्।।

किञ्च –

।।3.2।। --

व्यामिश्रेणेव, यद्यपि विविक्ताभिधायी भगवान्, तथापि मम मन्दबुद्धेः व्यामिश्रमिव भगवद्वाक्यं

प्रतिभाति। तेन मम बुद्धिं मोहयसि इव, मम बुद्धिव्यामोहापनयाय हि प्रवृत्तः त्वं तु कथं

मोहयसि? अतः ब्रवीमि बुद्धिं मोहयसि इव मे मम इति। त्वं तु भिन्नकर्तृकयोः ज्ञानकर्मणोः

एकपुरुषानुष्ठानासंभवं यदि मन्यसे, तत्रैवं सति तत् तयोः एकं बुद्धिं कर्म वा इदमेव अर्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि, येन ज्ञानेन कर्मणा वा अन्यतरेण श्रेयः अहम् आप्नुयां प्राप्नुयाम्; इति यदुक्तं तदपि नोपपद्यते।। यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवता उक्तं स्यात् , तत् कथं तयोः 'एकं वद' इति एकविषयैव अर्जुनस्य शुश्रूषा स्यात्। न हि भगवता पूर्वमुक्तम् 'अन्यतरदेव ज्ञानकर्मणोः वक्ष्यामि, नैव द्वयम्' इति, येन उभयप्राप्त्यसंभवम् आत्मनो मन्यमानः एकमेव प्रार्थयेत्।।

प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच --

।।3.3।। --

लोके अस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिः अनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासाम् अभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण हे अनघ अपाप। तत्र का सा द्विविधा निष्ठा इत्याह -- तत्र ज्ञानयोगेन ज्ञानमेव योगः तेन सांख्यानाम्

अत्मानात्मविषयविवेकविज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां

परमहंसपरिव्राजकानां ब्रह्मण्येव अवस्थितानां निष्ठा प्रोक्ता। कर्मयोगेन कर्मैव योगः कर्मयोगः तेन कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्ता इत्यर्थः। यदि च एकेन पुरुषेण एकस्मै पुरुषार्थाय

ज्ञानं कर्म च समुच्चित्य अनुष्ठेयं भगवता इष्टम् उक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तम् ,

कथमिह अर्जुनाय उपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके व ज्ञानकर्मनिष्ठे ब्रूयात्? यदि पुनः 'अर्जुनः ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामि इति' मतं भगवतः कल्प्येत, तदा रागद्वेषवान् अप्रमाणभूतो भगवान् कल्पितः स्यात्।

तच्चायुक्तम्। तस्मात् कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः।।

यत् अर्जुनेन उक्तं कर्मणो ज्यायस्त्वं बुद्धेः तच्च स्थितम्, अनिराकरणात्। तस्याश्च

ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वम् , भिन्नपुरुषानुष्ठेयत्ववचनात्। भगवतः एवमेव

अनुमतमिति गम्यते।।

'मां च बन्धकारणे कर्मण्येव नियोजयसि' इति विषण्णमनसमर्जुनम् 'कर्म नारभे' इत्येवं

मन्वानमालक्ष्य आह भगवान् -- न कर्मणामनारम्भात् इति। अथवा -- ज्ञानकर्मनिष्ठयोः

परस्परविरोधात् एकेन पुरुषेण युगपत् अनुष्ठातुमशक्यत्वे सति इतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वम्, न स्वातन्त्र्येण; ज्ञाननिष्ठा तु

कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुः अन्यानपेक्षा, इत्येतमर्थं प्रदर्शयिष्यन्

आह भगवान् --

।।3.4।। --

न कर्मणां क्रियाणां यज्ञादीनाम् इह जन्मनि जन्मान्तरे वा अनुष्ठितानाम्

उपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण

ज्ञाननिष्ठाहेतूनाम्, 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः। यथादर्शतलप्रख्ये

पश्यत्यात्मानमात्मनि' (महा0 शान्ति0 204।8) इत्यादिस्मरणात्, अनारम्भात् अननुष्ठानात्

नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैव अवस्थानमिति यावत्।

पुरुषः न अश्नुते न प्राप्नोतीत्यर्थः।।

कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुते इति वचनात् तद्विपर्ययात् तेषामारम्भात् नैष्कर्म्यमश्नुते इति

गम्यते। कस्मात् पुनः कारणात् कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुते इति? उच्यते, कर्मारम्भस्यैव
नैष्कर्म्योपायत्वात्। न ह्युपायमन्तरेण उपेयप्राप्तिरस्ति। कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य

ज्ञानयोगस्य, श्रुतौ इह च, प्रतिपादनात्। श्रुतौ तावत् प्रकृतस्य आत्मलोकस्य वेद्यस्य

वेदनोपायत्वेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' (बृह0 उ0 4।4।22)

इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम्। इहापि च -- 'संन्यासस्तु महाबाहो

दुःखमाप्तुमयोगतः' (गीता 5।6) 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ' (गीता 5।11)

'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' (गीता 18।5) इत्यादि प्रतिपादयिष्यति।।

ननु च 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं

दर्शयति। लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरम्। अतश्च नैष्कर्म्यार्थिनः किं

कर्मारम्भेण? इति प्राप्तम्। अत आह -- न च संन्यसनादेवेति। नापि संन्यसनादेव केवलात्

कर्मपरित्यागमात्रादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न

प्राप्नोति।।

कस्मात् पुनः कारणात् कर्मसंन्यासमात्रादेव केवलात् ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छति इति हेत्वाकाङ्क्षायामाह --

।।3.5।। --

न हि यस्मात् क्षणमपि कालं जातु कदाचित् कश्चित् तिष्ठति अकर्मकृत् सन्। कस्मात्? कार्यते प्रवर्त्यते हि यस्मात् अवश एव अस्वतन्त्र एव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्त्वरजस्तमोभिः गुणैः। अज्ञ इति वाक्यशेषः, यतो वक्ष्यति

'गुणैर्यो न विचाल्यते' इति। सांख्यानां पृथक्करणात् अज्ञानामेव हि कर्मयोगः, न ज्ञानिनाम्। ज्ञानिनां तु गुणैरचाल्यमानानां स्वतश्चलनाभावात् कर्मयोगो नोपपद्यते। तथा च व्याख्यातम् 'वेदाविनाशिनम्' इत्यत्र।।

यत्त्वनात्मज्ञः चोदितं कर्म नारभते इति तदसदेवेत्याह --

।।3.6।। --

कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य यः आस्ते तिष्ठति मनसा स्मरन् चिन्तयन् इन्द्रियार्थान् विषयान् विमूढात्मा विमूढान्तःकरणः मिथ्याचारो मृषाचारः पापाचारः सः उच्यते।।

।।3.7।। --

यस्तु पुनः कर्मण्यधिकृतः अज्ञः बुद्धीन्द्रियाणि मनसा नियम्य आरभते अर्जुन कर्मेन्द्रियैः वाक्पाण्यादिभिः। किमारभते इत्याह -- कर्मयोगम् असक्तः सन् फलाभिसंधिवर्जितः सः विशिष्यते इतरस्मात् मिथ्याचारात्।।

यतः एवम् अतः --

।।3.8।। --

नियतं नित्यं शास्त्रोपदिष्टम्, यो यस्मिन् कर्मणि अधिकृतः फलाय च अश्रुतं तत् नियतं कर्म, तत् कुरु त्वं हे अर्जुन, यतः कर्म ज्यायः अधिकतरं फलतः, हि यस्मात् अकर्मणः अकरणात् अनारम्भात्। कथम्? शरीरयात्रा शरीरस्थितिः अपि च ते तव न प्रसिध्येत् प्रसिद्धिं न गच्छेत् अकर्मणः अकरणात्। अतः दृष्टः कर्माकर्मणोर्विशेषो लोके।।

यच्च मन्यसे बन्धार्थत्वात् कर्म न कर्तव्यमिति तदप्यसत्। कथम् --

।।3.9।। --

'यज्ञो वै विष्णुः' (तै0 सं0 1.7.4) इति श्रुतेः यज्ञः ईश्वरः, तदर्थं यत् क्रियते तत् यज्ञार्थं कर्म। तस्मात् कर्मणः अन्यत्र अन्येन कर्मणा लोकः अयम् अधिकृतः कर्मकृत् कर्मबन्धनः कर्म बन्धनं यस्य सोऽयं कर्मबन्धनः लोकः, न तु यज्ञार्थात्। अतः तदर्थं यज्ञार्थं कर्म कौन्तेय, मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन् समाचर निर्वर्तय।।

इतश्च अधिकृतेन कर्म कर्तव्यम् --

।।3.10।। --

सहयज्ञाः यज्ञसहिताः प्रजाः त्रयो वर्णाः ताः सृष्ट्वा उत्पाद्य पुरा पूर्वं सर्गादौ उवाच उक्तवान् प्रजापतिः प्रजानां स्रष्टा अनेन यज्ञेन प्रसविष्यध्वं प्रसवः वृद्धिः उत्पत्तिः तं कुरुध्वम्। एष यज्ञः वः युष्माकम् अस्तु भवतु इष्टकामधुक् इष्टान् अभिप्रेतान् कामान् फलविशेषान् दोग्धीति इष्टकामधुक्।।

कथम् --

।।3.11।। --

देवान् इन्द्रादीन् भावयत वर्धयत अनेन यज्ञेन। ते देवा भावयन्तु आप्याययन्तु वृष्ट्यादिना वः युष्मान्। एवं परस्परम् अन्योन्यं भावयन्तः श्रेयः परं मोक्षलक्षणं ज्ञानप्राप्तिक्रमेण अवाप्स्यथ।

स्वर्गं वा परं श्रेयः अवाप्स्यथ।।

किञ्च --

।।3.12।। --

इष्टान् अभिप्रेतान् भोगान् हि वः युष्मभ्यं देवाः दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रादीन् यज्ञभाविताः यज्ञैः वर्धिताः तोषिताः इत्यर्थः। तैः देवैः दत्तान् भोगान् अप्रदाय अदत्त्वा, आनृण्यमकृत्वा इत्यर्थः, एभ्यः देवेभ्यः, यः भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव सः देवादिस्वापहारी।।

ये पुनः --

।।3.13।। --

देवयज्ञादीन् निर्वर्त्य तच्छिष्टम् अशनम् अमृताख्यम् अशितुं शीलं येषां ते यज्ञशिष्टाशिनः सन्तः मुच्यन्ते सर्वकिल्बिषैः सर्वपापैः चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्च अन्यैः। ये तु आत्मंभरयः, भुञ्जते ते तु अघं पापं स्वयमपि पापाः -- ये पचन्ति पाकं निर्वर्तयन्ति आत्मकारणात् आत्महेतोः।।

इतश्च अधिकृतेन कर्म कर्तव्यम् जगच्चक्रप्रवृत्तिहेतुर्हि कर्म। कथमिति उच्यते --

।।3.14।। --

अन्नात् भुक्तात् लोहितरेतःपरिणतात् प्रत्यक्षं भवन्ति जायन्ते भूतानि। पर्जन्यात् वृष्टेः अन्नस्य संभवः अन्नसंभवः। यज्ञात् भवति पर्जन्यः, 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः (मनु0 3.76)' इति स्मृतेः। यज्ञः अपूर्वम्। स च यज्ञः कर्मसमुद्भवः

ऋत्विग्यजमानयोश्च व्यापारः कर्म, तत् समुद्भवः यस्य यज्ञस्य अपूर्वस्य स यज्ञः कर्मसमुद्भवः।।

तच्चैवंविधं कर्म कुतो जातमित्याह --

।।3.15।। --

कर्म ब्रह्मोद्भवं ब्रह्म वेदः सः उद्भवः कारणं प्रकाशको यस्य तत् कर्म ब्रह्मोद्भवं विद्धि विजानीहि। ब्रह्म पुनः वेदाख्यम् अक्षरसमुद्भवम् अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तत् अक्षरसमुद्भवम्। ब्रह्म वेद इत्यर्थः। यस्मात् साक्षात् परमात्माख्यात् अक्षरात् पुरुषनिःश्वासवत् समुद्भूतं ब्रह्म तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतम्; सर्वगतमपि सत् नित्यं सदा यज्ञविधिप्रधानत्वात् यज्ञे प्रतिष्ठितम्।।

।।3.16।। --

एवम् इत्थम् ईश्वरेण वेदयज्ञपूर्वक जगच्चक्रं प्रवर्तितं न अनुवर्तयति इह लोके यः कर्मणि अधिकृतः सन् अघायुः अघं पापम् आयुः जीवनं यस्य सः अघायुः, पापजीवनः इति यावत्। इन्द्रियारामः इन्द्रियैः आरामः आरमणम् आक्रीडा विषयेषु यस्य सः इन्द्रियारामः मोघं वृथा हे पार्थ, स जीवति।।

तस्मात् अज्ञेन अधिकृतेन कर्तव्यमेव कर्मेति प्रकरणार्थः। प्राक् आत्मज्ञाननिष्ठायोग्यताप्राप्तेः

तादर्थ्येन कर्मयोगानुष्ठानम् अधिकृतेन अनात्मज्ञेन कर्तव्यमेवेत्येतत् 'न कर्मणामनारम्भात्'

इत्यत आरभ्य 'शरीरयात्रापि च ते न प्रसिध्येदकर्मणः' इत्येवमन्तेन प्रतिपाद्य, 'यज्ञार्थात्

कर्मणोऽन्यत्र' इत्यादिना 'मोघं पार्थ स जीवति' इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकम्

अधिकृतस्य अनात्मविदः कर्मानुष्ठाने बहु कारणमुक्तम्। तदकरणे च दोषसंकीर्तनं कृतम्।।

एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयम्, आहोस्वित् पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्याम् अनात्मविदः ज्ञानयोगेनैव निष्ठाम् आत्मविद्भिः सांख्यैः

अनुष्ठेयामप्राप्तेनैव, इत्येवमर्थम् अर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य

विवेकप्रतिपत्त्यर्थम् 'एतं वै तमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तः ब्राह्मणाः

मिथ्याज्ञानवद्भिः अवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं

चरन्ति न तेषामात्मज्ञाननिष्ठाव्यतिरेकेण अन्यत् कार्यमस्ति' इत्येवं श्रुत्यर्थमिह गीताशास्त्रे

प्रतिपिपादयिषितमाविष्कुर्वन् आह भगवान् --

।।3.17।। --

यस्तु सांख्यः आत्मज्ञाननिष्ठः आत्मरतिः आत्मन्येव रतिः न विषयेषु यस्य सः आत्मरतिरेव

स्यात् भवेत् आत्मतृप्तश्च आत्मनैव तृप्तः न अन्नरसादिना सः मानवः मनुष्यः संन्यासी

आत्मन्येव च संतुष्टः। संतोषो हि बाह्यार्थलाभे सर्वस्य भवति, तमनपेक्ष्य आत्मन्येव च संतुष्टः

सर्वतो वीततृष्ण इत्येतत्। यः ईदृशः आत्मवित् तस्य कार्यं करणीयं न विद्यते नास्ति इत्यर्थः।।

किञ्च --

।।3.18।। --

नैव तस्य परमात्मरतेः कृतेन कर्मणा अर्थः प्रयोजनमस्ति। अस्तु तर्हि अकृतेन अकरणेन

प्रत्यवायाख्यः अनर्थः, न अकृतेन इह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूपः आत्महानिलक्षणो वा नैव अस्ति। न च अस्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चित् अर्थव्यपाश्रयः प्रयोजननिमित्तक्रियासाध्यः व्यपाश्रयः व्यपाश्रयणम् आलम्बनं कञ्चित् भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थः अस्ति, येन तदर्था क्रिया अनुष्ठेया स्यात्। न त्वम् तस्मिन् सर्वतःसंप्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे।।

यतः एवम् --

।।3.19।। --

तस्मात् असक्तः सङ्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय। असक्तो

हि यस्मात् समाचरन् ईश्वरार्थं कर्म कुर्वन् परं मोक्षम् आप्नोति पूरुषः सत्त्वशुद्धिद्वारेण इत्यर्थः।।

यस्माच्च --

।।3.20।। --

कर्मणैव हि यस्मात् पूर्वे क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गन्तुम् आस्थिताः प्रवृत्ताः। के?

जनकादयः जनकाश्वपतिप्रभृतयः। यदि ते प्राप्तसम्यग्दर्शनाः, ततः लोकसंग्रहार्थं

प्रारब्धकर्मत्वात् कर्मणा सहैव असंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः। अथ अप्राप्तसम्यग्दर्शनाः जनकादयः, तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः। अथ मन्यसे पूर्वैरपि जनकादिभिः अजानद्भिरेव कर्तव्यं कर्म कृतम्; तावता नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति; तथापि प्रारब्धकर्मायत्तः त्वं लोकसंग्रहम् एव अपि लोकस्य उन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहः, तमेवापि प्रयोजनं संपश्यन् कर्तुम् अर्हसि।।

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥३.२॥**

vyāmiśreṇeva vākyena buddhiṃ mohayasīva me |

tadekaṃ vada niścitya yena śreyo'hamāpnuyām ||3.2||

व्यामिश्रेण $^{3/1}$ इव $^{0}$ वाक्येन $^{3/1}$ बुद्धिम् $^{2/1}$ मोहयसि $^{II/1}$ इव $^{0}$ मे $^{6/1}$ ।

तत् $^{2/1}$ एकम् $^{2/1}$ वद $^{II/1}$ निश्चित्य $^{0}$ येन $^{3/1}$ श्रेयः $^{2/1}$ अहम् $^{1/1}$ आप्नुयाम् $^{I/1}$ ॥३.२॥

- व्यामिश्रेण [vyāmiśreṇa] = contradictory = व्यामिश्र (n.) + adj. to वाक्येन 3/1
- इव [iva] = seemingly = अव्ययम्
- वाक्येन [vākyena] = by words = वाक्य (n.) + 3/1
- बुद्धिम् [buddhim] = mind = बुद्धि (f.) + 2/1
- मोहयसि [mohayasi] = confuse = मुह् (to be deluded) + णिच् (to confuse) + लट्/कर्तरि/II/1
    - मुह् + णिच्    हेतुमति च ।
      मोह् + इ
      मोहि    सनाद्यन्ता धातवः ।
    - मोहि + सिप्
      मोहे + शप् + सि
      मोहय् + अ + सि
- इव [iva] = seemingly = अव्ययम्
- मे [me] = my = अस्मद् (pron. m.) + सम्बन्धे to बुद्धिम् 6/1
- तत् [tat] = that = तद् (pron. n.) + कर्मणि to निश्चित्य and वद 2/1
- एकम् [ekam] = one = एक (pron. n.) + कर्मणि to निश्चित्य and वद 2/1
- वद [vada] = say = वद् (to say) + लोट्/कर्तरि/II/1
- निश्चित्य [niścitya] = having decided = अव्ययम्
- येन [yena] = by which = यद् (pron. n.) + करणे to आप्नुयाम् 3/1
- श्रेयः [śreyaḥ] = liberation = श्रेयस् (n.) + कर्मणि to आप्नुयाम् 2/1
- अहम् [aham] = I = अस्मद् (pron. m.) + 1/1
- आप्नुयाम् [āpnuyām] = shall gain = आङ् + आप् (to gain) + विधिलिङ्/कर्तरि/I/1

With words that are seemingly contradictory, you appear to be confusing my mind. Having decided which is better, tell me the one thing by which I shall gain liberation.

Sentence 1:

व्यामिश्रेण $^{3/1}$ इव $^{0}$ वाक्येन $^{3/1}$ मे $^{6/1}$ बुद्धिम् $^{2/1}$ मोहयसि $^{II/1}$ इव $^{0}$ ।

With words (वाक्येन $^{3/1}$) that are seemingly (इव $^{0}$) contradictory (व्यामिश्रेण $^{3/1}$), you appear to be (इव $^{0}$) confusing (मोहयसि $^{II/1}$) my (मे $^{6/1}$) mind (बुद्धिम् $^{2/1}$).

Sentence 2:

तत् $^{2/1}$ एकम् $^{2/1}$ निश्चित्य $^{0}$ वद $^{II/1}$ येन $^{3/1}$ अहम् $^{1/1}$ श्रेयः $^{2/1}$ आप्नुयाम् $^{I/1}$ ॥३.२॥

Having decided (निश्चित्य $^{0}$) which is better (तत् $^{2/1}$), tell me (वद $^{II/1}$) the one thing (एकम् $^{2/1}$) by which (येन $^{3/1}$) I (अहम् $^{1/1}$) shall gain (आप्नुयाम् $^{I/1}$) liberation (श्रेयः $^{2/1}$).

किञ्च –

।।3.2।। --

व्यामिश्रेणेव, यद्यपि विविक्ताभिधायी भगवान्, तथापि मम मन्दबुद्धेः व्यामिश्रमिव भगवद्वाक्यं

प्रतिभाति। तेन मम बुद्धिं मोहयसि इव, मम बुद्धिव्यामोहापनयाय हि प्रवृत्तः त्वं तु कथं

मोहयसि? अतः ब्रवीमि बुद्धिं मोहयसि इव मे मम इति। त्वं तु भिन्नकर्तृकयोः ज्ञानकर्मणोः

एकपुरुषानुष्ठानासंभवं यदि मन्यसे, तत्रैवं सति तत् तयोः एकं बुद्धिं कर्म वा इदमेव अर्जुनस्य योग्यं
बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि, येन ज्ञानेन कर्मणा वा अन्यतरेण श्रेयः अहम् आप्नुयां
प्राप्नुयाम्; इति यदुक्तं तदपि नोपपद्यते।। यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवता उक्तं स्यात् , तत्
कथं तयोः 'एकं वद' इति एकविषयैव अर्जुनस्य शुश्रूषा स्यात्। न हि भगवता पूर्वमुक्तम् 'अन्यतरदेव
ज्ञानकर्मणोः वक्ष्यामि, नैव द्वयम्' इति, येन उभयप्राप्त्यसंभवम् आत्मनो मन्यमानः एकमेव प्रार्थयेत्।।

प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच --

।।3.3।। --

लोके अस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिः अनुष्ठेयतात्पर्यं पुरा
पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासाम् अभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेन
ईश्वरेण हे अनघ अपाप। तत्र का सा द्विविधा निष्ठा इत्याह -- तत्र ज्ञानयोगेन ज्ञानमेव योगः तेन
सांख्यानाम्

अत्मानात्मविषयविवेकविज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां

परमहंसपरिव्राजकानां ब्रह्मण्येव अवस्थितानां निष्ठा प्रोक्ता। कर्मयोगेन कर्मैव योगः कर्मयोगः तेन
कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्ता इत्यर्थः। यदि च एकेन पुरुषेण एकस्मै पुरुषार्थाय

ज्ञानं कर्म च समुच्चित्य अनुष्ठेयं भगवता इष्टम् उक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तम् ,

कथमिह अर्जुनाय उपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके व ज्ञानकर्मनिष्ठे ब्रूयात्? यदि पुनः 'अर्जुनः ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामि इति' मतं भगवतः कल्प्येत, तदा रागद्वेषवान् अप्रमाणभूतो भगवान् कल्पितः स्यात्।

तच्चायुक्तम्। तस्मात् कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः।।

यत् अर्जुनेन उक्तं कर्मणो ज्यायस्त्वं बुद्धेः तच्च स्थितम्, अनिराकरणात्। तस्याश्च ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वम् , भिन्नपुरुषानुष्ठेयत्ववचनात्। भगवतः एवमेव अनुमतमिति गम्यते।।

'मां च बन्धकारणे कर्मण्येव नियोजयसि' इति विषण्णमनसमर्जुनम् 'कर्म नारभे' इत्येवं मन्वानमालक्ष्य आह भगवान् -- न कर्मणामनारम्भात् इति। अथवा -- ज्ञानकर्मनिष्ठयोः परस्परविरोधात् एकेन पुरुषेण युगपत् अनुष्ठातुमशक्यत्वे सति इतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वम्, न स्वातन्त्र्येण; ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुः अन्यानपेक्षा, इत्येतमर्थं प्रदर्शयिष्यन् आह भगवान् --

।।3.4।। --

न कर्मणां क्रियाणां यज्ञादीनाम् इह जन्मनि जन्मान्तरे वा अनुष्ठितानाम् उपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनाम्, 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः। यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' (महा0 शान्ति0 204।8) इत्यादिस्मरणात्, अनारम्भात् अननुष्ठानात् नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैव अवस्थानमिति यावत्। पुरुषः न अश्नुते न प्राप्नोतीत्यर्थः।।

कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुते इति वचनात् तद्विपर्ययात् तेषामारम्भात् नैष्कर्म्यमश्नुते इति गम्यते। कस्मात् पुनः कारणात् कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुते इति? उच्यते, कर्मारम्भस्यैव नैष्कर्म्योपायत्वात्। न ह्युपायमन्तरेण उपेयप्राप्तिरस्ति। कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य, श्रुतौ इह च, प्रतिपादनात्। श्रुतौ तावत् प्रकृतस्य आत्मलोकस्य वेद्यस्य वेदनोपायत्वेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' (बृह0 उ0 4।4।22) इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम्। इहापि च -- 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' (गीता 5।6) 'योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ' (गीता 5।11) 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' (गीता 18।5) इत्यादि प्रतिपादयिष्यति।।

ननु च 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति। लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरम्। अतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेण? इति प्राप्तम्। अत आह -- न च संन्यसनादेवेति। नापि संन्यसनादेव केवलात् कर्मपरित्यागमात्रादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति।।

कस्मात् पुनः कारणात् कर्मसंन्यासमात्रादेव केवलात् ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छति इति हेत्वाकाङ्क्षायामाह --

।।3.5।। --

न हि यस्मात् क्षणमपि कालं जातु कदाचित् कश्चित् तिष्ठति अकर्मकृत् सन्। कस्मात्? कार्यते प्रवर्त्यते हि यस्मात् अवश एव अस्वतन्त्र एव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्त्वरजस्तमोभिः गुणैः। अज्ञ इति वाक्यशेषः, यतो वक्ष्यति

'गुणैर्यो न विचाल्यते' इति। सांख्यानां पृथक्करणात् अज्ञानामेव हि कर्मयोगः, न ज्ञानिनाम्। ज्ञानिनां तु गुणैरचाल्यमानानां स्वतश्चलनाभावात् कर्मयोगो नोपपद्यते। तथा च व्याख्यातम् 'वेदाविनाशिनम्' इत्यत्र।।

यत्त्वनात्मज्ञः चोदितं कर्म नारभते इति तदसदेवेत्याह --

।।3.6।। --

कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य यः आस्ते तिष्ठति मनसा स्मरन् चिन्तयन् इन्द्रियार्थान् विषयान् विमूढात्मा विमूढान्तःकरणः मिथ्याचारो मृषाचारः पापाचारः सः उच्यते।।

।।3.7।। --

यस्तु पुनः कर्मण्यधिकृतः अज्ञः बुद्धीन्द्रियाणि मनसा नियम्य आरभते अर्जुन कर्मेन्द्रियैः वाक्पाण्यादिभिः। किमारभते इत्याह -- कर्मयोगम् असक्तः सन् फलाभिसंधिवर्जितः सः विशिष्यते इतरस्मात् मिथ्याचारात्।।

यतः एवम् अतः --

।।3.8।। --

नियतं नित्यं शास्त्रोपदिष्टम्, यो यस्मिन् कर्मणि अधिकृतः फलाय च अश्रुतं तत् नियतं कर्म, तत् कुरु त्वं हे अर्जुन, यतः कर्म ज्यायः अधिकतरं फलतः, हि यस्मात् अकर्मणः अकरणात् अनारम्भात्। कथम्? शरीरयात्रा शरीरस्थितिः अपि च ते तव न प्रसिध्येत् प्रसिद्धिं न गच्छेत् अकर्मणः अकरणात्। अतः दृष्टः कर्माकर्मणोर्विशेषो लोके।।

यच्च मन्यसे बन्धार्थत्वात् कर्म न कर्तव्यमिति तदप्यसत्। कथम् --

।।3.9।। --

'यज्ञो वै विष्णुः' (तै0 सं0 1.7.4) इति श्रुतेः यज्ञः ईश्वरः, तदर्थं यत् क्रियते तत् यज्ञार्थं कर्म। तस्मात् कर्मणः अन्यत्र अन्येन कर्मणा लोकः अयम् अधिकृतः कर्मकृत् कर्मबन्धनः कर्म बन्धनं यस्य सोऽयं कर्मबन्धनः लोकः, न तु यज्ञार्थात्। अतः तदर्थं यज्ञार्थं कर्म कौन्तेय, मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन् समाचर निर्वर्तय।।

इतश्च अधिकृतेन कर्म कर्तव्यम् --

।।3.10।। --

सहयज्ञाः यज्ञसहिताः प्रजाः त्रयो वर्णाः ताः सृष्ट्वा उत्पाद्य पुरा पूर्वं सर्गादौ उवाच उक्तवान् प्रजापतिः प्रजानां स्रष्टा अनेन यज्ञेन प्रसविष्यध्वं प्रसवः वृद्धिः उत्पत्तिः तं कुरुध्वम्। एष यज्ञः वः युष्माकम् अस्तु भवतु इष्टकामधुक् इष्टान् अभिप्रेतान् कामान् फलविशेषान् दोग्धीति इष्टकामधुक्।।

कथम् --

।।3.11।। --

देवान् इन्द्रादीन् भावयत वर्धयत अनेन यज्ञेन। ते देवा भावयन्तु आप्याययन्तु वृष्ट्यादिना वः युष्मान्। एवं परस्परम् अन्योन्यं भावयन्तः श्रेयः परं मोक्षलक्षणं ज्ञानप्राप्तिक्रमेण अवाप्स्यथ।

स्वर्गं वा परं श्रेयः अवाप्स्यथ।।

किञ्च --

।।3.12।। --

इष्टान् अभिप्रेतान् भोगान् हि वः युष्मभ्यं देवाः दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रादीन् यज्ञभाविताः यज्ञैः वर्धिताः तोषिताः इत्यर्थः। तैः देवैः दत्तान् भोगान् अप्रदाय अदत्त्वा, आनृण्यमकृत्वा इत्यर्थः, एभ्यः देवेभ्यः, यः भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव सः देवादिस्वापहारी।।

ये पुनः --

।।3.13।। --

देवयज्ञादीन् निर्वर्त्य तच्छिष्टम् अशनम् अमृताख्यम् अशितुं शीलं येषां ते यज्ञशिष्टाशिनः सन्तः मुच्यन्ते सर्वकिल्बिषैः सर्वपापैः चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्च अन्यैः। ये तु आत्मंभरयः, भुञ्जते ते तु अघं पापं स्वयमपि पापाः -- ये पचन्ति पाकं निर्वर्तयन्ति आत्मकारणात् आत्महेतोः।।

इतश्च अधिकृतेन कर्म कर्तव्यम् जगच्चक्रप्रवृत्तिहेतुर्हि कर्म। कथमिति उच्यते --

।।3.14।। --

अन्नात् भुक्तात् लोहितरेतःपरिणतात् प्रत्यक्षं भवन्ति जायन्ते भूतानि। पर्जन्यात् वृष्टेः अन्नस्य संभवः अन्नसंभवः। यज्ञात् भवति पर्जन्यः, 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः (मनु0 3.76)' इति स्मृतेः। यज्ञः अपूर्वम्। स च यज्ञः कर्मसमुद्भवः

ऋत्विग्यजमानयोश्च व्यापारः कर्म, तत् समुद्भवः यस्य यज्ञस्य अपूर्वस्य स यज्ञः कर्मसमुद्भवः।।

तच्चैवंविधं कर्म कुतो जातमित्याह --

।।3.15।। --

कर्म ब्रह्मोद्भवं ब्रह्म वेदः सः उद्भवः कारणं प्रकाशको यस्य तत् कर्म ब्रह्मोद्भवं विद्धि विजानीहि। ब्रह्म पुनः वेदाख्यम् अक्षरसमुद्भवम् अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तत् अक्षरसमुद्भवम्। ब्रह्म वेद इत्यर्थः।

यस्मात् साक्षात् परमात्माख्यात् अक्षरात् पुरुषनिःश्वासवत् समुद्भूतं ब्रह्म तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतम्; सर्वगतमपि सत् नित्यं सदा यज्ञविधिप्रधानत्वात् यज्ञे प्रतिष्ठितम्।।

।।3.16।। --

एवम् इत्थम् ईश्वरेण वेदयज्ञपूर्वक जगच्चक्रं प्रवर्तितं न अनुवर्तयति इह लोके यः कर्मणि अधिकृतः सन् अघायुः अघं पापम् आयुः जीवनं यस्य सः अघायुः, पापजीवनः इति यावत्। इन्द्रियारामः इन्द्रियैः आरामः आरमणम् आक्रीडा विषयेषु यस्य सः इन्द्रियारामः मोघं वृथा हे पार्थ, स जीवति।।

तस्मात् अज्ञेन अधिकृतेन कर्तव्यमेव कर्मेति प्रकरणार्थः। प्राक् आत्मज्ञाननिष्ठायोग्यताप्राप्तेः तादर्थ्येन कर्मयोगानुष्ठानम् अधिकृतेन अनात्मज्ञेन कर्तव्यमेवेत्येतत् 'न कर्मणामनारम्भात्' इत्यत आरभ्य 'शरीरयात्रापि च ते न प्रसिध्येदकर्मणः' इत्येवमन्तेन प्रतिपाद्य, 'यज्ञार्थात् कर्मणोऽन्यत्र' इत्यादिना 'मोघं पार्थ स जीवति' इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकम् अधिकृतस्य अनात्मविदः कर्मानुष्ठाने बहु कारणमुक्तम्। तदकरणे च दोषसंकीर्तनं कृतम्।।

एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयम्, आहोस्वित् पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्याम् अनात्मविदः ज्ञानयोगेनैव निष्ठाम् आत्मविद्भिः सांख्यैः अनुष्ठेयामप्राप्तेनैव, इत्येवमर्थम् अर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थम् 'एतं वै तमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तः ब्राह्मणाः मिथ्याज्ञानवद्भिः अवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति न तेषामात्मज्ञाननिष्ठाव्यतिरेकेण अन्यत् कार्यमस्ति' इत्येवं श्रुत्यर्थमिह गीताशास्त्रे प्रतिपिपादयिषितमाविष्कुर्वन् आह भगवान् --

।।3.17।। --

यस्तु सांख्यः आत्मज्ञाननिष्ठः आत्मरतिः आत्मन्येव रतिः न विषयेषु यस्य सः आत्मरतिरेव स्यात् भवेत् आत्मतृप्तश्च आत्मनैव तृप्तः न अन्नरसादिना सः मानवः मनुष्यः संन्यासी आत्मन्येव च संतुष्टः। संतोषो हि बाह्यार्थलाभे सर्वस्य भवति, तमनपेक्ष्य आत्मन्येव च संतुष्टः सर्वतो वीततृष्ण इत्येतत्। यः ईदृशः आत्मवित् तस्य कार्यं करणीयं न विद्यते नास्ति इत्यर्थः।।

किञ्च --

।।3.18।। --

नैव तस्य परमात्मरतेः कृतेन कर्मणा अर्थः प्रयोजनमस्ति। अस्तु तर्हि अकृतेन अकरणेन प्रत्यवायाख्यः अनर्थः, न अकृतेन इह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूपः आत्महानिलक्षणो वा नैव अस्ति। न च अस्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चित् अर्थव्यपाश्रयः प्रयोजननिमित्तक्रियासाध्यः व्यपाश्रयः व्यपाश्रयणम् आलम्बनं कञ्चित् भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थः अस्ति, येन तदर्था क्रिया अनुष्ठेया स्यात्। न त्वम् तस्मिन् सर्वतःसंप्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे।।

यतः एवम् --

।।3.19।। --

तस्मात् असक्तः सङ्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय। असक्तो हि यस्मात् समाचरन् ईश्वरार्थं कर्म कुर्वन् परं मोक्षम् आप्नोति पूरुषः सत्त्वशुद्धिद्वारेण इत्यर्थः।।

यस्माच्च --

।।3.20।। --

कर्मणैव हि यस्मात् पूर्वे क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गन्तुम् आस्थिताः प्रवृत्ताः। के?

जनकादयः जनकाश्वपतिप्रभृतयः। यदि ते प्राप्तसम्यग्दर्शनाः, ततः लोकसंग्रहार्थं

प्रारब्धकर्मत्वात् कर्मणा सहैव असंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः। अथ अप्राप्तसम्यग्दर्शनाः जनकादयः, तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः। अथ मन्यसे पूर्वैरपि जनकादिभिः अजानद्भिरेव कर्तव्यं कर्म कृतम्; तावता नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति; तथापि प्रारब्धकर्मायत्तः त्वं लोकसंग्रहम् एव अपि लोकस्य उन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहः, तमेवापि प्रयोजनं संपश्यन् कर्तुम् अर्हसि।।

**श्रीभगवान् उवाच ।**

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥३.३॥**

śrībhagavān uvāca |

loke'smin dvividhā niṣṭhā purā proktā mayā'nagha |

jñānayogena sāṅkhyānāṃ karmayogena yogināṃ ||3.3||

श्रीभगवान् $^{1/1}$ उवाच $^{III/1}$ ।

लोके $^{7/1}$ अस्मिन् $^{7/1}$ द्विविधा $^{1/1}$ निष्ठा $^{1/1}$ पुरा $^{0}$ प्रोक्ता $^{1/1}$ मया $^{3/1}$ अनघ $^{8/1}$ ।

ज्ञानयोगेन $^{3/1}$ साङ्ख्यानाम् $^{6/3}$ कर्मयोगेन $^{3/1}$ योगिनाम् $^{6/3}$ ॥३.३॥

- श्रीभगवान् [śrībhagavān] = Bhagavān = भगवत् (m.) + कर्तरि to उवाच 1/1
  - श्रिया सहित भगवान् श्रीभगवान् ।

- भगः अस्य अस्ति इति भगवान् ।
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1

- लोके [loke] = in world = लोक (m.) + अधिकरणे to भवति 7/1
- अस्मिन् [asmin] = this = इदम् (pron. m.) + adj. to लोके 7/1
- द्विविधा [dvividhā] = two-fold = द्विविधा (f.) + 1/1
  - द्वौ विधौ (प्रकारौ) यस्यां सा द्विविधा (117B)
- निष्ठा [niṣṭhā] = committed life-style = निष्ठा (f.) + 1/1
  - नितरां स्थितिः
    नि + स्था + अङ् + टाप्
- पुरा [purā] = ancient, in the beginning = अव्ययम्
- प्रोक्ता [proktā] = said = प्रोक्ता (f.) + 1/1
  - प्र + वच् + क्त (कर्मणि भूते)
- मया [mayā] = by me = अस्मद् (pron. m.) + कर्तरि to प्रोक्ता 3/1
- अनघ [anagha] = Sinless one = अनघ (m.) + सम्बोधने 1/1
  - अविद्यमानः अघः यस्य सः अनघः (NB) ।
- ज्ञानयोगेन [jñānayogena] = the pursuit of knowledge = ज्ञानयोग (m.) + इत्थंभूते 3/1
- साङ्ख्यानाम् [sāṅkhyānām] = for the renunciate = साङ्ख्य (m.) + सम्बन्धे to ज्ञानयोगेन 6/3
- कर्मयोगेन [karmayogena] = the pursuit of action = कर्मयोग (m.) + इत्थंभूते 3/1
- योगिनाम् [yoginām] = for the renuncifor those who pursue activity = योगिन् (m.) + सम्बन्धे to कर्मयोगेन 6/3

Śrī Bhagavān said:

Oh! Sinless one, the tow-fold committed life-style in this world, was told by Me in the beginning – the pursuit of knowledge for the nenunciates and the pursuit of action for those who pursue activity.

Sentence 1:

श्रीभगवान् $^{1/1}$ उवाच $^{III/1}$ ।

Śrī Bhagavān (श्रीभगवान्$^{1/1}$) said (उवाच$^{III/1}$).

Sentence 2:

अनघ$^{8/1}$ अस्मिन्$^{7/1}$ लोके$^{7/1}$ द्विविधा$^{1/1}$ निष्ठा$^{1/1}$ मया$^{3/1}$ पुरा$^{0}$ प्रोक्ता$^{1/1}$ ।

Oh! Sinless one (अनघ$^{8/1}$), the tow-fold (द्विविधा$^{1/1}$) committed life-style (निष्ठा$^{1/1}$) in this (अस्मिन्$^{7/1}$) world (लोके$^{7/1}$), was told (प्रोक्ता$^{1/1}$) by Me (मया$^{3/1}$) in the beginning (पुरा$^{0}$)

Sentence 3:

ज्ञानयोगेन$^{3/1}$ साङ्ख्यानाम्$^{6/3}$ कर्मयोगेन$^{3/1}$ योगिनाम्$^{6/3}$ ॥३.३॥

– the pursuit of knowledge (ज्ञानयोगेन$^{3/1}$) for the nenunciates (साङ्ख्यानाम्$^{6/3}$) and the pursuit of action (कर्मयोगेन$^{3/1}$) for those who pursue activity (योगिनाम्$^{6/3}$).

**प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच --**

।।3.3।। --

लोके अस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिः अनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासाम् अभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण हे अनघ अपाप। तत्र का सा द्विविधा निष्ठा इत्याह -- तत्र ज्ञानयोगेन ज्ञानमेव योगः तेन सांख्यानाम्

अत्मानात्मविषयविवेकविज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां

- इदम् [idam] = this (knowledge) = इदम् (pron. n.) + 1/1
- आवृतम् [āvṛtam] = covered = आवृत (n.) + 1/1

Just as the fire is covered by clouds of smoke, just as a mirror is covered by dust, and just as a foetus is covered by the womb, so too, knowledge is covered by disire.

Sentence 1:

यथा $^{0}$ वह्निः $^{1/1}$ धूमेन $^{3/1}$ आव्रियते $^{III/1}$, यथा $^{0}$ आदर्शः $^{1/1}$ मलेन $^{3/1}$ च $^{0}$ (आव्रियते $^{III/1}$)।
यथा $^{0}$ गर्भः $^{1/1}$ उल्बेन $^{3/1}$ आवृतः $^{1/1}$ (आव्रियते $^{III/1}$), तथा $^{0}$ इदम् $^{1/1}$ तेन $^{3/1}$ आवृतम् $^{1/1}$ ॥३.३८॥
Just as (यथा $^{0}$) the fire (वह्निः $^{1/1}$) is covered (आव्रियते $^{III/1}$) by clouds of smoke (धूमेन $^{3/1}$), just as (यथा $^{0}$) a mirror (आदर्शः $^{1/1}$) is covered (आव्रियते $^{III/1}$) by dust (मलेन $^{3/1}$), and (च $^{0}$) just as (यथा $^{0}$) a foetus (गर्भः $^{1/1}$) is covered (आवृतः $^{1/1}$) by the womb (उल्बेन $^{3/1}$), so too (तथा $^{0}$), knowledge (इदम् $^{1/1}$) is covered (आवृतम् $^{1/1}$) by disire (तेन $^{3/1}$).

कथं वैरी इति दृष्टान्तैः प्रत्याययति --

।।3.38।। --

धूमेन सहजेन आव्रियते वह्निः प्रकाशात्मकः अप्रकाशात्मकेन, यथा वा आदर्शो मलेन च,

यथा उल्बेन च जरायुणा गर्भवेष्टनेन आवृतः आच्छादितः गर्भः तथा तेन इदम् आवृतम्।।

किं पुनस्तत् इदंशब्दवाच्यं यत् कामेनावृतमित्युच्यते

।।3.39।। --

आवृतम् एतेन ज्ञानं ज्ञानिनः नित्यवैरिणा, ज्ञानी हि जानाति 'अनेन अहमनर्थे प्रयुक्तः' इति

पूर्वमेव। दुःखी च भवति नित्यमेव। अतः असौ ज्ञानिनो नित्यवैरी, न तु मूर्खस्य। स हि कामं

तृष्णाकाले मित्रमिव पश्यन् तत्कार्ये दुःखे प्राप्ते जानाति 'तृष्णया अहं दुःखित्वमापादितः' इति,

न पूर्वमेव। अतः ज्ञानिन एव नित्यवैरी। किंरूपेण? कामरूपेण कामः इच्छैव रूपमस्य इति कामरूपः तेन दुष्पूरेण दुःखेन पूरणमस्य इति दुष्पूरः तेन अनलेन न अस्य अलं पर्याप्तिः विद्यते इत्यनलः तेन च।।

किमधिष्ठानः पुनः कामः ज्ञानस्य आवरणत्वेन वैरी सर्वस्य लोकस्य? इत्यपेक्षायामाह, ज्ञाते

हि शत्रोरधिष्ठाने सुखेन निबर्हणं कर्तुं शक्यत इति -

।।3.40।। --

इन्द्रियाणि मनः बुद्धिश्च अस्य कामस्य अधिष्ठानम् आश्रयः उच्यते। एतैः इन्द्रियादिभिः आश्रयैः

विमोहयति विविधं मोहयति एष कामः ज्ञानम् आवृत्य आच्छाद्य देहिनं शरीरिणम्।।

यतः एवम् --

।।3.41।। --

तस्मात् त्वम् इन्द्रियाणि आदौ पूर्वमेव नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं

प्रजहिहि परित्यज एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रतः आचार्यतश्च आत्मादीनाम् अवबोधः, विज्ञानं विशेषतः तदनुभवः, तयोः ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोः नाशनं नाशकरं

प्रजहिहि आत्मनः परित्यजेत्यर्थः।।

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहि इत्युक्तम्; तत्र किमाश्रयः कामं जह्यात् इत्युच्यते --

।।3.42।। --

इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य

सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः। तथा इन्द्रियेभ्यः परं मनः

संकल्पविकल्पात्मकम्। तथा मनसः तु परा बुद्धिः निश्चयात्मिका। तथा यः सर्वदृश्येभ्यः

बुद्ध्यन्तेभ्यः आभ्यन्तरः, यं देहिनम् इन्द्रियादिभिः आश्रयैः युक्तः कामः ज्ञानावरणद्वारेण मोहयति इत्युक्तम्। बुद्धेः परतस्तु सः सः बुद्धेः द्रष्टा परमात्मा।।

ततः किम् --

।।3.43।। --

एवं बुद्धेः परम् आत्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा आत्मानं स्वेनैव आत्मना

संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

तृतीयोऽध्यायः।।

## आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
## कामरूपेण कौतेय दुष्पूरेणानलेन च ॥३.३९॥

āvṛtaṃ jñānametena jñānino nityavairiṇā ।
kāmarūpeṇa kauteya duṣmūreṇānalena ca ।।3.39।।

**आवृतम्** $^{1/1}$ **ज्ञानम्** $^{1/1}$ **एतेन** $^{3/1}$ **ज्ञानिनः** $^{6/1}$ **नित्यवैरिणा** $^{3/1}$ ।
**कामरूपेण** $^{3/1}$ **कौतेय** $^{8/1}$ **दुष्पूरेण** $^{3/1}$ **अनलेन** $^{3/1}$ **च** $^{0}$ ॥३.३९॥

- आवृतम् [āvṛtam] = covered = आवृत (n.) + 1/1
- ज्ञानम् [jñānam] = knowledge = ज्ञान (n.) + 1/1
- एतेन [etena] = by this = एतद् (pron. m.) + कर्तरि 3/1
- ज्ञानिनः [jñāninaḥ] = the wise = ज्ञानिन् (m.) + 6/1
- नित्यवैरिणा [nityavairiṇā] = the constant enemy = नित्यवैरिन् (m.) + कर्तरि 3/1
- कामरूपेण [kāmarūpeṇa] = that which is in the form of desire = कामरूप (m.) + कर्तरि 3/1
- कौतेय [kauteya] = son of Kuntī = कौतेय (m.) + सम्बोधने 1/1
- दुष्पूरेण [duṣmūreṇa] = insatiable = दुष्पूर (m.) + कर्तरि 3/1

- अनलेन [analena] = fire = अनल (m.) + कर्तरि 3/1
- च [ca] = and = अव्ययम्

Knowledge is covered by this, Oh! Arjuna, the insatiable fire of desire, the constant enemy of the wise.

Sentence 1:

ज्ञानिनः $^{6/1}$ नित्यवैरिणा $^{3/1}$ कामरूपेण $^{3/1}$ दुष्पूरेण $^{3/1}$ अनलेन $^{3/1}$ च $^{0}$ एतेन $^{3/1}$ ज्ञानम् $^{1/1}$ आवृतम् $^{1/1}$ कौतेय $^{8/1}$ ॥३.३९॥

Knowledge (ज्ञानम् $^{1/1}$) is covered (आवृतम् $^{1/1}$) by this (एतेन $^{3/1}$), Oh! Arjuna (कौतेय $^{8/1}$), the insatiable (दुष्पूरेण $^{3/1}$) fire (अनलेन $^{3/1}$ च $^{0}$) of desire (कामरूपेण $^{3/1}$), the constant enemy (नित्यवैरिणा $^{3/1}$) of the wise (ज्ञानिनः $^{6/1}$).

किं पुनस्तत् इदंशब्दवाच्यं यत् कामेनावृतमित्युच्यते

।।3.39।। --

आवृतम् एतेन ज्ञानं ज्ञानिनः नित्यवैरिणा, ज्ञानी हि जानाति 'अनेन अहमनर्थे प्रयुक्तः' इति

पूर्वमेव। दुःखी च भवति नित्यमेव। अतः असौ ज्ञानिनो नित्यवैरी, न तु मूर्खस्य। स हि कामं

तृष्णाकाले मित्रमिव पश्यन् तत्कार्ये दुःखे प्राप्ते जानाति 'तृष्णया अहं दुःखित्वमापादितः' इति,

न पूर्वमेव। अतः ज्ञानिन एव नित्यवैरी। किंरूपेण? कामरूपेण कामः इच्छैव रूपमस्य इति कामरूपः तेन दुष्पूरेण दुःखेन पूरणमस्य इति दुष्पूरः तेन अनलेन न अस्य अलं पर्याप्तिः विद्यते इत्यनलः तेन च।।

किमधिष्ठानः पुनः कामः ज्ञानस्य आवरणत्वेन वैरी सर्वस्य लोकस्य? इत्यपेक्षायामाह, ज्ञाते

हि शत्रोरधिष्ठाने सुखेन निबर्हणं कर्तुं शक्यत इति -

।।3.40।। --

इन्द्रियाणि मनः बुद्धिश्च अस्य कामस्य अधिष्ठानम् आश्रयः उच्यते। एतैः इन्द्रियादिभिः आश्रयैः

विमोहयति विविधं मोहयति एष कामः ज्ञानम् आवृत्य आच्छाद्य देहिनं शरीरिणम्।।

यतः एवम् --

।।3.41।। --

तस्मात् त्वम् इन्द्रियाणि आदौ पूर्वमेव नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं

प्रजहिहि परित्यज एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रतः आचार्यतश्च आत्मादीनाम् अवबोधः, विज्ञानं विशेषतः तदनुभवः, तयोः ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोः नाशनं नाशकरं

प्रजहिहि आत्मनः परित्यजेत्यर्थः।।

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहि इत्युक्तम्; तत्र किमाश्रयः कामं जह्यात् इत्युच्यते --

।।3.42।। --

इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य

सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः। तथा इन्द्रियेभ्यः परं मनः

संकल्पविकल्पात्मकम्। तथा मनसः तु परा बुद्धिः निश्चयात्मिका। तथा यः सर्वदृश्येभ्यः

बुद्ध्यन्तेभ्यः आभ्यन्तरः, यं देहिनम् इन्द्रियादिभिः आश्रयैः युक्तः कामः ज्ञानावरणद्वारेण मोहयति इत्युक्तम्। बुद्धेः परतस्तु सः सः बुद्धेः द्रष्टा परमात्मा।।

ततः किम् --

।।3.43।। --

एवं बुद्धेः परम् आत्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा आत्मानं स्वेनैव आत्मना

संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

तृतीयोऽध्यायः।।

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येषो ज्ञानमावृत्य देहिनम् ॥३.४०॥**

indriyāṇi mano buddhirasyādhiṣṭhānamucyate |
etairvimohayatyeṣo jñānamāvṛtya dehinam ||3.40||

**इन्द्रियाणि** 1/3 **मनः** 1/1 **बुद्धिः** 1/1 **अस्य** 6/1 **अधिष्ठानम्** 1/1 **उच्यते** III/1 ।
**एतैः** 3/3 **विमोहयति** III/1 **एषः** 1/1 **ज्ञानम्** 2/1 **आवृत्य** 0 **देहिनम्** 2/1 ॥३.४०॥

- इन्द्रियाणि [indriyāṇi] = senses = इन्द्रिय (n.) + 1/3
- मनः [manaḥ] = mind = मनस् (n.) + 1/1
- बुद्धिः [buddhiḥ] = intellect = बुद्धि (f.) + 1/1
- अस्य [asya] = of this (kāma) = इदम् (pron. m.) + 6/1
- अधिष्ठानम् [adhiṣṭhānam] = location = अधिष्ठान (n.) + 1/1
- उच्यते [ucyate] = is said = वच् (2P) to say + लट्/कर्मणि/III/1
- एतैः [etaiḥ] = by these = एतद् (pron. m.) + कर्तरि 3/3
- विमोहयति [vimohayati] = causes to delude = वि + मुह् + णिच् to cause to delude + लट्/कर्तरि/III/1
- एषः [etaiḥ] = this (kāma) = एतद् (pron. m.) + कर्तरि 1/1
- ज्ञानम् [jñānam] = knowledge = ज्ञान (n.) + कर्मणि to आवृत्य 2/1
- आवृत्य [āvṛtaḥ] = covering = अव्ययम्
    - आङ् + वृ (5U) to cover + ल्यप्
- देहिनम् [dehinam] = the person = देहिन् (m.) + कर्मणि to विमोहयति 2/1

Its location is said to be the senses, mind, and intellect. With these, it (kāma) deludes the person by covering his or her wisdom.

Sentence 1:

अस्य $^{6/1}$ अधिष्ठानम् $^{1/1}$ इन्द्रियाणि $^{1/3}$ मनः $^{1/1}$ बुद्धिः $^{1/1}$ उच्यते $^{III/1}$ ।
Its (अस्य $^{6/1}$) location (अधिष्ठानम् $^{1/1}$) is said to be (उच्यते $^{III/1}$) the senses (इन्द्रियाणि $^{1/3}$), mind (मनः $^{1/1}$), and intellect (बुद्धिः $^{1/1}$).

Sentence 2:

एषः $^{1/1}$ एतैः $^{3/3}$ ज्ञानम् $^{2/1}$ आवृत्य $^{0}$ देहिनम् $^{2/1}$ विमोहयति $^{III/1}$ ॥३.४०॥
With these (एतैः $^{3/3}$), it (kāma) (एषः $^{1/1}$) deludes (विमोहयति $^{III/1}$) the person (देहिनम् $^{2/1}$) by covering (आवृत्य $^{0}$) his or her wisdom (ज्ञानम् $^{2/1}$).

किमधिष्ठानः पुनः कामः ज्ञानस्य आवरणत्वेन वैरी सर्वस्य लोकस्य? इत्यपेक्षायामाह, ज्ञाते

हि शत्रोरधिष्ठाने सुखेन निबर्हणं कर्तुं शक्यत इति -

।।3.40।। --

इन्द्रियाणि मनः बुद्धिश्च अस्य कामस्य अधिष्ठानम् आश्रयः उच्यते। एतैः इन्द्रियादिभिः आश्रयैः

विमोहयति विविधं मोहयति एष कामः ज्ञानम् आवृत्य आच्छाद्य देहिनं शरीरिणम्।।

यतः एवम् --

।।3.41।। --

तस्मात् त्वम् इन्द्रियाणि आदौ पूर्वमेव नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं

प्रजहिहि परित्यज एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रतः आचार्यतश्च आत्मादीनाम् अवबोधः, विज्ञानं विशेषतः तदनुभवः, तयोः ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोः नाशनं नाशकरं

प्रजहिहि आत्मनः परित्यजेत्यर्थः।।

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहि इत्युक्तम्; तत्र किमाश्रयः कामं जह्यात् इत्युच्यते --

।।3.42।। --

इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य

सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः। तथा इन्द्रियेभ्यः परं मनः

संकल्पविकल्पात्मकम्। तथा मनसः तु परा बुद्धिः निश्चयात्मिका। तथा यः सर्वदृश्येभ्यः

बुद्ध्यन्तेभ्यः आभ्यन्तरः, यं देहिनम् इन्द्रियादिभिः आश्रयैः युक्तः कामः ज्ञानावरणद्वारेण मोहयति इत्युक्तम्। बुद्धेः परतस्तु सः सः बुद्धेः द्रष्टा परमात्मा।।

ततः किम् --

।।3.43।। --

एवं बुद्धेः परम् आत्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा आत्मानं स्वेनैव आत्मना

संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

तृतीयोऽध्यायः।।

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥३.४१॥**

tasmāttvamindriyāṇyādau niyamya bharatarṣabha |
pāpmānaṃ prajahi hyenaṃ jñānavijñānanāśanam ||3.41||

**तस्मात्** $^{5/1}$ **त्वम्** $^{1/1}$ **इन्द्रियाणि** $^{2/3}$ **आदौ** $^{7/1}$ **नियम्य** $^{0}$ **भरतर्षभ** $^{1/1}$ **।**
**पाप्मानम्** $^{2/1}$ **प्रजहि** $^{II/1}$ **हि** $^{0}$ **एनम्** $^{2/1}$ **ज्ञानविज्ञाननाशनम्** $^{2/1}$ **॥३.४१॥**

- तस्मात् [tasmāt] = therefore = तद् (pron. n.) + हेतौ 5/1
- त्वम् [tvam] = you = युष्मद् (pron. m.) + 1/1
- इन्द्रियाणि [indriyāṇi] = senses = इन्द्रिय (n.) + 2/3
- आदौ [ādau] = at the outset = आदि (m.) + 7/1

- नियम्य [niyamya] = controlling = अव्ययम्
    - नि + यम् (1P) to check + ल्यप्
- भरतर्षभ [bharatarṣabha] = Arjuna = भरतर्षभ (m.) + सम्बोधने 1/1
- पाप्मानम् [pāpmānam] = sinner = पाप्मन् (m.) + कर्मणि to प्रजहिहि 2/1
- प्रजहिहि [prajahihi] = give up = प्र + हा to give up + लोट्/कर्तरि/II/1
- प्रजहि [prajahi] = destroy = प्र + हन् to destroy + लोट्/कर्तरि/II/1
- हि [hi] = indeed= अव्ययम्
- एनम् [enam] = this = एतद् (pron. m.) + कर्मणि 2/1
- ज्ञानविज्ञाननाशनम् [jñānavijñānanāśanam] = the destroyer of knowedge and wisdom = ज्ञानविज्ञाननाशन (m.) + कर्मणि to प्रजहिहि 2/1
    - ज्ञानं च विज्ञानं च ज्ञानविज्ञाने (ID) ।
    - नाशं करोति इति नाशकरः (UT)।
    - ज्ञानविज्ञानयोः नाशकरः ज्ञानविज्ञाननाशनः (6T) ।

Therefore, Oh! Arjuna, controlling the senses at the outset, destroy indeed this sinner, the destroyer of knowedge and wisdom.

Sentence 1:

तस्मात् $^{5/1}$ त्वम् $^{1/1}$ इन्द्रियाणि $^{2/3}$ आदौ $^{7/1}$ नियम्य $^{0}$ भरतर्षभ $^{1/1}$ ।
पाप्मानम् $^{2/1}$ प्रजहि $^{II/1}$ हि $^{0}$ एनम् $^{2/1}$ ज्ञानविज्ञाननाशनम् $^{2/1}$ ॥३.४१॥
Therefore (तस्मात् $^{5/1}$), Oh! Arjuna (भरतर्षभ $^{1/1}$), controlling (नियम्य $^{0}$) the senses (इन्द्रियाणि $^{2/3}$) at the outset (आदौ $^{7/1}$), destroy (त्वम् $^{1/1}$ प्रजहि $^{II/1}$) indeed (हि $^{0}$) this (एनम् $^{2/1}$) sinner (पाप्मानम् $^{2/1}$), the destroyer of knowedge and wisdom (ज्ञानविज्ञाननाशनम् $^{2/1}$).

यतः एवम् --

।।3.41।। --

तस्मात् त्वम् इन्द्रियाणि आदौ पूर्वमेव नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं

प्रजहिहि परित्यज एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रतः आचार्यतश्च आत्मादीनाम् अवबोधः, विज्ञानं विशेषतः तदनुभवः, तयोः ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोः नाशनं नाशकरं

प्रजहिहि आत्मनः परित्यजेत्यर्थः।।

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहि इत्युक्तम्; तत्र किमाश्रयः कामं जह्यात् इत्युच्यते --

।।3.42।। --

इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य

सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः। तथा इन्द्रियेभ्यः परं मनः

संकल्पविकल्पात्मकम्। तथा मनसः तु परा बुद्धिः निश्चयात्मिका। तथा यः सर्वदृश्येभ्यः

बुद्ध्यन्तेभ्यः आभ्यन्तरः, यं देहिनम् इन्द्रियादिभिः आश्रयैः युक्तः कामः ज्ञानावरणद्वारेण मोहयति इत्युक्तम्। बुद्धेः परतस्तु सः सः बुद्धेः द्रष्टा परमात्मा।।

ततः किम् --

।।3.43।। --

एवं बुद्धेः परम् आत्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा आत्मानं स्वेनैव आत्मना

संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

तृतीयोऽध्यायः।।

## इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
## मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥३.४२॥

indriyāṇi parāṇyāhurindriyebhyaḥ paraṃ manaḥ |
manasastu parā buddhiryo buddheḥ paratastu saḥ ||3.42||

**इन्द्रियाणि $^{2/3}$ पराणि $^{2/3}$ आहुः $^{III/1}$ इन्द्रियेभ्यः $^{5/3}$ परम् $^{1/1}$ मनः $^{1/1}$ ।**
**मनसः $^{5/1}$ तु $^{0}$ परा $^{1/1}$ बुद्धिः $^{1/1}$ यः $^{1/1}$ बुद्धेः $^{5/1}$ परतः $^{0}$ तु $^{0}$ सः $^{1/1}$ ॥३.४२॥**

- इन्द्रियाणि [indriyāṇi] = senses = इन्द्रिय (n.) + कर्मणि to आहुः 2/3
- पराणि [parāṇi] = superior = पर (pron. n.) + complement to इन्द्रियाणि 2/3
- आहुः [āhuḥ] = say = ब्रूञ् (2U) to say + लट्/कर्तरि/III/3
- इन्द्रियेभ्यः [indriyebhyaḥ] = than senses = इन्द्रिय (n.) + विभक्ते 5/3
- परम् [param] = superior = पर (pron. n.) + 1/1
- मनः [manaḥ] = the mind = मनस् (n.) + 1/1
- मनसः [manasaḥ] = than the mind = मनस् (n.) + विभक्ते 5/1
- परा [parā] = superior = पर (pron. f.) + 1/1
- बुद्धिः [buddhiḥ] = the intellect = बुद्धि (f.) + 1/1
- बुद्धेः [buddheḥ] = than the intellect = बुद्धि (f.) + विभक्ते 5/1
- परतः [parataḥ] = superior = अव्ययम्
    - पर + तसिल् = परतस्
- तु [tu] = whereas = अव्ययम्
- सः [saḥ] = that (ātmā) = तद् (pron. m.) + 1/1

They say that the sense organs are superior to the body; the mind is superiour to the sense organs; the intellect is superior to the mind. Whereas the one who is superior to the intellect is he (the ātmā).

Sentence 1:

इन्द्रियाणि $^{2/3}$ पराणि $^{2/3}$ आहुः $^{III/1}$ इन्द्रियेभ्यः $^{5/3}$ परम् $^{1/1}$ मनः $^{1/1}$ ।
मनसः $^{5/1}$ तु $^{0}$ परा $^{1/1}$ बुद्धिः $^{1/1}$
They say (आहुः $^{III/1}$) that the sense organs (इन्द्रियाणि $^{2/3}$) are superior (पराणि $^{2/3}$) to the body; the mind (मनः $^{1/1}$) is superiour (परम् $^{1/1}$) to the sense organs (इन्द्रियेभ्यः $^{5/3}$); the intellect (बुद्धिः $^{1/1}$ तु $^{0}$) is superior (परा $^{1/1}$) to the mind (मनसः $^{5/1}$).

Sentence 2:

यः $^{1/1}$ बुद्धेः $^{5/1}$ परतः $^{0}$ तु $^{0}$ सः $^{1/1}$ ॥३.४२॥
Whereas (तु $^{0}$) the one who (यः $^{1/1}$) is superior (परतः $^{0}$) to the intellect (बुद्धेः $^{5/1}$) is he (the ātmā) (सः $^{1/1}$).

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहि इत्युक्तम्; तत्र किमाश्रयः कामं जह्यात् इत्युच्यते --

।।3.42।। --

इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य

सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः। तथा इन्द्रियेभ्यः परं मनः

संकल्पविकल्पात्मकम्। तथा मनसः तु परा बुद्धिः निश्चयात्मिका। तथा यः सर्वदृश्येभ्यः

बुद्ध्यन्तेभ्यः आभ्यन्तरः, यं देहिनम् इन्द्रियादिभिः आश्रयैः युक्तः कामः ज्ञानावरणद्वारेण मोहयति इत्युक्तम्। बुद्धेः परतस्तु सः सः बुद्धेः द्रष्टा परमात्मा।।

ततः किम् --

।।3.43।। --

एवं बुद्धेः परम् आत्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा आत्मानं स्वेनैव आत्मना

संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

तृतीयोऽध्यायः।।

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥३.४३॥**

evaṃ buddheḥ paraṃ buddhvā saṃstabhyātmānamātmanā |
jahi śatruṃ mahābāho kāmarūpaṃ durāsadam ||3.43||

एवम् $^{0}$ बुद्धेः $^{5/1}$ परम् $^{2/1}$ बुद्ध्वा $^{0}$ संस्तभ्य $^{0}$ आत्मानम् $^{2/1}$ आत्मना $^{3/1}$ ।
जहि $^{II/1}$ शत्रुम् $^{2/1}$ महाबाहो $^{8/1}$ कामरूपम् $^{2/1}$ दुरासदम् $^{2/1}$ ॥३.४३॥

- एवम् [evam] = in this manner = अव्ययम्
- बुद्धेः [buddheḥ] = than the intellect = बुद्धि (f.) + विभक्ते 5/1
- परम् [param] = superior = पर (pron. n.) + कर्मणि to बुद्ध्वा 2/1
- बुद्ध्वा [buddhvā] = having known = अव्ययम्
    - बुध् + क्त्वा
- संस्तभ्य [saṃstabhya] = having made steady = अव्ययम्
    - सम् + स्तम्भु (9P) + ल्यप्
      म-लोप by 6.4.24 अनिदितां हल उपधायाः क्ङिति।
- आत्मानम् [ātmānam] = the mind = आत्मन् (m.) + कर्मणि to संस्तभ्य 2/1
- आत्मना [ātmanā] = with the buddhi = आत्मन् (m.) + करणे to संस्तभ्य 2/1
- जहि [jahi] = destroy = हन् (2P) to destroy + लोट्/कर्तरि/II/1
- शत्रुम् [śatrum] = the enemy = शत्रु (m.) + कर्मणि to जहि 2/1
- महाबाहो [mahābāho] = one who has great arms = महाबाहु (m.) + सम्बोधने 1/1
- कामरूपम् [kāmarūpam] = that which is in the form of desire = कामरूप (m.) + adjective to शत्रुम् 2/1
    - कामः रूपं यस्य सः कामरूपः (116B), तम् ।
- दुरासदम् [durāsadam] = that which is difficult to understand = दुरासद (m.) + adjective to शत्रुम् 2/1
    - दुःखेन आसदः (understanding) आसदनम् यस्य सः (PB, 016B), तम् ।

Oh! Arjuna, knowing that which is superior to the intellect in this way, having made the mind steady with the buddhi, destroy the enemy, that is in the form of desire that which is so difficlut to understand.

Sentence 1:

बुद्धेः $^{5/1}$ परम् $^{2/1}$ एवम् $^{0}$ बुद्ध्वा $^{0}$ आत्मानम् $^{2/1}$ आत्मना $^{3/1}$ संस्तभ्य $^{0}$ ।
कामरूपम् $^{2/1}$ दुरासदम् $^{2/1}$ शत्रुम् $^{2/1}$ जहि $^{II/1}$ महाबाहो $^{8/1}$ ॥३.४३॥
Oh! Arjuna (), knowing (बुद्ध्वा $^{0}$) that which is superior (परम् $^{2/1}$) to the intellect (बुद्धेः $^{5/1}$) in this way (एवम् $^{0}$), having made the mind (आत्मानम् $^{2/1}$) steady (संस्तभ्य $^{0}$) with the buddhi (आत्मना $^{3/1}$), destroy (जहि $^{II/}$) the enemy (शत्रुम् $^{2/1}$), that is in the form of desire (कामरूपम् $^{2/1}$) that which is so difficlut to understand (दुरासदम् $^{2/1}$).

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहि इत्युक्तम्; तत्र किमाश्रयः कामं जह्यात् इत्युच्यते --

।।3.42।। --

इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं च अपेक्ष्य

सौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टानि आहुः पण्डिताः। तथा इन्द्रियेभ्यः परं मनः

संकल्पविकल्पात्मकम्। तथा मनसः तु परा बुद्धिः निश्चयात्मिका। तथा यः सर्वदृश्येभ्यः

बुद्ध्यन्तेभ्यः आभ्यन्तरः, यं देहिनम् इन्द्रियादिभिः आश्रयैः युक्तः कामः ज्ञानावरणद्वारेण मोहयति इत्युक्तम्। बुद्धेः परतस्तु सः सः बुद्धेः द्रष्टा परमात्मा।।

ततः किम् --

।।3.43।। --

एवं बुद्धेः परम् आत्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा आत्मानं स्वेनैव आत्मना

संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः। जहि एनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेन आसदः आसादनं प्राप्तिः यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

तृतीयोऽध्यायः।।

**श्रीभगवान् उवाच ।**

**इमं विवस्वते योगं प्रोक्तवान् अहमव्ययम् ।**
**विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥४.१॥**

śrībhagavān uvāca |

imaṃ vivasvate yogaṃ proktavān ahamavyayam |

vivasvān manave prāha manurikṣvākave'bravīt ||4.1||

**श्रीभगवान्** $^{1/1}$ **उवाच** $^{III/1}$ **।**

**इमम्** $^{2/1}$ **विवस्वते** $^{4/1}$ **योगम्** $^{2/1}$ **प्रोक्तवान्** $^{1/1}$ **अहम्** $^{1/1}$ **अव्ययम्** $^{2/1}$ **।**
**विवस्वान्** $^{1/1}$ **मनवे** $^{4/1}$ **प्राह** $^{III/1}$ **मनुः** $^{1/1}$ **इक्ष्वाकवे** $^{4/1}$ **अब्रवीत्** $^{III/1}$ **॥४.१॥**

- श्रीभगवान् [śrībhagavān] = Bhagavān = भगवत् (m.) + कर्तरि to उवाच 1/1
  - श्रिया सहित भगवान् श्रीभगवान् ।
  - भगः अस्य अस्ति इति भगवान् ।
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1

- इमम् [imam] = this = इदम् (pron. m.) + adjective to योगम् 2/1
- विवस्वते [vivasvate] = to *Vivasvān* = विवस्वत् (m.) + सम्प्रदाने to प्रोक्तवान् 4/1
- योगम् [yogam] = *yoga* = योग (m.) + कर्मणि to प्रोक्तवान् 2/1
- प्रोक्तवान् [proktavān] = one who has taught = प्रोक्तत् (m.) + subjective complement to अहम् 1/1
  - प्र + वच् + क्तवतुँ (भूते कर्तरि)
- अहम् [aham] = I = अस्मद् (pron. m.) + 1/1
- अव्ययम् [avyayam] = imperishable = अव्यय (m.) + adjective to योगम् 2/1
- विवस्वान् [vivasvān] = *Vivasvān* = विवस्वत् (m.) + 1/1
- मनवे [manave] = to *Manu* = मनु (m.) + सम्प्रदाने to प्राह 4/1
- प्राह [prāha] = taught = प्र + ब्रू + लिट्/कर्तरि/III/1

- मनुः [manuḥ] = *Manu* = मनु (m.) + 1/1
- इक्ष्वाकवे [ikṣvākave] = to *Manu* = इक्ष्वाकु (m.) + सम्प्रदाने to अब्रवीत् 4/1
- अब्रवीत् [abravīt] = taught = ब्रू + लङ्/कर्तरि/III/1

Śrī Bhagavān said:

I taught this imperishable *yoga* to *Vivasvān*, *Vivasvān* taught it to *Manu*, and *Manu* taught it to *ikṣvāku*.

Sentence 1:

श्रीभगवान्$^{1/1}$ उवाच$^{III/1}$ ।

Śrī Bhagavān (श्रीभगवान्$^{1/1}$) said (उवाच$^{III/1}$).

Sentence 2:

इमम्$^{2/1}$ विवस्वते$^{4/1}$ योगम्$^{2/1}$ प्रोक्तवान्$^{1/1}$ अहम्$^{1/1}$ अव्ययम्$^{2/1}$ ।
विवस्वान्$^{1/1}$ मनवे$^{4/1}$ प्राह$^{III/1}$ मनुः$^{1/1}$ इक्ष्वाकवे$^{4/1}$ अब्रवीत्$^{III/1}$ ॥४.१॥
I (अहम्$^{1/1}$) taught (प्रोक्तवान्$^{1/1}$) this (इमम्$^{2/1}$) imperishable (अव्ययम्$^{2/1}$) *yoga* (योगम्$^{2/1}$) to *Vivasvān* (विवस्वते$^{4/1}$), *Vivasvān* (विवस्वान्$^{1/1}$) taught (प्राह$^{III/1}$) it to *Manu* (मनवे$^{4/1}$), and *Manu* (मनुः$^{1/1}$) taught (अब्रवीत्$^{III/1}$) it to *ikṣvāku* (इक्ष्वाकवे$^{4/1}$).

यः$^{1/1}$ अयम्$^{1/1}$ योगः$^{1/1}$ अध्याय-द्वयेन$^{3/1}$ उक्तः$^{1/1}$ ज्ञान-निष्ठा-लक्षणः$^{1/1}$, ससंन्यासः$^{1/1}$ कर्म-योग-उपायः$^{1/1}$, यस्मिन्$^{7/1}$ (योगे$^{7/1}$) वेद-अर्थः$^{1/1}$ परिसमाप्तः$^{1/1}$, प्रवृत्ति-लक्षणः$^{1/1}$ निवृत्ति-लक्षणः$^{1/1}$ च$^{0}$, गीतासु$^{7/3}$ च$^{0}$ सर्वासु$^{7/3}$ अयम्$^{1/1}$ एव$^{0}$ योगः$^{1/1}$ विवक्षितः$^{1/1}$ भगवता$^{3/1}$ ।

अतः$^{0}$ परिसमाप्तम्$^{2/1}$ वेदार्थम्$^{2/1}$ मन्वानः$^{1/1}$ तम्$^{2/1}$ (योगम्$^{2/1}$) वंश-कथनेन$^{3/1}$ स्तौति$^{III/1}$ श्रीभगवान्$^{1/1}$ —

इमम्$^{2/1}$ अध्याय-द्वयेन$^{3/1}$ उक्तम्$^{2/1}$ योगम्$^{2/1}$ विवस्वते$^{4/1}$ आदित्याय$^{4/1}$ सर्ग-आदौ$^{7/1}$ प्रोक्तवान्$^{1/1}$ अहम्$^{1/1}$ जगत्-परिपालयितॄणाम्$^{6/3}$ क्षत्रियाणम्$^{6/3}$ बलाधानाय$^{4/1}$ तेन$^{3/1}$ योग-बलेन$^{3/1}$ युक्ताः$^{1/3}$ समर्थाः$^{1/3}$ भवन्ति$^{III/3}$ ब्रह्म$^{2/1}$ परिरक्षितुम्$^{0}$ । ब्रह्मक्षत्रे$^{7/1}$ परिपालिते$^{7/1}$ जगत्$^{2/1}$ परिपालयितुम्$^{0}$ अलम्$^{0}$ ।

अव्ययम्$^{2/1}$ अव्यय-फलत्वात्$^{5/1}$। न$^{0}$ हि$^{0}$ अस्य$^{6/1}$ योगस्य$^{6/1}$ सम्यग्दर्शन-निष्ठा-लक्षणस्य$^{6/1}$ मोक्ष-आख्यम्$^{1/1}$ फलम्$^{1/1}$ व्येति$^{III/1}$।

सः$^{1/1}$ च$^{0}$ विवस्वान्$^{1/1}$ मनवे$^{4/1}$ प्राह$^{III/1}$ । मनुः$^{1/1}$ इक्ष्वाकवे$^{4/1}$ स्वपुत्राय$^{4/1}$ आदिराजाय$^{4/1}$ अब्रवीत्$^{III/1}$ ॥

## एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
## स कालेनेह महता योगो नष्टः परन्तप ॥४.२॥

evaṃ paramparāprāptamimaṃ rājarṣayo viduḥ |

sa kāleneha mahatā yogo naṣṭaḥ parantapa ||4.2||

एवम्$^{0}$ परम्पराप्राप्तम्$^{2/1}$ इमम्$^{2/1}$ राजर्षयः$^{1/3}$ विदुः$^{III/3}$ ।
सः$^{1/1}$ कालेन$^{3/1}$ इह$^{0}$ महता$^{3/1}$ योगः$^{1/1}$ नष्टः$^{1/1}$ परन्तप$^{8/1}$ ॥४.२॥

- एवम् [evam] = in this manner = अव्ययम्
- परम्पराप्राप्तम् [paramparāprāptam] = handed down = परम्पराप्राप्त (m.) + adjective to योगम् 2/1
    - परम्परया प्राप्तः परम्पराप्राप्तः (3T) ।
- इमम् [imam] = this = इदम् (pron. m.) + adjective to योगम् 2/1
- राजर्षयः [rājarṣayaḥ] = kings who are sages = राजर्षि (m.) + कर्तरि to विदुः 1/1
- विदुः [viduḥ] = knew = विद् (2P) to know + लिट्/कर्तरि/III/3
- सः [saḥ] = that = तद् (pron. m.) + 1/1
- कालेन [kālena] = by the time = काल (m.) + 3/1
- इह [iha] = in this world = अव्ययम्
- महता [mahatā] = long = महत् (m.) + adjective to कालेन 3/1

- योगः [yogaḥ] = *yoga* = योग (m.) + 1/1
- नष्टः [naṣṭaḥ] = declined = नष्ट (m.) + 1/1
- परन्तप [parantapa] = the one who inflicts enemies = परन्तप (m.) + 1/1
    - परान् तापयति परन्तपः () ।
    - पर + शस् + तप् + खच्   3.2.39 द्विषत्परयोस्तापेः। ~ खच्
    - पर + मुम् + तप् + अ   6.3.66 अरुर्द्विषदजन्तस्य मुम् । ~ खिति

Handed down from generation to generation in this way, the kings who were sages know it. (But) with the long lapse of time, O Arjuna, this yoga his declined in the world.

Sentence 1:

राजर्षयः $^{1/3}$ एवम् $^{0}$ परम्पराप्राप्तम् $^{2/1}$ इमम् $^{2/1}$ विदुः $^{III/3}$ ।
Handed down from generation to generation (परम्पराप्राप्तम् $^{2/1}$) in this way (एवम् $^{0}$), the kings who were sages (राजर्षयः $^{1/3}$) know (विदुः $^{III/3}$) it (इमम् $^{2/1}$).

Sentence 2:

इह $^{0}$ सः $^{1/1}$ योगः $^{1/1}$ महता $^{3/1}$ कालेन $^{3/1}$ नष्टः $^{1/1}$ परन्तप $^{8/1}$ ॥४.२॥
(But) with the long (महता $^{3/1}$) lapse of time (कालेन $^{3/1}$), O Arjuna (परन्तप $^{8/1}$), this (सः $^{1/1}$) yoga (योगः $^{1/1}$) his declined (नष्टः $^{1/1}$) in the world (इह $^{0}$).

एवम् $^{0}$ क्षत्रिय-परम्परा-प्राप्तम् $^{2/1}$ इमम् $^{2/1}$ राजर्षयः $^{1/3}$ राजानः $^{1/3}$ च $^{0}$ ते $^{1/3}$ ऋषयः $^{1/3}$ च $^{0}$ राजर्षयः $^{1/3}$ विदुः $^{III/3}$ इमम् $^{2/1}$ योगम् $^{2/1}$।

सः $^{1/1}$ योगः $^{1/1}$ कालेन $^{3/1}$ इह $^{0}$ महता $^{3/1}$ दीर्घेण $^{3/1}$ नष्टः $^{1/1}$ विच्छिन्न-संप्रदायः $^{1/1}$ संवृत्तः $^{1/1}$।

हे $^{0}$ परन्तप $^{8/1}$, आत्मनः $^{6/1}$ विपक्ष-भूताः $^{1/3}$ पराः $^{1/3}$ इति $^{0}$ उच्यन्ते $^{III/3}$, तान् $^{2/3}$ शौर्य-तेजोगभस्तिभिः $^{3/3}$ भानुः $^{1/1}$ इव $^{0}$ तापयति $^{III/1}$ इति $^{0}$ परन्तपः $^{1/1}$ शत्रु-तापनः $^{1/1}$ इत्यर्थः $^{1/1}$॥

दुर्बलानजितेन्द्रियान् प्राप्य नष्टं योगमिममुपलभ्य लोकं च अपुरुषार्थसंबन्धिनम् --

।।4.3।। --

स एव अयं मया ते तुभ्यम् अद्य इदानीं योगः प्रोक्तः पुरातनः भक्तः असि मे सखा च असि

इति। रहस्यं हि यस्मात् तत् उत्तमं योगः ज्ञानम् इत्यर्थः।।

भगवता विप्रतिषिद्धमुक्तमिति मा भूत् कस्यचित् बुद्धिः इति परिहारार्थं चोद्यमिव कुर्वन् अर्जुन उवाच --

।।4.4।। --

अपरम् अर्वाक् वसुदेवगृहे भवतो जन्म। परं पूर्वं सर्गादौ जन्म उत्पत्तिः विवस्वतः आदित्यस्य।

तत् कथम् एतत् विजानीयाम् अविरुद्धार्थतया, यः त्वमेव आदौ प्रोक्तवान् इमं योगं स एव इदानीं

मह्यं प्रोक्तवानसि इति।।

या वासुदेवे अनीश्वरासर्वज्ञाशङ्का मूर्खाणाम्, तां परिहरन् श्रीभगवानुवाच, यदर्थो ह्यर्जुनस्य प्रश्नः --

श्रीभगवानुवाच --

।।4.5।। --

बहूनि मे मम व्यतीतानि अतिक्रान्तानि जन्मानि तव च हे अर्जुन। तानि अहं वेद जाने सर्वाणि

न त्वं वेत्थ न जानीषे, धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात्। अहं पुनः

नित्यशुद्धबुद्धमुक्तस्वभावत्वात् अनावरणज्ञानशक्तिरिति वेद अहं हे परंतप।।

कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावेऽपि जन्म इति, उच्यते --

।।4.6।। --

अजोऽपि जन्मरहितोऽपि सन्, तथा अव्ययात्मा अक्षीणज्ञानशक्तिस्वभावोऽपि सन्, तथा भूतानां

ब्रह्मादिस्तम्बपर्यन्तानाम् ईश्वरः ईशनशीलोऽपि सन्, प्रकृतिं स्वां मम वैष्णवीं मायां त्रिगुणात्मिकाम्, यस्या वशे सर्वं जगत् वर्तते, यया मोहितं सत् स्वमात्मानं वासुदेवं न जानाति, तां प्रकृतिं स्वाम् अधिष्ठाय वशीकृत्य संभवामि देहवानिव भवामि जात इव आत्ममायया आत्मनः मायया, न परमार्थतो लोकवत्।।

तच्च जन्म कदा किमर्थं च इत्युच्यते --

।।4.7।। --

यदा यदा हि धर्मस्य ग्लानिः हानिः वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य

भवति भारत, अभ्युत्थानम् उद्भवः अधर्मस्य, तदा तदा आत्मानं सृजामि अहं मायया।।

किमर्थम्? --

।।4.8।। --

परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानाम्, विनाशाय च दुष्कृतां पापकारिणाम्, किञ्च

धर्मसंस्थापनार्थाय धर्मस्य सम्यक् स्थापनं तदर्थं संभवामि युगे युगे प्रतियुगम्।।

तत् --

।।4.9।। --

जन्म मायारूपं कर्म च साधूनां परित्राणादि मे मम दिव्यम् अप्राकृतम् ऐश्वरम् एवं यथोक्तं यः

वेत्ति तत्त्वतः तत्त्वेन यथावत् त्यक्त्वा देहम् इमं पुनर्जन्म पुनरुत्पत्तिं न एति न प्राप्नोति। माम्

एति आगच्छति सः मुच्यते हे अर्जुन।।

नैष मोक्षमार्ग इदानीं प्रवृत्तः; किं तर्हि? पूर्वमपि --

।।4.10।। --

वीतरागभयक्रोधाः रागश्च भयं च क्रोधश्च वीताः विगताः येभ्यः ते वीतरागभयक्रोधाः मन्मयाः

ब्रह्मविदः ईश्वराभेददर्शिनः मामेव च परमेश्वरम् उपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः। बहवः

अनेके ज्ञानतपसा ज्ञानमेव च परमात्मविषयं तपः तेन ज्ञानतपसा पूताः परां शुद्धिं गताः सन्तः

मद्भावम् ईश्वरभावं मोक्षम् आगताः समनुप्राप्ताः। इतरतपोनिरपेक्षज्ञाननिष्ठा इत्यस्य लिङ्गम्

'ज्ञानतपसा' इति विशेषणम्।।

तव तर्हि रागद्वेषौ स्तः, येन केभ्यश्चिदेव आत्मभावं प्रयच्छसि न सर्वेभ्यः इत्युच्यते --

।।4.11।। --

ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तान् तथैव तत्फलदानेन भजामि अनुगृह्णामि अहम् इत्येतत्। तेषां मोक्षं प्रति अनर्थित्वात्। न हि एकस्य मुमुक्षुत्वं फलार्थित्वं च युगपत् संभवति। अतः ये फलार्थिनः तान् फलप्रदानेन, ये यथोक्तकारिणस्तु अफलार्थिनः मुमुक्षवश्च तान् ज्ञानप्रदानेन, ये ज्ञानिनः संन्यासिनः मुमुक्षवश्च तान् मोक्षप्रदानेन, तथा आर्तान् आर्तिहरणेन इत्येवं यथा प्रपद्यन्ते ये तान् तथैव भजामि इत्यर्थः। न पुनः रागद्वेषनिमित्तं मोहनिमित्तं वा कञ्चित् भजामि। सर्वथापि सर्वावस्थस्य मम ईश्वरस्य वर्त्म मार्गम् अनुवर्तन्ते मनुष्याः -- यत्फलार्थितया यस्मिन् कर्मणि अधिकृताः ये प्रयतन्ते ते मनुष्या अत्र उच्यन्ते -- हे पार्थ सर्वशः सर्वप्रकारैः।।

यदि तव ईश्वरस्य रागादिदोषाभावात् सर्वप्राणिषु अनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे

च त्वयि सति 'वासुदेवः सर्वम्' इति ज्ञानेनैव मुमुक्षवः सन्तः कस्मात् त्वामेव सर्वे न प्रतिपद्यन्ते इति? शृणु तत्र कारणम् --

।।4.12।। --

काङ्क्षन्तः अभीप्सन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थयन्तः यजन्ते इह अस्मिन् लोके देवताः

इन्द्राग्न्याद्याः;' अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स

देवानाम् (बृ0 उ0 1.4.10)' इति श्रुतेः। तेषां हि भिन्नदेवतायाजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं

हि यस्मात् मानुषे लोके, मनुष्यलोके हि शास्त्राधिकारः। 'क्षिप्रं हि मानुषे लोके' इति

विशेषणात् अन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान्। मानुषे लोके वर्णाश्रमादिकर्माणि इति

विशेषः, तेषां च वर्णाश्रमाद्यधिकारिकर्मणां फलसिद्धिः क्षिप्रं भवति। कर्मजा कर्मणो जाता।।

मानुषे एव लोके वर्णाश्रमादिकर्माधिकारः, न अन्येषु लोकेषु इति नियमः किंनिमित्त इति? अथवा वर्णाश्रमादिप्रविभागोपेताः मनुष्याः मम वर्त्म अनुवर्तन्ते सर्वशः इत्युक्तम्। कस्मात्पुनः कारणात् नियमेन तवैव वर्त्म अनुवर्तन्ते न अन्यस्य इति? उच्यते --

।।4.13।। --

चत्वार एव वर्णाः चातुर्वर्ण्यं मया ईश्वरेण सृष्टम् उत्पादितम्, 'ब्राह्मणोऽस्य मुखमासीत्'

इत्यादिश्रुतेः। गुणकर्मविभागशः गुणविभागशः कर्मविभागशश्च। गुणाः सत्त्वरजस्तमांसि। तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य 'शमो दमस्तपः' इत्यादीनि कर्माणि, सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य

शौर्यतेजःप्रभृतीनि कर्माणि, तमउपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि,

रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्म इत्येवं गुणकर्मविभागशः चातुर्वर्ण्यं मया सृष्टम् इत्यर्थः। तच्च इदं चातुर्वर्ण्यं न अन्येषु लोकेषु, अतः मानुषे लोके इति विशेषणम्। हन्त तर्हि चातुर्वर्ण्यस्य सर्गादेः कर्मणः कर्तृत्वात् तत्फलेन युज्यसे, अतः न त्वं नित्यमुक्तः नित्येश्वरश्च इति? उच्यते -- यद्यपि मायासंव्यवहारेण तस्य कर्मणः कर्तारमपि सन्तं मां परमार्थतः विद्धि अकर्तारम्। अत एव अव्ययम् असंसारिणं च मां विद्धि।।

येषां तु कर्मणां कर्तारं मां मन्यसे परमार्थतः तेषाम् अकर्ता एवाहम्, यतः --

।।4.14।। --

न मां तानि कर्माणि लिम्पन्ति देहाद्यारम्भकत्वेन, अहंकाराभावात्। न च तेषां कर्मणां फलेषु मे

मम स्पृहा तृष्णा। येषां तु संसारिणाम्' अहं कर्ता' इत्यभिमानः कर्मसु, स्पृहा तत्फलेषु च, तान्

कर्माणि लिम्पन्ति इति युक्तम्, तदभावात् न मां कर्माणि लिम्पन्ति। इति एवं यः अन्योऽपि माम्

आत्मत्वेन अभिजानाति' नाहं कर्ता न मे कर्मफले स्पृहा' इति सः कर्मभिः न बध्यते, तस्यापि

न देहाद्यारम्भकाणि कर्माणि भवन्ति इत्यर्थः।।

'नाहं कर्ता न मे कर्मफले स्पृहा' इति --

।।4.15।। --

एवं ज्ञात्वा कृतं कर्म पूर्वैः अपि अतिक्रान्तैः मुमुक्षुभिः। कुरु तेन कर्मैव त्वम्, न तूष्णीमासनं

नापि संन्यासः कर्तव्यः, तस्मात् त्वं पूर्वैरपि अनुष्ठितत्वात्, यदि अनात्मज्ञः त्वं तदा

आत्मशुद्ध्यर्थम्, तत्त्वविच्चेत् लोकसंग्रहार्थं पूर्वैः जनकादिभिः पूर्वतरं कृतं न अधुनातनं कृतं

निर्वर्तितम्।।

तत्र कर्म चेत् कर्तव्यं त्वद्वचनादेव करोम्यहम्, किं विशेषितेन 'पूर्वैः पूर्वतरं कृतम्' (गीता 4.15) इत्युच्यते; यस्मात् महत् वैषम्यं कर्मणि। कथम्? -

।।4.16।। --

किं कर्म किं च अकर्म इति कवयः मेधाविनः अपि अत्र अस्मिन् कर्मादिविषये मोहिताः मोहं गताः। तत् अतः ते तुभ्यम् अहं कर्म अकर्म च प्रवक्ष्यामि, यत् ज्ञात्वा विदित्वा कर्मादि मोक्ष्यसे अशुभात् संसारात्।।

न चैतत्त्वया मन्तव्यम् -- कर्म नाम देहादिचेष्टा लोकप्रसिद्धम्, अकर्म नाम तदक्रिया तूष्णीमासनम्; किं तत्र बोद्धव्यम् ? इति। कस्मात्, उच्यते --

।।4.17।। --

कर्मणः शास्त्रविहितस्य हि यस्मात् अपि अस्ति बोद्धव्यम्, बोद्धव्यं च अस्त्येव विकर्मणः

प्रतिषिद्धस्य, तथा अकर्मणश्च तूष्णींभावस्य बोद्धव्यम् अस्ति इति त्रिष्वप्यध्याहारः कर्तव्यः। यस्मात् गहना विषमा दुर्ज्ञेया -- कर्मणः इति उपलक्षणार्थं कर्मादीनाम् – कर्माकर्मविकर्मणां गतिः याथात्म्यं तत्त्वम् इत्यर्थः।।

किं पुनस्तत्त्वं कर्मादेः यत् बोद्धव्यं वक्ष्यामि इति प्रतिज्ञातम्? उच्यते --

।।4.18।। --

कर्मणि, क्रियते इति कर्म व्यापारमात्रम्, तस्मिन् कर्मणि अकर्म कर्माभावं यः पश्येत्, अकर्मणि

च कर्माभावे कर्तृतन्त्रत्वात् प्रवृत्तिनिवृत्त्योः -- वस्तु अप्राप्यैव हि सर्व एव क्रियाकारकादिव्यवहारः

अविद्याभूमौ एव -- कर्म यः पश्येत् पश्यति, सः बुद्धिमान् मनुष्येषु, सः युक्तः योगी च,

कृत्स्नकर्मकृत् समस्तकर्मकृच्च सः, इति स्तूयते कर्माकर्मणोरितरेतरदर्शी।।

ननु किमिदं विरुद्धमुच्यते 'कर्मणि अकर्म यः पश्येत् ' इति 'अकर्मणि च कर्म' इति; न हि कर्म अकर्म स्यात्, अकर्म वा कर्म। तत्र विरुद्धं कथं पश्येत् द्रष्टा? -- न, अकर्म व परमार्थतः सत् कर्मवत् अवभासते मूढदृष्टेः लोकस्य, तथा कर्मैव अकर्मवत्। तत्र यथाभूतदर्शनार्थमाह भगवान् -- कर्मण्यकर्म यः पश्येत् (गीता 4.18) इत्यादि। अतो न विरुद्धम्। बुद्धिमत्त्वाद्युपपत्तेश्च। 'बोद्धव्यम्' इति च यथाभूतदर्शनमुच्यते। न च विपरीतज्ञानात् अशुभात् मोक्षणं स्यात्; 'यत् ज्ञात्वा मोक्ष्यसेऽशुभात्' (गीता 4.16) इति च उक्तम्। तस्मात् कर्माकर्मणी विपर्ययेण गृहीते प्राणिभिः तद्विपर्ययग्रहणनिवृत्त्यर्थं भगवतो वचनम् 'कर्मण्यकर्म यः' इत्यादि। न च अत्र कर्माधिकरणमकर्म अस्ति, कुण्डे बदराणीव। नापि अकर्माधिकरणं कर्मास्ति, कर्माभावत्वादकर्मणः। अतः विपरीतगृहीते एव कर्माकर्मणी लौकिकैः, यथा मृगतृष्णिकायामुदकं शुक्तिकायां वा रजतम्। ननु कर्म कर्मैव सर्वेषां न क्वचित् व्यभिचरति --

तत् न, नौस्थस्य नावि गच्छन्त्यां तटस्थेषु अगतिषु नगेषु प्रतिकूलगतिदर्शनात्, दूरेषु चक्षुषा

असंनिकृष्टेषु गच्छत्सु गत्यभावदर्शनात् , एवम् इहापि अकर्मणि कर्मदर्शनं कर्मणि च अकर्मदर्शनं विपरीतदर्शनं येन तन्निराकरणार्थमुच्यते

'कर्मण्यकर्म यः पश्येत्' इत्यादि।।

तदेतत् उक्तप्रतिवचनमपि असकृत् अत्यन्तविपरीतदर्शनभावितया मोमुह्यमानो लोकः श्रुतमपि असकृत् तत्त्वं विस्मृत्य विस्मृत्य मिथ्याप्रसङ्गम् अवतार्यावतार्य चोदयति इति पुनः पुनः उत्तरमाह भगवान्, दुर्विज्ञेयत्वं च आलक्ष्य वस्तुनः। 'अव्यक्तोऽयमचिन्त्योऽयम्' 'न जायते म्रियते' इत्यादिना आत्मनि कर्माभावः

श्रुतिस्मृतिन्यायप्रसिद्धः उक्तः वक्ष्यमाणश्च। तस्मिन् आत्मनि कर्माभावे अकर्मणि कर्मविपरीतदर्शनम् अत्यन्तनिरूढम्; यतः, 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः' (गीता 4.16)। देहाद्याश्रयं कर्म आत्मन्यध्यारोप्य 'अहं कर्ता, मम एतत् कर्म, मया अस्य कर्मणः फलं भोक्तव्यम् ' इति च, तथा 'अहं तूष्णीं भवामि, येन अहं निरायासः अकर्मा सुखी स्याम्' इति कार्यकरणाश्रयं व्यापारोपरमं तत्कृतं च सुखित्वम् आत्मनि अध्यारोप्य 'न करोमि किंचित्, तूष्णीं सुखमासे ' इति अभिमन्यते लोकः। तत्रेदं लोकस्य

विपरीतदर्शनापनयाय आह भगवान् -- 'कर्मण्यकर्म यः पश्येत् ' इत्यादि।।

अत्र च कर्म कर्मैव सत् कार्यकरणाश्रयं कर्मरहिते अविक्रिये आत्मनि सर्वैः अध्यस्तम्, यतः

पण्डितोऽपि 'अहं करोमि ' इति मन्यते। अतः आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि

नदीकूलस्थेष्विव वृक्षेषु गतिप्रातिलोम्येन अकर्म कर्माभावं यथाभूतं गत्यभावमिव वृक्षेषु यः पश्येत्, अकर्मणि च कार्यकरणव्यापारोपरमे कर्मवत् आत्मनि अध्यारोपिते, 'तूष्णीं अकुर्वन् सुखं आसे' इत्यहंकाराभिसंधिहेतुत्वात्, तस्मिन्

अकर्मणि च कर्म यः पश्येत्, यः एवं कर्माकर्मविभागज्ञः सः बुद्धिमान् पण्डितः मनुष्येषु, सः युक्तः योगी कृत्स्नकर्मकृच्च सः अशुभात् मोक्षितः कृतकृत्यो भवति इत्यर्थः।।

अयं श्लोकः अन्यथा व्याख्यातः कैश्चित्। कथम्? नित्यानां किल कर्मणाम् ईश्वरार्थे

अनुष्ठीयमानानां तत्फलाभावात् अकर्माणि तानि उच्यन्ते गौण्या वृत्त्या। तेषां च अकरणम् अकर्म; तच्च प्रत्यवायफलत्वात् कर्म उच्यते गौण्यैव वृत्त्या। तत्र नित्ये कर्मणि अकर्म यः पश्येत् फलाभावात्; यथा धेनुरपि गौः अगौः इत्युच्यते क्षीराख्यं फलं न प्रयच्छति इति, तद्वत्। तथा नित्याकरणे तु अकर्मणि च कर्म यः पश्येत् नरकादिप्रत्यवायफलं प्रयच्छति इति।।

नैतत् युक्तं व्याख्यानम्। एवं ज्ञानात् अशुभात् मोक्षानुपपत्तेः 'यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' इति

भगवता उक्तं वचनं बाध्येत। कथम्? नित्यानामनुष्ठानात् अशुभात् स्यात् नाम मोक्षणम्, न तु तेषां फलाभावज्ञानात्। न हि नित्यानां फलाभावज्ञानम् अशुभमुक्तिफलत्वेन चोदितम्,

नित्यकर्मज्ञानं वा। न च भगवतैवेहोक्तम्। एतेन अकर्मणि कर्मदर्शनं प्रत्युक्तम्। न हि अकर्मणि

'कर्म' इति दर्शनं कर्तव्यतया इह चोद्यते, नित्यस्य तु कर्तव्यतामात्रम्। न च 'अकरणात् नित्यस्य प्रत्यवायो भवति ' इति विज्ञानात् किञ्चित् फलं स्यात्। नापि नित्याकरणं ज्ञेयत्वेन चोदितम्। नापि 'कर्म अकर्म' इति मिथ्यादर्शनात् अशुभात् मोक्षणं बुद्धिमत्त्वं युक्तता कृत्स्नकर्मकृत्त्वादि च फलम् उपपद्यते, स्तुतिर्वा। मिथ्याज्ञानमेव हि साक्षात् अशुभरूपम्। कुतः अन्यस्मादशुभात् मोक्षणम्? न हि तमः तमसो निवर्तकं भवति।।

ननु कर्मणि यत् अकर्मदर्शनम् अकर्मणि वा कर्मदर्शनं न तत् मिथ्याज्ञानम्; किं तर्हि? गौणं

फलभावाभावनिमित्तम् -- न, कर्माकर्मविज्ञानादपि गौणात् फलस्य अश्रवणात्। नापि

श्रुतहान्यश्रुतपरिकल्पनायां कश्चित् विशेष उपलभ्यते। स्वशब्देनापि शक्यं वक्तुम् 'नित्यकर्मणां फलं नास्ति, अकरणाच्च तेषां नरकपातः स्यात्' इति; तत्र व्याजेन परव्यामोहरूपेण 'कर्मण्यकर्म यः पश्येत्' इत्यादिना किम्? तत्र एवं व्याचक्षाणेन भगवतोक्तं वाक्यं लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यात्। न च एतत् छद्मरूपेण वाक्येन रक्षणीयं वस्तु; नापि शब्दान्तरेण पुनः पुनः उच्यमानं सुबोधं स्यात् इत्येवं वक्तुं युक्तम्। 'कर्मण्येवाधिकारस्ते'

इत्यत्र हि स्फुटतर उक्तः अर्थः, न पुनर्वक्तव्यो भवति। सर्वत्र च प्रशस्तं बोद्धव्यं च कर्तव्यमेव।

न निष्प्रयोजनं बोद्धव्यमित्युच्यते।।

न च मिथ्याज्ञानं बोद्धव्यं भवति, तत्प्रत्युपस्थापितं वा वस्त्वाभासम्। नापि नित्यानाम् अकरणात् अभावात् प्रत्यवायभावोत्पत्तिः, 'नासतो विद्यते भावः' (गीता 2.16) इति वचनात् 'कथं असतः सज्जायेत ' (बृ0 उ0 6.2.2) इति च दर्शितम् असतः सज्जन्मप्रतिषेधात्। असतः सदुत्पत्तिं ब्रुवता असदेव सद्भवेत्, सच्चापि असत् भवेत् इत्युक्तं स्यात्। तच्च

अयुक्तम्, सर्वप्रमाणविरोधात्। न च निष्फलं विदध्यात् कर्म शास्त्रम्, दुःखस्वरूपत्वात्, दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्तेः। तदकरणे च नरकपाताभ्युपगमात् अनर्थायैव उभयथापि करणे

च अकरणे च शास्त्रं निष्फलं कल्पितं स्यात्। स्वाभ्युपगमविरोधश्च 'नित्यं निष्फलं कर्म' इति

अभ्युपगम्य 'मोक्षफलाय' इति ब्रुवतः। तस्मात् यथाश्रुत एवार्थः 'कर्मण्यकर्म यः' इत्यादेः। तथा

च व्याख्यातः अस्माभिः श्लोकः।।

तदेतत् कर्मणि अकर्मदर्शनं स्तूयते --

।।4.19।। --

यस्य यथोक्तदर्शिनः सर्वे यावन्तः समारम्भाः सर्वाणि कर्माणि, समारभ्यन्ते इति समारम्भाः,

कामसंकल्पवर्जिताः कामैः तत्कारणैश्च संकल्पैः वर्जिताः मुधैव चेष्टामात्रा अनुष्ठीयन्ते; प्रवृत्तेन

चेत् लोकसंग्रहार्थम्, निवृत्तेन चेत् जीवनमात्रार्थम्। तं ज्ञानाग्निदग्धकर्माणं कर्मादौ अकर्मादिदर्शनं ज्ञानं तदेव अग्निः तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य तम्

आहुः परमार्थतः पण्डितं बुधाः ब्रह्मविदः।।

यस्तु अकर्मादिदर्शी, सः अकर्मादिदर्शनादेव निष्कर्मा संन्यासी जीवनमात्रार्थचेष्टः सन् कर्मणि

न प्रवर्तते, यद्यपि प्राक् विवेकतः प्रवृत्तः। यस्तु प्रारब्धकर्मा सन् उत्तरकालमुत्पन्नात्मसम्यग्दर्शनः

स्यात्, सः सर्वकर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजत्येव। सः कुतश्चित् निमित्तात्

कर्मपरित्यागासंभवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावात् लोकसंग्रहार्थं

पूर्ववत् कर्मणि प्रवृत्तोऽपि नैव किञ्चित् करोति,

ज्ञानाग्निदग्धकर्मत्वात् तदीयं कर्म अकर्मैव

संपद्यते इत्येतमर्थं दर्शयिष्यन् आह --

।।4.20।। --

त्यक्त्वा कर्मसु अभिमानं फलासङ्गं च यथोक्तेन ज्ञानेन नित्यतृप्तः निराकाङ्क्षो विषयेषु इत्यर्थः। निराश्रयः आश्रयरहितः, आश्रयो नाम यत् आश्रित्य पुरुषार्थं सिसाधयिषति, दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः। विदुषा क्रियमाणं कर्म परमार्थतोऽकर्मैव, तस्य निष्क्रियात्मदर्शनसंपन्नत्वात्। तेन एवंभूतेन स्वप्रयोजनाभावात् ससाधनं कर्म परित्यक्तव्यमेव इति

प्राप्ते, ततः निर्गमासंभवात् लोकसंग्रहचिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा पूर्ववत् कर्मणि

अभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वात् नैव किञ्चित् करोति सः।।

यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्मारम्भात् ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये संजातात्मदर्शनः स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टः यतिः ज्ञाननिष्ठो मुच्यते इत्येतमर्थं दर्शयितुमाह --

।।4.21।। --

निराशीः निर्गताः आशिषः यस्मात् सः निराशीः, यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा बाह्यः कार्यकरणसंघातः तौ उभावपि यतौ संयतौ येन सः यतचित्तात्मा, त्यक्तसर्वपरिग्रहः त्यक्तः सर्वः परिग्रहः येन सः त्यक्तसर्वपरिग्रहः, शारीरं रीरस्थितिमात्रप्रयोजनम्, केवलं तत्रापि अभिमानवर्जितम्, कर्म कुर्वन् न आप्नोति न प्राप्नोति किल्बिषम् अनिष्टरूपं पापं धर्मं च। धर्मोऽपि मुमुक्षोः किल्बिषमेव बन्धापादकत्वात्। तस्मात् ताभ्यां मुक्तः भवति, संसारात् मुक्तो भवति इत्यर्थः।।

'शारीरं केवलं कर्म' इत्यत्र किं शरीरनिर्वर्त्यं शारीरं कर्म अभिप्रेतम्, आहोस्वित्

शरीरस्थितिमात्रप्रयोजनं शारीरं कर्म इति? किं च अतः यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा

शरीरस्थितिमात्रप्रयोजनं शारीरम् इति? उच्यते -- यदा शरीरनिर्वर्त्यं कर्म शारीरम् अभिप्रेतं स्यात्, तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन् नाप्नोति किल्बिषम् इत्यपि ब्रुवतो विरुद्धाभिधानं प्रसज्येत। शास्त्रीयं च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन् नाप्नोति किल्बिषम् इत्यपि ब्रुवतः अप्राप्तप्रतिषेधप्रसङ्गः। 'शारीरं कर्म कुर्वन्' इति विशेषणात् केवलशब्दप्रयोगाच्च वाङ्मनसनिर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन् प्राप्नोति

किल्बिषम् इत्युक्तं स्यात्। तत्रापि वाङ्मनसाभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धम्

आपद्येत। प्रतिषिद्धसेवापक्षेऽपि भूतार्थानुवादमात्रम् अनर्थकं स्यात्। यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्म अभिप्रेतं भवेत्, तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधगम्यं शरीरवाङ्मनसनिर्वर्त्यम् अन्यत् अकुर्वन् तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगात् 'अहं करोमि' इत्यभिमानवर्जितः शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन् नाप्नोति किल्बिषम्। एवंभूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसंभवात् किल्बिषं

संसारं न आप्नोति; ज्ञानाग्निदग्धसर्वकर्मत्वात् अप्रतिबन्धेन मुच्यत एव इति

पूर्वोक्तसम्यग्दर्शनफलानुवाद एव एषः। एवम् 'शारीरं केवलं कर्म' इत्यस्य अर्थस्य परिग्रहे

निरवद्यं भवति।।

त्यक्तसर्वपरिग्रहस्य यतेः अन्नादेः शरीरस्थितिहेतोः परिग्रहस्य अभावात् याचनादिना शरीरस्थितौ कर्तव्यतायां प्राप्तायाम् 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' (बोधा0 स्मृ0 21.8.12) इत्यादिना वचनेन अनुज्ञातं यतेः शरीरस्थितिहेतोः अन्नादेः प्राप्तिद्वारम् आविष्कुर्वन् आह --

## द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
## स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥४.२८॥

dravyayajñāstapoyajñā yogayajñāstathāpare |
svādhyāyajñānayajñāśca yatayaḥ saṃśitavratāḥ ||4.28||

**द्रव्ययज्ञाः $^{1/3}$ तपोयज्ञाः $^{1/3}$ योगयज्ञाः $^{1/3}$ तथा $^{0}$ अपरे $^{1/3}$ ।**
**स्वाध्यायज्ञानयज्ञाः $^{1/3}$ च $^{0}$ यतयः $^{1/3}$ संशितव्रताः $^{1/3}$ ॥४.२८॥**

- द्रव्ययज्ञाः [dravyayajñāḥ] = those who distribute wealth = द्रव्ययज्ञ (m.) + 1/3
    - तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञाः ।
- तपोयज्ञाः [tapoyajñāḥ] = those who follow prayerful disciplines = तपोयज्ञ (m.) + 1/3
    - तपः यज्ञः येषां ते तपोयज्ञाः (116B)।
- योगयज्ञाः [yogayajñāḥ] = those who  practise yoga = योगयज्ञ (m.) + 1/3
    - योगः यज्ञः येषां ते योगयज्ञाः (116B)।
- तथा [tathā] = so, too = अव्ययम्
- अपरे [apare] = others = अपर (pron. m.) + 1/3

- स्वाध्यायज्ञानयज्ञाः [svādhyāyajñānayajñāḥ] = those who pursue knowledge = स्वाध्यायज्ञानयज्ञ (m.) + 1/3
    - स्वाध्यायः ज्ञानं च स्वाध्यायज्ञाने (ID) ।
    - स्वाध्यायज्ञाने यज्ञौ येषां ते स्वाध्यायज्ञानयज्ञाः (116B)।
- च [ca] = and = अव्ययम्
- यतयः [yatayaḥ] = those who make efforts = यति (m.) + 1/3
- संशितव्रताः [saṃśitavratāḥ] = those of firm vows = संशितव्रत (m.) + 1/3
    - सम्यक् शितानि व्रतानि येषां ते संशितव्रताः (116B) ।

So too, there are those who distribute wealth, those who follow prayerful disciplines, those who practise *yoga*, and those of firm vows and efforts who pursue knowledge.

Sentence 1:

तथा $^{0}$ अपरे $^{1/3}$ द्रव्ययज्ञाः $^{1/3}$ तपोयज्ञाः $^{1/3}$ योगयज्ञाः $^{1/3}$ स्वाध्यायज्ञानयज्ञाः $^{1/3}$ यतयः $^{1/3}$ संशितव्रताः $^{1/3}$ च $^{0}$ ॥४.२८॥
So too (तथा $^{0}$), there are those (अपरे $^{1/3}$) who distribute wealth (द्रव्ययज्ञाः $^{1/3}$), those who follow prayerful disciplines (तपोयज्ञाः $^{1/3}$), those who practise *yoga* (योगयज्ञाः $^{1/3}$), and (च $^{0}$) those of firm vows (संशितव्रताः $^{1/3}$) and efforts (यतयः $^{1/3}$) who pursue knowledge (स्वाध्यायज्ञानयज्ञाः $^{1/3}$).

।।4.28।। --

द्रव्ययज्ञाः तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञाः। तपोयज्ञाः तपः यज्ञः येषां

तपस्विनां ते तपोयज्ञाः। योगयज्ञाः प्राणायामप्रत्याहारादिलक्षणो योगो यज्ञो येषां ते योगयज्ञाः। तथा अपरे स्वाध्यायज्ञानयज्ञाश्च स्वाध्यायः यथाविधि ऋगाद्यभ्यासः यज्ञः येषां ते स्वाध्याययज्ञाः। ज्ञानयज्ञाः ज्ञानं शास्त्रार्थपरिज्ञानं

यज्ञाः येषां ते ज्ञानयज्ञाश्च यतयः यतनशीलाः संशितव्रताः सम्यक् शितानि तनूकृतानि तीक्ष्णीकृतानि व्रतानि येषां ते संशितव्रताः।।

किञ्च --

।।4.29।। --

अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिम्, पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। प्राणे अपानं तथा अपरे जुह्वति, रेचकाख्यं च प्राणायामं कुर्वन्तीत्येतत्। प्राणापानगती मुखनासिकाभ्यां वायोः निर्गमनं प्राणस्य गतिः, तद्विपर्ययेण अधोगमनम् अपानस्य गतिः, ते प्राणापानगती एते रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः; कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः।।

किञ्च --

।।4.30।। --

अपरे नियताहाराः नियतः परिमितः आहारः येषां ते नियताहाराः सन्तः प्राणान् वायुभेदान् प्राणेषु एव जुह्वति यस्य यस्य वायोः जयः क्रियते इतरान् वायुभेदान् तस्मिन् तस्मिन् जुह्वति, ते तत्र प्रविष्टा इव भवन्ति। सर्वेऽपि एते यज्ञविदः यज्ञक्षपितकल्मषाः यज्ञैः यथोक्तैः क्षपितः

नाशितः कल्मषो येषां ते यज्ञक्षपितकल्मषाः।।

एवं यथोक्तान् यज्ञान् निर्वर्त्य --

।।4.31।। --

यज्ञशिष्टामृतभुजः यज्ञानां शिष्टं यज्ञशिष्टं यज्ञशिष्टं च तत् अमृतं च यज्ञशिष्टामृतं तत् भुञ्जते इति यज्ञशिष्टामृतभुजः। यथोक्तान् यज्ञान् कृत्वा तच्छिष्टेन कालेन यथाविधिचोदितम् अन्नम् अमृताख्यं भुञ्जते इति यज्ञशिष्टामृतभुजः यान्ति गच्छन्ति ब्रह्म सनातनं चिरन्तनं मुमुक्षवश्चेत्; कालातिक्रमापेक्षया इति सामर्थ्यात् गम्यते। न अयं लोकः सर्वप्राणिसाधारणोऽपि अस्ति यथोक्तानां यज्ञानां एकोऽपि यज्ञः यस्य नास्ति सः अयज्ञः तस्य। कुतः अन्यो विशिष्टसाधनसाध्यः कुरुसत्तम।।

।।4.32।। --

एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञाः वितताः विस्तीर्णाः ब्रह्मणो वेदस्य मुखे द्वारे वेदद्वारेण अवगम्यमानाः ब्रह्मणो मुखे वितता उच्यन्ते; तद्यथा 'वाचि हि प्राणं जुहुमः' इत्यादयः। कर्मजान् कायिकवाचिकमानसकर्मोद्भवान् विद्धि तान् सर्वान् अनात्मजान्, निर्व्यापारो हि आत्मा। अत एवं ज्ञात्वा विमोक्ष्यसे अशुभात्। न मद्व्यापारा इमे, निर्व्यापारोऽहम् उदासीन इत्येवं ज्ञात्वा अस्मात् सम्यग्दर्शनात् मोक्ष्यसे संसारबन्धनात् इत्यर्थः।।

'ब्रह्मार्पणम्' इत्यादिश्लोकेन सम्यग्दर्शनस्य यज्ञत्वं संपादितम्। यज्ञाश्च अनेके उपदिष्टाः। तैः सिद्धपुरुषार्थप्रयोजनैः ज्ञानं स्तूयते। कथम्? --

।।4.33।। --

श्रेयान् द्रव्यमयात् द्रव्यसाधनसाध्यात् यज्ञात् ज्ञानयज्ञः हे परंतप। द्रव्यमयो हि यज्ञः फलस्यारम्भकः, ज्ञानयज्ञः न फलारम्भकः, अतः श्रेयान् प्रशस्यतरः। कथम्? यतः सर्वं कर्म समस्तम् अखिलम् अप्रतिबद्धं पार्थ ज्ञाने मोक्षसाधने सर्वतःसंप्लुतोदकस्थानीये परिसमाप्यते अन्तर्भवतीत्यर्थः 'यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत् किञ्चित्प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद' (छा0 उ0 4.1.4) इति श्रुतेः।।

तदेतत् विशिष्टं ज्ञानं तर्हि केन प्राप्यते इत्युच्यते --

।।4.34।। --

तत् विद्धि विजानीहि येन विधिना प्राप्यते इति। आचार्यान् अभिगम्य, प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातः दीर्घनमस्कारः तेन, 'कथं बन्धः? कथं मोक्षः? का विद्या? का चाविद्या? इति परिप्रश्नेन, सेवया गुरुशुश्रूषया एवमादिना। प्रश्रयेण आवर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणं ज्ञानिनः। ज्ञानवन्तोऽपि केचित् यथावत् तत्त्वदर्शनशीलाः, अपरे न; अतो विशिनष्टि तत्त्वदर्शिनः इति। ये सम्यग्दर्शिनः तैः उपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरत् इति भगवतो मतम्।।

तथा च सति इदमपि समर्थं वचनम् --

।।4.35।। --

यत् ज्ञात्वा यत् ज्ञानं तैः उपदिष्टं अधिगम्य प्राप्य पुनः भूयः मोहम् एवं यथा इदानीं मोहं

गतोऽसि पुनः एवं न यास्यसि हे पाण्डव। किञ्च -- -येन ज्ञानेन भूतानि अशेषेण ब्रह्मादीनि

स्तम्बपर्यन्तानि द्रक्ष्यसि साक्षात् आत्मनि प्रत्यगात्मनि ' मत्संस्थानि इमानि भूतानि' इति अथो अपि मयि वासुदेवे 'परमेश्वरे च इमानि' इति; क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसि इत्यर्थः।।

किञ्च एतस्य ज्ञानस्य माहात्म्यम् --

।।4.36।। --

अपि चेत् असि पापेभ्यः पापकृद्भ्यः सर्वेभ्यः अतिशयेन पापकृत् पापकृत्तमः सर्वं ज्ञानप्लवेनैव

ज्ञानमेव प्लवं कृत्वा वृजिनं वृजिनार्णवं पापसमुद्रं संतरिष्यसि। धर्मोऽपि इह मुमुक्षोः पापम् उच्यते।।

ज्ञानं कथं नाशयति पापमिति दृष्टान्त उच्यते --

।।4.37।। --

यथा एधांसि काष्ठानि समिद्धः सम्यक् इद्धः दीप्तः अग्निः भस्मसात् भस्मीभावं कुरुते हे अर्जुन, ज्ञानमेव अग्निः ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा निर्बीजीकरोतीत्यर्थः। न हि साक्षादेव ज्ञानाग्निः कर्माणि इन्धनवत् भस्मीकर्तुं शक्नोति। तस्मात् सम्यग्दर्शनं सर्वकर्मणां निर्बीजत्वे कारणम् इत्यभिप्रायः। सामर्थ्यात् येन कर्मणा शरीरम् आरब्धं तत् प्रवृत्तफलत्वात् उपभोगेनैव क्षीयते। अतो यानि अप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक् कृतानि ज्ञानसहभावीनि च अतीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात् कुरुते।।

यतः एवम् अतः --

।।4.38।। --

- आत्मनि [ātmani] = in the mind = आत्मन् (m.) + अधिकरणे to विन्दति 7/1
- विन्दति [vindati] = makes= विन्द् (6U) to find + लट्/कर्तरि/III/1

Therefore, in this world there is no purifier equivalent to knowledge. One who has in time attained preparedness through *karma-yoga* naturally gains (knowledge) in the mind.

Sentence 1:

हि $^{0}$ ज्ञानेन $^{3/1}$ सदृशम् $^{1/1}$ पवित्रम् $^{1/1}$ इह $^{0}$ न $^{0}$ विद्यते $^{III/1}$ ।
Therefore (हि $^{0}$), in this world (इह $^{0}$) there is (विद्यते $^{III/1}$) no (न $^{0}$) purifier (पवित्रम् $^{1/1}$) equivalent (सदृशम् $^{1/1}$) to knowledge (ज्ञानेन $^{3/1}$).

Sentence 2:

तत् $^{2/1}$ स्वयम् $^{0}$ योगसंसिद्धः $^{1/1}$ कालेन $^{3/1}$ आत्मनि $^{7/1}$ विन्दति $^{III/1}$ ॥४.३८॥
One who has in time (कालेन $^{3/1}$) attained preparedness through *karma-yoga* (योगसंसिद्धः $^{1/1}$) naturally (स्वयम् $^{0}$) gains (विन्दति $^{III/1}$) (knowledge) (तत् $^{2/1}$) in the mind (आत्मनि $^{7/1}$).

यतः $^{0}$ एवम् $^{0}$ (ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते।) अतः $^{0}$ –

न $^{0}$ हि $^{0}$ ज्ञानेन $^{3/1}$ सदृशम् $^{1/1}$ तुल्यम् $^{1/1}$ पवित्रम् $^{1/1}$ पावनम् $^{1/1}$ शुद्धिकरम् $^{1/1}$ इह $^{0}$ विद्यते $^{III/1}$ । तत् $^{2/1}$ ज्ञानम् $^{2/1}$ स्वयम् $^{0}$ एव योग-संसिद्धः $^{1/1}$ योगेन $^{3/1}$ कर्मयोगेन $^{3/1}$ समाधियोगेन $^{3/1}$ च $^{0}$ संसिद्धः $^{1/1}$ संस्कृतः $^{1/1}$ योग्यताम् $^{2/1}$ आपन्नः $^{1/1}$ सन् $^{1/1}$ मुमुक्षुः $^{1/1}$ कालेन $^{3/1}$ महता $^{3/1}$ आत्मनि $^{7/1}$ विन्दति $^{III/1}$ लभते $^{III/1}$ इत्यर्थः $^{1/1}$ ॥

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥४.३९॥**

śraddhāvāllabhate jñānaṃ tatparaḥ saṃyatendriyaḥ |
jñānaṃ labdhvā parāṃ śāntimacireṇādhigacchati ||4.39||

श्रद्धावान् $^{1/1}$ लभते $^{III/1}$ ज्ञानम् $^{2/1}$ तत्परः $^{1/1}$ संयतेन्द्रियः $^{1/1}$ ।
ज्ञानम् $^{2/1}$ लब्ध्वा $^{0}$ पराम् $^{2/1}$ शान्तिम् $^{2/1}$ अचिरेण $^{0}$ अधिगच्छति $^{III/1}$ ॥४.३९॥

- श्रद्धावान् [śraddhāvān] = one who has faith = श्रद्धावत् (m.) + 1/1
  - शास्त्रगुरुवाक्येषु विश्वासः श्रद्धा अस्य अस्ति इति श्रद्धावान् ।
- लभते [labhate] = gains = लभ् (1A) to gain + लट्/कर्तरि/III/1
- ज्ञानम् [jñānam] = knowledge = ज्ञान (n.) + कर्मणि to लभते 2/1
- तत्परः [tatparaḥ] = one who is committed to that (knowledge) = तत्पर (m.) + 1/1
  - तस्मिन् ज्ञाने परः यस्य सः तत्परः (116B) ।
- संयतेन्द्रियः [saṃyatendriyaḥ] = one who is master of one's senses = संयतेन्द्रिय (m.) + 1/1
  - संयतानि इन्द्रियाणि यस्य सः (116B) ।
- ज्ञानम् [jñānam] = knowledge = ज्ञान (n.) + कर्मणि to लब्ध्वा 2/1
- लब्ध्वा [labdhvā] = having gained = अव्ययम्
- पराम् [parām] = absolute = परा (f.) + adj. to शान्तिम् 2/1
- शान्तिम् [śāntim] = peace = शान्ति (f.) + कर्मणि to लब्ध्वा 2/1
- अचिरेण [acireṇa] = immediately = अव्ययम्
- अधिगच्छति [adhigacchati] = gains = अधि + गम् (1P) to understand, to gain + लट्/कर्तरि/III/1

One who has faith (in the śāstra and in the words of the teacher), who is committed to that (knowledge) who is master of one's senses gains the knowedge. Having gained the knowledge one immediately gains absolute peace.

Sentence 1:

श्रद्धावान्$^{1/1}$ तत्परः$^{1/1}$ संयतेन्द्रियः$^{1/1}$ ज्ञानम्$^{2/1}$ लभते$^{III/1}$ ।
One who has faith (श्रद्धावान्$^{1/1}$) (in the śāstra and in the words of the teacher), who is committed to that (knowledge) (तत्परः$^{1/1}$) who is master of one's senses (संयतेन्द्रियः$^{1/1}$) gains (लभते$^{III/1}$) the knowedge (ज्ञानम्$^{2/1}$).

Sentence 2:

ज्ञानम्$^{2/1}$ लब्ध्वा$^{0}$ पराम्$^{2/1}$ शान्तिम्$^{2/1}$ अचिरेण$^{0}$ अधिगच्छति$^{III/1}$ ॥४.३९॥
Having gained (लब्ध्वा$^{0}$) the knowledge (ज्ञानम्$^{2/1}$) one immediately (अचिरेण$^{0}$) gains (अधिगच्छति$^{III/1}$) absolute (पराम्$^{2/1}$) peace (शान्तिम्$^{2/1}$).

येन 3/1 एकान्तेन 3/1 ज्ञान-प्राप्तिः 1/1 भवति III/1 सः 1/1 उपायः 1/1 उपदिश्यते III/1 -

श्रद्धावान् 1/1 श्रद्धालुः 1/1 लभते III/1 ज्ञानम् 2/1 । श्रद्धालुत्वे 7/1 अपि 0 भवति III/1 कश्चित् 0 मन्द-प्रस्थानः 1/1, अतः 0 आह III/1 – तत्परः 1/1। गुरु-उपासदन-आदौ 7/1 अभियुक्तः 1/1 ज्ञान-लब्धि-उपाये 7/1 श्रद्धावान् 1/1 तत्परः 1/1 अपि 0 अजितेन्द्रियः 1/1 स्यात् III/1 इति 0 अतः 0 आह III/1 – संयतेन्द्रियः 1/1, संयतानि 1/3 विषयेभ्यः 5/3 निवर्तितानि 1/3 यस्य 6/1 इन्द्रियाणि 1/3 सः 1/1 संयतेन्द्रियः 1/1। यः 1/1 एवंभूतः 1/1 श्रद्धावान् 1/1 तत्परः 1/1 संयतेन्द्रियः 1/1 च 0 सः 1/1 अवश्यम् 0 ज्ञानम् 2/1 लभते III/1। प्रणिपात-आदिः 1/1 तु 0 बाह्यः 1/1 अनैकान्तिकः 1/1 अपि 0 भवति III/1, मायावित्वादि-संभवात् 5/1। "न 0 तु 0 तत् 1/1 (मायावित्वादि 1/1) श्रद्धावत्त्वादौ 7/1 (अस्ति)" इति 0 एकान्ततः 0 ज्ञान-लब्धि-उपायः 1/1। किम् 0 पुनः 0 ज्ञान-लाभात् 5/1 स्यात् III/1 इत्युच्यते III/1 – ज्ञानम् 2/1 लब्ध्वा 0 पराम् 2/1 मोक्ष-आख्याम् 2/1 शान्तिम् 2/1 उपरतिम् 2/1 अचिरेण 0 क्षिप्रम् 0 एव 0 अधिगच्छति III/1। सम्यग्-दर्शनात् 5/1 क्षिप्रम् 0 एव 0 मोक्षः 1/1 भवति III/1 इति 0 सर्व-शास्त्र-न्याय-प्रसिद्धः 1/1 सुनिश्चितः 1/1 अर्थः 1/1॥

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४.४०॥**

ajñaścāśraddadhānaśca saṃśayātmā vinaśyati |
nāyaṃ loko:'sti na paro na sukhaṃ saṃśayātmanaḥ ||4.40||

अज्ञः 1/1 च 0 अश्रद्दधानः 1/1 च 0 संशयात्मा 1/1 विनश्यति III/1 ।
न 0 अयम् 1/1 लोकः 1/1 अस्ति III/1 न 0 परः 1/1 न 0 सुखम् 1/1 संशयात्मनः 6/1 ॥४.४०॥

- अज्ञः [ajñaḥ] = one who has no discrimination = अज्ञ (m.) + 1/1
    - ज्ञानाति इति ज्ञः, न ज्ञः इति अज्ञः ।
- च [ca] = and = अव्ययम्
- अश्रद्दधानः [aśraddadhānaḥ] = one who has no faith = अश्रद्दधान (m.) + 1/1
    - नञ् + (श्रत् + धा + शानच्) ।
- च [ca] = and = अव्ययम्
- संशयात्मा [saṃśayātmā] = one who has a doubting mind= संशयात्मन् (m.) + 1/1

- संशयः आत्मनि चित्ते यस्य सः संशयात्मा (176B) ।
- विनश्यति [vinaśyati] = perishes = वि + नश् (4P) to perish + लट्/कर्तरि/III/1
- न [na] = not = अव्ययम्
- अयम् [ayam] = this = इदम् (pron. m.) + 1/1
- लोकः [lokaḥ] = world = लोक (m.) + 1/1
- अस्ति [asti] = there is = अस् (2P) to be + लट्/कर्तरि/III/1
- न [na] = not = अव्ययम्
- परः [paraḥ] = the world beyond = पर (pron. m.) + 1/1
- न [na] = not = अव्ययम्
- सुखम् [sukham] = happiness = सुख (n.) + 1/1
- संशयात्मनः [saṃśayātmanaḥ] = for one who has a doubting mind= संशयात्मन् (m.) + 6/1

One who has no discrimination, and who has no faith, and one who has a doubting mind perishes. Because, for the one with a doubting mind, this world is no tthere, nor the world beyond, nor happiness.

Sentence 1:

अज्ञः $^{1/1}$ च $^{0}$ अश्रद्दधानः $^{1/1}$ संशयात्मा $^{1/1}$ च $^{0}$ विनश्यति $^{III/1}$ ।

One who has no discrimination (अज्ञः $^{1/1}$), and (च $^{0}$) who has no faith (अश्रद्दधानः $^{1/1}$), and (च $^{0}$) one who has a doubting mind (संशयात्मा $^{1/1}$) perishes (विनश्यति $^{III/1}$).

Sentence 2:

संशयात्मनः $^{6/1}$ अयम् $^{1/1}$ लोकः $^{1/1}$ न $^{0}$ अस्ति $^{III/1}$ परः $^{1/1}$ न $^{0}$ सुखम् $^{1/1}$ न $^{0}$ ॥४.४०॥

Because, for the one with a doubting mind (संशयात्मनः $^{6/1}$), this (अयम् $^{1/1}$) world (लोकः $^{1/1}$) is not (न $^{0}$) there (अस्ति $^{III/1}$), nor (न $^{0}$) the world beyond (परः $^{1/1}$), nor (न $^{0}$) happiness (सुखम् $^{1/1}$).

अत्र $^{0}$ संशयः $^{1/1}$ न $^{0}$ कर्तव्यः $^{1/1}$, पापिष्ठः $^{1/1}$ हि $^{0}$ संशयः $^{1/1}$; कथम् $^{0}$ इति $^{0}$ उच्यते $^{III/1}$ –

अज्ञः $^{1/1}$ च $^{0}$ अनात्मज्ञः $^{1/1}$ च $^{0}$ अश्रद्दधानः $^{1/1}$ च $^{0}$ गुरु-वाक्य-शास्त्रेषु $^{7/3}$ अविश्वासवान् $^{1/1}$ च $^{0}$ संशयात्मा $^{1/1}$ च $^{0}$ संशयचित्तः $^{1/1}$ च $^{0}$ विनश्यति $^{III/1}$ । अज्ञ-अश्रद्दधानौ $^{1/2}$ यद्यपि $^{0}$ विनश्यतः $^{III/2}$, न $^{0}$ तथा $^{0}$ यथा $^{0}$ संशयात्मा $^{1/1}$। संशयात्मा $^{1/1}$ तु $^{0}$ पापिष्ठः $^{1/1}$ सर्वेषाम् $^{6/3}$। कथम् $^{0}$? न $^{0}$ अयम् $^{1/1}$ साधारणः $^{1/1}$ अपि $^{0}$ लोकः $^{1/1}$ अस्ति $^{III/1}$ । तथा $^{0}$ न $^{0}$ परः $^{1/1}$ लोकः $^{1/1}$। न $^{0}$ सुखम् $^{1/1}$, तत्र $^{0}$ अपि $^{0}$ संशय-उत्पत्तेः $^{5/1}$ संशयात्मनः $^{6/1}$ संशयचित्तस्य $^{6/1}$। तस्मात् $^{5/1}$ संशयः $^{1/1}$ न $^{0}$ कर्तव्यः $^{1/1}$॥

**योगसन्न्यस्तकर्माणं ज्ञानसंच्छिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥४.४१॥**

yogasannyastakarmāṇaṃ jñānasaṃcchinnasaṃśayam |
ātmavantaṃ na karmāṇi nibadhnanti dhanañcaya ||4.41||

योगसन्न्यस्तकर्माणम् $^{2/1}$ ज्ञानसंच्छिन्नसंशयम् $^{2/1}$ ।
आत्मवन्तम् $^{2/1}$ न $^{0}$ कर्माणि $^{1/3}$ निबध्नन्ति $^{III/3}$ धनञ्जय $^{S/1}$ ॥४.४१॥

- योगसन्न्यस्तकर्माणम् [yogasannyastakarmāṇam] = one who has renounced action through *yoga* = योगसन्न्यस्तकर्मन् (m.) + कर्मणि to निबध्नन्ति 2/1
  - योगेन सन्न्यस्तानि कर्माणि येन सः योगसन्न्यस्तकर्मा (113B)।
- ज्ञानसंच्छिन्नसंशयम् [jñānasaṃcchinnasaṃśayam] = one whose doubts have been completely severed = ज्ञानसंच्छिन्नसंशय (m.) + कर्मणि to निबध्नन्ति 2/1
  - ज्ञानेन संच्छिन्नः संशयः यस्य सः ज्ञानसंच्छिन्नसंशयः (116B)।
- आत्मवन्तम् [ātmavantam] = one who is together = आत्मवत् (m.) + कर्मणि to निबध्नन्ति 2/1
  - आत्मा कार्यकरणसङ्घातः अस्य वशे अस्ति इति आत्मवान् ।
- न [na] = not = अव्ययम्
- कर्माणि [karmāṇi] = actions = कर्मन् (m.) + कर्तरि to निबध्नन्ति 1/3
- निबध्नन्ति [nibadhnanti] = bind = नि + बध् (9P) to bind + लट्/कर्तरि/III/3
- धनञ्जय [dhanañcaya] = O! Arjuna = धनञ्जय (m.) + सम्बोधने 1/1

O Arjuna, actions do not bind the one who has renounced action through *yoga*, whose doubts have been completely severed by knowledge and the one who is together.

Sentence 1:

धनञ्जय $^{S/1}$ कर्माणि $^{1/3}$ योगसन्न्यस्तकर्माणम् $^{2/1}$ ज्ञानसंच्छिन्नसंशयम् $^{2/1}$ आत्मवन्तम् $^{2/1}$ न $^{0}$ निबध्नन्ति $^{III/3}$ ॥४.४१॥
O Arjuna (धनञ्जय $^{S/1}$), actions (कर्माणि $^{1/3}$) do not (न $^{0}$) bind (निबध्नन्ति $^{III/3}$) the one who has renounced action through *yoga* (योगसन्न्यस्तकर्माणम् $^{2/1}$), whose doubts have been completely severed by knowledge (ज्ञानसंच्छिन्नसंशयम् $^{2/1}$) and the one who is together (आत्मवन्तम् $^{2/1}$).

कस्मात् $^{5/1}$? यस्मात् $^{5/1}$ –

योग-सन्न्यस्त-कर्माणम् $^{2/1}$ परमार्थ-दर्शन-लक्षणेन $^{3/1}$ योगेन $^{3/1}$ संन्यस्तानि $^{1/3}$ कर्माणि $^{1/3}$ येन $^{3/1}$ परमार्थदर्शिना $^{3/1}$ धर्माधर्माख्यानि $^{1/3}$ (सः $^{1/1}$ योगसन्न्यस्तकर्मा $^{1/1}$, 3113B) तम् $^{2/1}$ योगसंन्यस्तकर्माणम् $^{2/1}$ । कथम् $^{0}$ योगसंन्यस्तकर्मा $^{1/1}$ इति $^{0}$ आह $^{III/1}$ – ज्ञान-संच्छिन्न-संशयम् $^{2/1}$ ज्ञानेन $^{3/1}$ आत्मेश्वरैकत्वदर्शनलक्षणेन $^{3/1}$ संछिन्नः $^{1/1}$ संशयः $^{1/1}$ यस्य $^{6/1}$ सः $^{1/1}$ ज्ञानसंछिन्नसंशयः $^{1/1}$ 3116B । यः $^{1/1}$ एवम् $^{0}$ योगन्यस्तकर्मा $^{1/1}$ तम् $^{2/1}$ आत्मवन्तम् $^{2/1}$ अप्रमत्तम् $^{2/1}$ गुणचेष्टारूपेण $^{3/1}$ दृष्टानि $^{1/3}$ कर्माणि $^{1/3}$ न $^{0}$ निबध्नन्ति $^{III/3}$ अनिष्टादिरूपम् $^{2/1}$ फलम् $^{2/1}$ न $^{0}$ आरभन्ते $^{III/3}$ हे $^{0}$ धनञ्जय $^{S/1}$ ॥

## तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।
## छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४.४२॥

tasmādajñānasambhūtaṃ hṛtsthaṃ jñānāsinātmanaḥ |
chittvainaṃ saṃśayaṃ yogamātiṣṭhottiṣṭha bhārata ||4.42||

तस्मात् $^{5/1}$ अज्ञान-सम्भूतम् $^{2/1}$ हृत्स्थम् $^{2/1}$ ज्ञानासिना $^{3/1}$ आत्मनः $^{6/1}$ ।
छित्त्वा $^{0}$ एनम् $^{2/1}$ संशयम् $^{2/1}$ योगम् $^{2/1}$ आतिष्ठ $^{II/1}$ उत्तिष्ठ $^{II/1}$ भारत $^{S/1}$ ॥४.४२॥

- तस्मात् [tasmāt] = therefore = तद् (pron. n.) + हेतौ 5/1
- अज्ञानसम्भूतम् [ajñānasambhūtam] = born of ignorance = अज्ञानसम्भूत (m.) + adj. to संशयम् 2/1
    - न (विरोधार्थे नञ्) ज्ञानम् इति अज्ञानम् ।
    - अज्ञानात् सम्भूतम् अज्ञानसम्भूतम् ।
- हृत्स्थम् [hṛtstham] = rooted in the mind = हृत्स्थ (m.) + adj. to संशयम् 2/1
    - हृदि तिष्ठति इति हृत्स्थम् (UT) ।
- ज्ञानासिना [jñānāsinā] = with the sword of knowledge = ज्ञानासि (m.) + करणे to छित्त्वा 3/1
    - ज्ञानम् एव असिः इति ज्ञानासिः (KT), तेन ।
- आत्मनः [ātmanaḥ] = about the self = आत्मन् (m.) + सम्बन्धे 6/1
- छित्त्वा [chittvā] = having slayed = अव्ययम्
- एनम् [enam] = this = एतद् (pron. m.) + adj. to संशयम् 2/1
    - अन्वादेशः
- संशयम् [saṃśayam] = doubt = संशय (m.) + कर्मणि to छित्त्वा 2/1
- योगम् [yogam] = *yoga* (*karma-yoga*) = योग (m.) + कर्मणि to आतिष्ठ 2/1
- आतिष्ठ [ātiṣṭha] = take to = आ + स्था to undertake + लोट्/कर्तरि/II/1
- उत्तिष्ठ [uttiṣṭha] = stand up = उद् + स्था to undertake + लोट्/कर्तरि/II/1
- भारत [bhārata] = O! Arjuna = भारत (m.) + सम्बोधने 1/1

Therefore, O *Bhārata*, slaying with the sword of knowledge this doubt about the self, which is born of ignorance, which is rooted in the mind, get up and take to *yoga* (*karma-yoga*).

Sentence 1:

भारत [8/1] तस्मात् [5/1] एनम् [2/1] अज्ञानसम्भूतम् [2/1] हृत्स्थम् [2/1] आत्मनः [6/1] संशयम् [2/1] ज्ञानासिना [3/1] छित्त्वा [0] उत्तिष्ठ [II/1] योगम् [2/1] आतिष्ठ [II/1] ॥४.४२॥

Therefore (तस्मात् [5/1]), O *Bhārata* (भारत [S/1]), slaying (छित्त्वा [0]) with the sword of knowledge (ज्ञानासिना [3/1]) this (एनम् [2/1]) doubt (संशयम् [2/1]) about the self (आत्मनः [6/1]), which is born of ignorance (अज्ञानसम्भूतम् [2/1]), which is rooted in the mind (हृत्स्थम् [2/1]), get up (उत्तिष्ठ [II/1]) and take to (आतिष्ठ [II/1]) *yoga* (योगम् [2/1]) (*karma-yoga*).

यस्मात् [5/1] कर्म-योग-अनुष्ठानात् [5/1] अशुद्धि-क्षय-हेतुक-ज्ञान-संछिन्न-संशयः [1/1] न [0] निबध्यते [III/1] कर्मभिः [3/3] ज्ञान-अग्नि-दग्ध-कर्मत्वात् [5/1] एव [0], यस्मात् [5/1] च [0] ज्ञान-कर्म-अनुष्ठान-विषये [7/1] संशयवान् [1/1] विनश्यति [III/1] –

तस्मात् [5/1] पापिष्ठम् [2/1] अज्ञान-सम्भूतम् [2/1] अज्ञानात् [5/1] अविवेकात् [5/1] जातम् [2/1] हृत्स्थम् [2/1] हृदि [7/1] बुद्धौ [7/1] स्थितम् [2/1] ज्ञानासिना [3/1] शोक-मोह-आदि-दोष-हरम् [1/1] सम्यग्दर्शनम् [1/1] ज्ञानम् [1/1] तत् [1/1] एव [0] असिः [1/1] खड्गः [1/1] (ज्ञानासिः) तेन [3/1] ज्ञानासिना [3/1] आत्मनः [6/1] स्वस्य [6/1], आत्म-विषयत्वात् [5/1] संशयस्य [6/1] । न [0] हि [0] परस्य [6/1] संशयः [1/1] परेण [3/1] च्छेत्तव्यताम् [2/1] प्राप्तः [1/1], येन [3/1] स्वस्य [6/1] इति [0] विशिष्यते [III/1]। अतः [0] आत्मविषयः [6/1] अपि [0] स्वस्य [6/1] एव [0] भवति [III/1]। छित्त्वा [0] एनम् [2/1] संशयम् [2/1] स्व-विनाश-हेतु-भूतम् [2/1], योगम् [2/1] सम्यग्दर्शन-उपायम् [2/1] कर्म-अनुष्ठानम् [2/1] आतिष्ठ [II/1] कुरु [II/1] इत्यर्थः [1/1]। उत्तिष्ठ [II/1] च [0] इदानीम् [0] युद्धाय [4/1] भारत [S/1] इति [0] ॥

इति [0] श्रीमत्परमहंसपरिव्राजकाचार्यस्य [6/1] श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य [6/1] श्रीमच्छंकरभगवतः [6/1] कृतौ [7/1] श्रीमद्भगवद्गीताभाष्ये [7/1] चतुर्थः [1/1] अध्यायः [1/1]॥

**अर्जुन उवाच ।**

**सन्न्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥५.१॥**

arjuna uvāca ।

sannyāsaṃ karmaṇāṃ kṛṣṇa punaryogaṃ ca śaṃsasi ।

yacchreya etayorekaṃ tanme brūhi suniścitam ॥5.1॥

अर्जुनः 1/1 उवाच III/1 ।

सन्न्यासम् 2/1 कर्मणाम् 6/3 कृष्ण S/1 पुनः 0 योगम् 2/1 च 0 शंससि II/1 ।
यत् 1/1 श्रेयः 1/1 एतयोः 6/2 एकम् 2/1 तत् 2/1 मे 4/1 ब्रूहि II/1 सुनिश्चितम् 2/1 ॥५.१॥

- अर्जुनः [arjunaḥ] = Arjuna = अर्जुन (m.) + कर्तरि to उवाच 1/1
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1
- सन्न्यासम् [sannyāsam] = renunciation = सन्न्यास (m.) + कर्मणि to शंससि 2/1
- कर्मणाम् [karmaṇām] = of actions = कर्मन् (n.) + 6/3
- कृष्ण [kṛṣṇa] = O Kṛṣṇa = कृष्ण (m.) + सम्बोधने + 1/1
- पुनः [punaḥ] = again = अव्ययम्
- योगम् [yogam] = *karma-yoga* = योग (m.) + कर्मणि to शंससि 2/1
- च [ca] = and = अव्ययम्
- शंससि [śaṃsasi] = you praise = शंस् (to praise) + लट्/कर्तरि/II/1
- यत् [yat] = that which = यद् (pron. n.) + 1/1
- श्रेयः [śreyaḥ] = better = श्रेयस् (n.) + 1/1
- एतयोः [etayoḥ] = of the two = एतद् (pron. n.) + निर्धारणे 6/2
- एकम् [ekam] = one= एक (pron. n.) + कर्मणि to ब्रूहि 2/1
- तत् [tat] = that = तद् (pron. n.) + adj. to एकम् 2/1
- मे [me] = for me = अस्मद् (pron. m.) + सम्प्रदाने 4/1
- ब्रूहि [brūhi] = tell = ब्रूञ् (to say) + लोट्/कर्तरि/II/1

- सुनिश्चितम् [suniścitam] = definitely = सुनिश्चित (n.) + adj. to एकम् 2/1

Arjuna said:

O Kṛṣṇa, you praise renunciation of actions and also karma-yoga. Tell me definitely which one of these two is better.

Sentence 1:

अर्जुनः $^{1/1}$ उवाच $^{III/1}$ ।

Arjuna (अर्जुनः $^{1/1}$) said (उवाच $^{III/1}$):

Sentence 2:

कृष्ण $^{S/1}$ कर्मणाम् $^{6/3}$ सन्न्यासम् $^{2/1}$ पुनः $^{0}$ योगम् $^{2/1}$ च $^{0}$ शंससि $^{II/1}$ ।
O Kṛṣṇa (कृष्ण $^{S/1}$), you praise (शंससि $^{II/1}$) renunciation (सन्न्यासम् $^{2/1}$) of actions (कर्मणाम् $^{6/3}$) and (च $^{0}$) also (पुनः $^{0}$) karma-yoga (योगम् $^{2/1}$).

Sentence 3:

यत् $^{1/1}$ एतयोः $^{6/2}$ श्रेयः $^{1/1}$ तत् $^{2/1}$ सुनिश्चितम् $^{2/1}$ एकम् $^{2/1}$ मे $^{4/1}$ ब्रूहि $^{II/1}$ ॥५.१॥
Tell (ब्रूहि $^{II/1}$) me (मे $^{4/1}$) definitely (सुनिश्चितम् $^{2/1}$) which (यत् $^{1/1}$ तत् $^{2/1}$) one (एकम् $^{2/1}$) of these two (एतयोः $^{6/2}$) is better (श्रेयः $^{1/1}$).

“कर्मण्यकर्म यः पश्येत्” (भ. गी. ४ । १८) इति[0] आरभ्य[0] “स युक्तः कृत्स्नकर्मकृत्” (भ. गी. ४ । १८) “ज्ञानाग्निदग्धकर्माणम्” (भ. गी. ४ । १९) “शारीरं केवलं कर्म कुर्वन्” (भ. गी. ४ । २१) “यदृच्छालाभसन्तुष्टः” (भ. गी. ४ । २२) “ब्रह्मार्पणं ब्रह्म हविः” (भ. गी. ४ । २४) “कर्मजान् विद्धि तान् सर्वान्” (भ. गी. ४ । ३२) “सर्वं कर्माखिलं पार्थ” (भ. गी. ४ । ३३) “ज्ञानाग्निः सर्वकर्माणि” (भ. गी. ४ । ३७) “योगसंन्यस्तकर्माणम्” (भ. गी. ४ । ४१) इत्येतैः[3/3] वचनैः[3/3] सर्व-कर्म-संन्यासम्[2/1] (ज्ञानम्) अवोचत्[III/1] भगवान्[1/1] ।

“छित्त्वैनं संशयं योगमातिष्ठ” (भ. गी. ४ । ४२) इत्यनेन[3/1] वचनेन[3/1] योगम्[2/1] च[0] कर्म-अनुष्ठान-लक्षणम्[2/1] अनुतिष्ठ[II/1] इत्युक्तवान्[1/1] ।

“तयोः[6/2] उभयोः[6/2] च[0] कर्म-अनुष्ठान-कर्मसंन्यासयोः[6/2] स्थिति-गतिवत्[0] परस्पर-विरोधात्[5/1] एकेन[3/1] (पुरुषेण) सह[0] कर्तुम्[0] अशक्यत्वात्[5/1], काल-भेदेन[5/1] च[0] अनुष्ठान-विधान-अभावात्[5/1], अर्थात्[0] एतयोः[6/2] अन्यतर-कर्तव्यता-प्राप्तौ[7/1] सत्याम्[7/1] यत्[1/1] प्रशस्यतरम्[1/1] एतयोः[6/2] कर्म-अनुष्ठान-कर्मसंन्यासयोः[6/2] तत्[1/1] कर्तव्यम्[1/1], न[0] इतरत्[1/1]” इत्येवम्[0] मन्यमानः[1/1] प्रशास्यतर-बुभुत्सया[3/1] अर्जुन[1/1] उवाच[III/1] — “संन्यासं कर्मणां कृष्ण” (भ. गी. ५ । १) इत्यादिना[3/1] ॥

[आक्षेपः] ननु[0] च[0] <u>आत्मविदः</u>[6/1] ज्ञानयोगेन[IB3/1] निष्ठाम्[2/1] प्रतिपिपादयिषन्[1/1] (प्रति + पद् + णिच् to unfold, to teach + सन् (desire to …) + शतृँ (... ing)) पूर्वोदाहृतैः[3/3] वचनैः[3/3] भगवान्[1/1] सर्वकर्मसंन्यासम्[2/1] अवोचत्[III/1], <u>न[0] तु[0] अनात्मज्ञस्य</u>[6/1] । अतः[0] च[0] कर्मानुष्ठान-कर्मसंन्यासयोः[6/2] भिन्न-पुरुष-विषयत्वात्[5/1] अन्यतरस्य[6/1] प्रशस्यतरत्व-बुभुत्सया[3/1] अयम्[1/1] प्रश्नः[1/1] अनुपपन्नः[1/1] ।

[समाधानम्] सत्यम्[0] एव[0] त्वद्-अभिप्रायेण[3/1] प्रश्नः[1/1] न[0] उपपद्यते[III/1]। प्रष्टुः[6/1] स्व-अभिप्रायेण[3/1] पुनः[0] प्रश्नः[1/1] युज्यते[III/1] एव्[0] इति[0] वदामः[I/3] ।

[आक्षेपः] कथम्[0]?

[समाधानम्] “पूर्व-उदाहृतैः[3/3] वचनैः[3/3] भगवता[3/1] कर्मसंन्यासस्य[6/1] कर्तव्यतया[3/1] विवक्षितत्वात्[5/1], प्राधान्यम्[0] । अन्तरेण[0] च[0] कर्तारम्[2/1] तस्य[6/1] कर्तव्यत्व-असम्भवात्[5/1] । अनात्मवित्[1/1] अपि[0] कर्ता[1/1] पक्षे[7/1] प्राप्तः[1/1] अनूद्यते[III/1] एव[0] । न[0] पुनः[0] आत्मवित्-कर्तृकत्वम्[1/1] एव[0] संन्यासस्य[6/1] विवक्षितम्[1/1], इत्येवम्[0] मन्वानस्य[6/1] अर्जुनस्य[6/1] कर्मानुष्ठान-कर्मसंन्यासयोः[6/2] अविद्वत्पुरुष-कर्तृकत्वम्[1/1] अपि[0] अस्ति[III/1] इति[0] पूर्वोक्तेन[3/1] प्रकारेण[3/1] तयोः[6/2] परस्पर-विरोधात्[5/1] अन्यतरस्य[6/1] कर्तव्यत्वे[7/1] प्राप्ते[7/1], प्रशस्यतरम्[1/1] च[0] कर्तव्यम्[1/1] न[0] इतरत्[1/1]” इति[0] प्रशस्यतर-विविदिषया[3/1] प्रश्नः[1/1] न[0] अनुपपन्नः[1/1]॥

प्रतिवचन-वाक्यार्थ-निरूपणेन[3/1] अपि[0] प्रष्टुः[6/1] अभिप्रायः[1/1] एवम्[0] एव[0] इति[0] गम्यते[III/1] ।

कथम्[0] ?

“संन्यास-कर्मयोगौ[1/2] निःश्रेयस-करौ[1/2] तयोः[6/2] तु[0] कर्मयोगः[1/1] विशिष्यते[III/1]” (भ. गी. ५ । २) इति[0] प्रतिवचनम्[1/1]।

एतत्[1/1] निरूप्यम्[1/1] — किम्[0] अनेन[3/1] (प्रतिवचनेन) <u>आत्मवित्-कर्तृकयोः</u>[6/2] संन्यास-कर्मयोगयोः[6/2] निःश्रेयसकरत्वम्[2/1] प्रयोजनम्[2/1] उक्त्वा[0] तयोः[6/2] एव[0] कुतश्चित्[0] विशेषात्[5/1] कर्मसंन्यासात्[5/1] कर्मयोगस्य[6/1] विशिष्टत्वम्[1/1] उच्यते[III/1]? आहोस्वित्[0] <u>अनात्मवित्-कर्तृकयोः</u>[6/2] संन्यास-कर्मयोगयोः[6/2] तत्[1/1] उभयम्[1/1] (निःश्रेयसकरत्वम् कर्मयोगस्य विशिष्टत्वम् च) उच्यते[III/1] ? इति[0] । किञ्च[0] अतः[0] — यदि[0] <u>आत्मवित्-कर्तृकयोः</u>[6/2]

संन्यास-कर्मयोगयोः $^{6/2}$ निःश्रेयसकरत्वम् $^{2/1}$, तयोः $^{6/2}$ तु $^{0}$ कर्मसंन्यासात् $^{5/1}$ कर्मयोगस्य $^{6/1}$ विशिष्टत्वम् $^{1/1}$ उच्यते $^{III/1}$; यदि $^{0}$ वा $^{0}$ अनात्मवित्-कर्तृकयोः $^{6/2}$ संन्यास-कर्मयोगयोः $^{6/2}$ तत् $^{1/1}$ उभयम् $^{1/1}$ उच्यते $^{III/1}$ ? इति $^{0}$ ।
अत्र $^{0}$ उच्यते $^{III/1}$ — आत्मवित्कर्तृकयोः $^{6/2}$ संन्यासकर्मयोगयोः $^{6/2}$ असम्भवात् $^{5/1}$ तयोः $^{6/2}$ निःश्रेयसकरत्ववचनम् $^{1/1}$ तदीयात् $^{5/1}$ च $^{0}$ कर्मसंन्यासात् $^{5/1}$ कर्मयोगस्य $^{6/1}$ विशिष्टत्व-अभिधानम् $^{1/1}$ इति $^{0}$ एतत् $^{1/1}$ उभयम् $^{1/1}$ अनुपपन्नम् $^{1/1}$ ।
यदि $^{0}$ अनात्मविदः $^{6/1}$ कर्मसंन्यासः $^{1/1}$ तत्प्रतिकूलः $^{1/1}$ च $^{0}$ कर्मानुष्ठान-लक्षणः $^{1/1}$ कर्मयोगः $^{1/1}$ सम्भवेताम् $^{III/2}$, तदा $^{0}$ तयोः $^{6/2}$ निःश्रेयसकरत्व-उक्तिः $^{1/1}$ कर्मयोगस्य $^{1/1}$ च $^{0}$ कर्मसंन्यासात् $^{5/1}$ विशिष्टत्व-अभिधानम् $^{1/1}$ इति $^{0}$ एतत् $^{1/1}$ उभयम् $^{1/1}$ उपपद्येत $^{III/1}$।
आत्मविदः $^{6/1}$ तु $^{0}$ संन्यास-कर्मयोगयोः $^{6/2}$ असम्भवात् $^{5/1}$ तयोः $^{6/2}$ निःश्रेयसकरत्व-अभिधानम् $^{1/1}$ कर्मसंन्यासात् $^{5/1}$ च $^{0}$ कर्मयोगः $^{1/1}$ विशिष्यते $^{III/1}$ इति $^{0}$ च $^{0}$ अनुपपन्नम् $^{1/1}$॥
[आक्षेपः] अत्र $^{0}$ आह $^{III/1}$ — किम् $^{0}$ आत्मविदः $^{6/1}$ संन्यासकर्मयोगयोः $^{6/2}$ उभयोः $^{6/2}$ अपि $^{0}$ असम्भवः $^{1/1}$? आहोस्वित् $^{0}$ अन्यतरस्य $^{6/1}$ असम्भवः $^{1/1}$? यदा $^{0}$ च $^{0}$ अन्यतरस्य $^{6/1}$ असम्भवः $^{1/1}$, तदा $^{0}$ किम् $^{0}$ कर्मसंन्यासस्य $^{6/1}$, उत $^{0}$ कर्मयोगस्य $^{6/1}$? इति $^{0}$; असम्भवे $^{7/1}$ कारणम् $^{1/1}$ च $^{0}$ वक्तव्यम् $^{1/1}$ इति $^{0}$ ।
[समाधानम्] अत्र $^{0}$ उच्यते $^{III/1}$ — आत्मविदः $^{6/1}$ निवृत्त-मिथ्याज्ञानत्वात् $^{5/1}$ विपर्ययज्ञान-मूलस्य $^{6/1}$ कर्मयोगस्य $^{6/1}$ असम्भवः $^{1/1}$ स्यात् $^{III/1}$ ।
जन्मादि-सर्वविक्रिया-रहितत्वेन $^{3/1}$ निष्क्रियम् $^{2/1}$ आत्मानम् $^{2/1}$ आत्मत्वेन $^{3/1}$ यः $^{1/1}$ वेत्ति $^{III/1}$ तस्य $^{6/1}$ आत्मविदः $^{6/1}$ सम्यग्दर्शनेन $^{3/1}$ अपास्त-मिथ्याज्ञानस्य $^{6/1}$ निष्क्रियात्म-स्वरूप-अवस्थान-लक्षणम् $^{2/1}$ सर्वकर्मसंन्यासम् $^{2/1}$ उक्त्वा $^{0}$ तद्विपरीतस्य $^{6/1}$ मिथ्याज्ञानप्-मूल-कर्तृत्व-अभिमान-पुरःसरस्य $^{6/1}$ सक्रियात्म-स्वरूप-अवस्थान-रूपस्य $^{6/1}$ कर्मयोगस्य $^{6/1}$ इह $^{0}$ गीताशास्त्रे $^{7/1}$ तत्र $^{0}$ तत्र $^{0}$ आत्मस्वरूप-निरूपण-प्रदेशेषु $^{7/3}$ सम्यग्ज्ञान-मिथ्याज्ञान-तत्कार्य-विरोधात् $^{5/1}$ अभावः $^{1/1}$ प्रतिपाद्यते $^{III/1}$ यस्मात् $^{5/1}$, तस्मात् $^{5/1}$ आत्मविदः $^{6/1}$ निवृत्तमिथ्याज्ञानस्य $^{6/1}$ विपर्ययज्ञानमूलः $^{1/1}$ कर्मयोगः $^{1/1}$ न $^{0}$ सम्भवति $^{III/1}$ इति $^{0}$ युक्तम् $^{1/1}$ उक्तम् $^{1/1}$ स्यात् $^{III/1}$॥
[आक्षेपः] केषु $^{7/3}$ केषु $^{7/3}$ पुनः $^{0}$ आत्मस्वरूप-निरूपण-प्रदेशेषु $^{7/3}$ आत्मविदः $^{6/1}$ कर्म-अभावः $^{1/1}$ प्रतिपाद्यते $^{III/1}$ इति $^{0}$ ।
[समाधानम्] अत्र $^{0}$ उच्यते $^{III/1}$ — "अविनाशि तु तत्" (भ. गी. २ । १७) इति $^{0}$ प्रकृत्य $^{0}$ "य एनं वेत्ति हन्तारम्" (भ. गी. २ । १९) "वेदाविनाशिनं नित्यम्" (भ. गी. २ । २१) इत्यादौ $^{7/1}$ तत्र $^{0}$ तत्र $^{0}$ आत्मविदः $^{6/1}$ कर्म-अभावः $^{1/1}$ उच्यते $^{III/1}$ ॥
[आक्षेपः] ननु $^{0}$ च $^{0}$ कर्मयोगः $^{1/1}$ अपि $^{0}$ आत्मस्वरूप-निरूपण-प्रदेशेषु $^{7/3}$ तत्र $^{0}$ तत्र $^{0}$ प्रतिपाद्यते $^{III/1}$ एव $^{0}$; तत् $^{1/1}$ यथा $^{0}$ — "तस्माद्युध्यस्व भारत" (भ. गी. २ । १८) "स्वधर्ममपि चावेक्ष्य" (भ. गी. २ । ३१) "कर्मण्येवाधिकारस्ते" (भ. गी. २ । ४७) इत्यादौ $^{7/1}$ । अतः $^{0}$ च $^{0}$ कथम् $^{0}$ आत्मविदः $^{6/1}$ कर्मयोगस्य $^{6/1}$ असम्भवः $^{1/1}$ स्यात् $^{III/1}$ इति $^{0}$ ?
[समाधानम्] अत्र उच्यते — 1) सम्यग्ज्ञान-मिथ्याज्ञान-तत्कार्य-विरोधात् $^{5/1}$, 2) "ज्ञानयोगेन साङ्ख्यानाम्" (भ. गी. ३ । ३) इति $^{0}$ अनेन $^{3/1}$ साङ्ख्यानाम् $^{6/3}$ आत्मतत्त्वविदाम् $^{6/3}$ अनात्मवित्कर्तृक-कर्मयोगनिष्ठातः $^{0\,(5/1)}$ निष्क्रियात्म-स्वरूप-अवस्थान-लक्षणायाः $^{6/1}$ ज्ञानयोगनिष्ठायाः $^{6/1}$ पृथक्करणात् $^{5/1}$, 3) कृतकृत्यत्वेन $^{3/1}$ आत्मविदः $^{6/1}$ प्रयोजन-अन्तर-अभावात् $^{5/1}$, 4) "तस्य कार्यं न विद्यते" (भ. गी. ३ । १७) इति $^{0}$ कर्तव्य-अन्तर-अभाव-वचनात् $^{5/1}$ च $^{0}$, 5) "न कर्मणामनारम्भात्" (भ. गी. ३ । ४) "संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः" (भ. गी. ५ । ६) इत्यादिना $^{3/1}$ च $^{0}$ आत्मज्ञानाङ्गत्वेन $^{3/1}$ कर्मयोगस्य $^{6/1}$ विधानात् $^{5/1}$, 6) "योगारूढस्य तस्यैव शमः कारणमुच्यते" (भ. गी. ६ । ३) इत्यनेन

$^{3/1}$ च $^{0}$ उत्पन्न-सम्यग्दर्शनस्य $^{6/1}$ कर्मयोग-अभाव-वचनात् $^{5/1}$, 7) ”शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्” (भ. गी. ४ । २१) इति $^{0}$ च $^{0}$ शरीर-स्थिति-कारण-अतिरिक्तस्य $^{6/1}$ कर्मणः $^{6/1}$ निवारणात् $^{5/1}$, 8) ”नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्” (भ. गी. ५ । ८) इत्यनेन $^{3/1}$ च $^{0}$ शरीर-स्थितिमात्र-प्रयुक्तेषु $^{7/3}$ अपि $^{0}$ दर्शन-श्रवणादि-कर्मसु $^{7/3}$ आत्म-याथात्म्य-विदः $^{6/1}$ ”करोमि $^{I/1}$” इति $^{0}$ प्रत्ययस्य $^{6/1}$ समाहित-चेतस्तया $^{3/1}$ सदा $^{0}$ अकर्तव्यत्व-उपदेशात् $^{5/1}$ आत्मतत्त्वविदः $^{6/1}$ सम्यग्दर्शनविरुद्धः $^{1/1}$ मिथ्याज्ञान-हेतुकः $^{1/1}$ कर्मयोगः $^{1/1}$ स्वप्ने $^{7/1}$ अपि $^{0}$ न $^{0}$ सम्भावयितुम् $^{0}$ शक्यते $^{III/1}$ यस्मात् $^{5/1}$, तस्मात् $^{5/1}$ अनात्मवित्कर्तृकयोः $^{6/2}$ एव $^{0}$ संन्यास-कर्मयोगयोः $^{6/2}$ निःश्रेयसकरत्व-वचनम् $^{1/1}$, तदीयात् $^{5/1}$ च $^{0}$ कर्मसंन्यासात् $^{5/1}$ पूर्वोक्त-आत्मवित्कर्तृक-सर्वकर्मसंन्यास-विलक्षणात् $^{5/1}$ सति $^{7/1}$ एव $^{0}$ कर्तृत्व-विज्ञाने $^{3/1}$ कर्म-एकदेश-विषयात् $^{5/1}$ यमनियमादि-सहितत्वेन $^{3/1}$ च $^{0}$ दुरनुष्ठेयात् $^{5/1}$ सुकरत्वेन $^{3/1}$ च $^{0}$ कर्मयोगस्य $^{6/1}$ विशिष्टत्व-अभिधानम् $^{1/1}$ इत्येवम् $^{0}$ प्रतिवचन-वाक्यार्थ-निरूपणेन $^{3/1}$ अपि $^{0}$ पूर्वोक्तः $^{1/1}$ प्रष्टुः $^{6/1}$ अभिप्रायः $^{1/1}$ निश्चीयते $^{III/1}$ इति $^{0}$ स्थितम् $^{1/1}$॥

”ज्यायसी चेत्कर्मणस्ते” (भ. गी. ३ । १) इत्यत्र $^{0}$ ज्ञान-कर्मणोः $^{6/1}$ सह $^{0}$ असम्भवे $^{7/1}$ ”यच्छ्रेय एतयोः तद्ब्रूहि” (भ. गी. ३ । २) इत्येवम् $^{0}$ पृष्टः $^{1/1}$ अर्जुनेन $^{0}$ भगवान् $^{1/1}$ “साङ्ख्यानाम् $^{6/3}$ संन्यासिनाम् $^{6/3}$ ज्ञानयोगेन $^{3/1}$ निष्ठा $^{1/1}$ पुनः $^{0}$ कर्मयोगेन $^{3/1}$ योगिनाम् $^{6/3}$ निष्ठा $^{1/1}$ प्रोक्ता $^{1/1}$ इति $^{0}$ निर्णयम् $^{2/1}$ चकार $^{III/1}$ । ”न $^{0}$ च $^{0}$ संन्यसनात् $^{5/1}$ एव $^{0}$ केवलात् $^{5/1}$ सिद्धिम् $^{2/1}$ समधिगच्छति $^{III/1}$” (भ. गी. ३ । ४) इति $^{0}$ वचनात् $^{5/1}$ ज्ञानसहितस्य $^{6/1}$ सिद्धि-साधनत्वम् $^{1/1}$ इष्टम् $^{1/1}$ कर्मयोगस्य $^{6/1}$ च $^{0}$, विधानात् $^{5/1}$।

ज्ञानरहितस्य $^{6/1}$ संन्यासः $^{1/1}$ श्रेयान् $^{1/1}$ , किम् $^{0}$ वा $^{0}$ कर्मयोगः $^{1/1}$ श्रेयान् $^{1/1}$? इति $^{0}$ एतयोः $^{6/2}$ विशेषबुभुत्सया $^{1/1}$ –

सन्न्यासम् $^{2/1}$ परित्याम् $^{2/1}$ कर्मणाम् $^{6/3}$ शास्त्रीयाणाम् $^{6/3}$ अनुष्ठेय-विशेषाणाम् $^{6/3}$ शंससि $^{II/1}$ प्रशंससि $^{II/1}$ कथयसि $^{II/1}$ इत्येतत् $^{1/1}$। पुनः $^{0}$ योगम् $^{2/1}$ च $^{0}$ तेषाम् $^{6/3}$ एव $^{0}$ अनुष्ठानम् $^{2/1}$ अवश्य-कर्तव्यत्वम् $^{2/1}$ शंससि $^{II/1}$ । अतः $^{0}$ मे $^{6/1}$ कतरत् $^{1/1}$ श्रेयः $^{1/1}$ इति $^{0}$ संशयः $^{1/1}$ – किम् $^{0}$ कर्मानुष्ठानम् $^{1/1}$ श्रेयः $^{1/1}$, किम् $^{0}$ वा $^{0}$ तद्धानम् $^{1/1}$ इति $^{0}$। प्रशस्यतरम् $^{1/1}$ च $^{0}$ अनुष्ठेयम् $^{1/1}$। अतः $^{0}$ च $^{0}$ यत् $^{1/1}$ श्रेयः $^{1/1}$ प्रशस्यतरम् $^{1/1}$ एतयोः $^{6/2}$ कर्मसंन्यास-कर्मयोगयोः $^{6/2}$ यत्-अनुष्ठानात् $^{5/1}$ श्रेयोऽवाप्तिः $^{1/1}$ मम $^{0}$ स्यात् $^{III/1}$ इति $^{0}$ मन्यसे $^{II/1}$, तत् $^{2/1}$ एकम् $^{2/1}$ अन्यतरत् $^{2/1}$ सह $^{0}$ एकपुरुष-अनुष्ठेयत्व-असंभवात् $^{5/1}$ मे $^{4/1}$ ब्रूहि $^{II/1}$ सुनिश्चितम् $^{2/1}$ अभिप्रेतम् $^{2/1}$ तव $^{6/1}$ इति ॥

**श्रीभगवान् उवाच ।**

**सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसन्न्यासात् कर्मयोगो विशिष्यते ॥५.२॥**

śrībhagavān uvāca |

sannyāsaḥ karmayogaśca niḥśreyasakarāvubhau |

tayostu karmasannyāsāt karmayogo viśiṣyate ||5.2||

श्रीभगवान्[1/1] उवाच[III/1] ।

सन्न्यासः[1/1] कर्मयोगः[1/1] च[0] निःश्रेयसकरौ[1/2] उभौ[1/2] ।
तयोः[6/2] तु[0] कर्मसन्न्यासात्[5/1] कर्मयोगः[1/1] विशिष्यते[III/1] ॥५.२॥

- श्रीभगवान् [śrībhagavān] = Bhagavān = भगवत् (m.) + कर्तरि to उवाच 1/1
    - श्रिया सहित भगवान् श्रीभगवान् ।
    - भगः अस्य अस्ति इति भगवान् ।
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1

- सन्न्यासः [sannyāsaḥ] = renunciation (of action) = सन्न्यास (m.) + 1/1
- कर्मयोगः [karmayogaḥ] = performance of aciton (as *yoga*) = कर्मयोग (m.) + 1/1
- च [ca] = and = अव्ययम्
- निःश्रेयसकरौ [niḥśreyasakarau] = those which lead to liberation = निःश्रेयसकर (m.) + 1/2
    - निःश्रेयसं कुरुतः इति निःश्रेयसकरौ (UT) ।
- उभौ [ubahu] = both = उभ (pron. m.) + 1/2
- तयोः [tayoḥ] = of them = तद् (pron. m.) + 6/2
- तु [tu] = but = अव्ययम्
- कर्मसन्न्यासात् [karmasannyāsāt] = than renunciation of action = कर्मसन्न्यास (m.) + 5/1
- कर्मयोगः [karmayogaḥ] = performance of aciton (as *yoga*) = कर्मयोग (m.) + 1/1
- विशिष्यते [viśiṣyate] = is better = वि + शिष् (7P) to distinguish + लट्/कर्मणि/III/1

Śrī Bhagavān said:

Both renunciation (of action) and performance of action as *yoga* lead to liberation. But, of these two, the performance of action as *yoga* is betteer than renunciation of action.

Sentence 1:

श्रीभगवान्$^{1/1}$ उवाच$^{III/1}$ ।

Śrī Bhagavān (श्रीभगवान्$^{1/1}$) said (उवाच$^{III/1}$).

Sentence 2:

उभौ$^{1/2}$ सन्न्यासः$^{1/1}$ कर्मयोगः$^{1/1}$ च$^{0}$ निःश्रेयसकरौ$^{1/2}$ ।
Both (उभौ$^{1/2}$) renunciation (of action) (सन्न्यासः$^{1/1}$) and (च$^{0}$) performance of action as *yoga* (कर्मयोगः$^{1/1}$) lead to liberation (निःश्रेयसकरौ$^{1/2}$).

Sentence 3:

तयोः$^{6/2}$ तु$^{0}$ कर्मसन्न्यासात्$^{5/1}$ कर्मयोगः$^{1/1}$ विशिष्यते$^{III/1}$ ॥५.२॥
But (तु$^{0}$), of these two (तयोः$^{6/2}$), the performance of action as *yoga* (कर्मयोगः$^{1/1}$) is betteer (विशिष्यते$^{III/1}$) than renunciation of action (कर्मसन्न्यासात्$^{5/1}$).

स्वाभिप्रायम्$^{2/1}$ आचक्षाणः$^{1/1}$ निर्णयाय$^{4/1}$ श्रीभगवान्$^{1/1}$ उवाच$^{III/1}$
सन्न्यासः$^{1/1}$ कर्मणाम्$^{6/1}$ परित्यागः$^{1/1}$ कर्मयोगः$^{1/1}$ च$^{0}$ तेषाम्$^{6/3}$ नुष्ठानम्$^{1/1}$ तौ$^{1/2}$ उभौ$^{1/2}$ अपि$^{0}$ निःश्रेयसकरौ$^{1/2}$ मोक्षम्$^{2/1}$ कुर्वाते$^{III/2}$ ज्ञानोत्पत्ति-हेतुत्वेन$^{3/1}$ । उभौ$^{1/2}$ यद्यपि$^{0}$ निःश्रेयसकरौ$^{1/2}$, तथापि$^{0}$ तयोः$^{6/2}$ तु$^{0}$ निःश्रेयसहेत्वोः$^{6/2}$ कर्मसन्न्यासात्$^{5/1}$ केवलात्$^{5/1}$ कर्मयोगः$^{1/1}$ विशिष्यते$^{III/1}$ इति$^{0}$ कर्मयोगम्$^{2/1}$ स्तौति$^{III/1}$ ॥

**ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥५.३॥**

jñeyaḥ sa nityasannyāsī yo na dveṣṭi na kāṅkṣati |
nirdvandvo hi mahābāho sukhaṃ bandhātpramucyate ||5.3||

ज्ञेयः $^{1/1}$ सः $^{1/1}$ नित्यसन्न्यासी $^{1/1}$ यः $^{1/1}$ न $^{0}$ द्वेष्टि $^{III/1}$ न $^{0}$ काङ्क्षति $^{III/1}$ ।
निर्द्वन्द्वः $^{1/1}$ हि $^{0}$ महाबाहो $^{S/1}$ सुखम् $^{0}$ बन्धात् $^{5/1}$ प्रमुच्यते $^{III/1}$ ॥५.३॥

- ज्ञेयः [jñeyaḥ] = one who should be known = ज्ञेय (m.) + 1/1
    - ज्ञा + यत् (कर्मणि, with necessity)
- सः [saḥ] = he = तद् (pron. m.) + 1/1
- नित्यसन्न्यासी [nityasannyāsī] = one who is always a renunciate = नित्यसन्न्यासिन् (m.) + 1/1
- यः [yaḥ] = one who = यद् (pron. m.) + 1/1
- न [na] = does not = अव्ययम्
- द्वेष्टि [dveṣṭi] = hate = द्विष् (2U) to hate + लट्/कर्तरि/III/1
- न [na] = does not = अव्ययम्
- काङ्क्षति [kāṅkṣati] = long for = काङ्क्ष् (1P) to long for + लट्/कर्तरि/III/1
- निर्द्वन्द्वः [nirdvandvaḥ] = one who is free from the opposites (likes and dislikes) = निर्द्वन्द्व (m.) + 1/1
- हि [hi] = because = अव्ययम्
- महाबाहो [mahābāho] = O! Arjuna = महाबाहु (m.) + सम्बोधने 1/1
- सुखम् [sukham] = easily = अव्ययम्
- बन्धात् [bandhāt] = from bondage = बन्ध (m.) + अपादाने 5/1
- प्रमुच्यते [pramucyate] = is released = प्र + मुच् (1A) to release + लट्/कर्मणि/III/1

The person who neither hates nor longs (for anything) should be known as always a renunciate O Arjuna, because one who is free from the opposites (likes and dislikes) is effortlessly released from bondage.

Sentence 1:

ज्ञेयः $^{1/1}$ सः $^{1/1}$ नित्यसन्न्यासी $^{1/1}$ यः $^{1/1}$ न $^{0}$ द्वेष्टि $^{III/1}$ न $^{0}$ काङ्क्षति $^{III/1}$ ।
निर्द्वन्द्वः $^{1/1}$ हि $^{0}$ महाबाहो $^{S/1}$ सुखम् $^{0}$ बन्धात् $^{5/1}$ प्रमुच्यते $^{III/1}$ ॥५.३॥
The person (सः $^{1/1}$) who (यः $^{1/1}$) neither (न $^{0}$) hates (द्वेष्टि $^{III/1}$) nor (न $^{0}$) longs (for anything) (काङ्क्षति $^{III/1}$) should be known (ज्ञेयः $^{1/1}$) as always a renunciate (नित्यसन्न्यासी $^{1/1}$) O Arjuna (महाबाहो $^{S/1}$), because (हि $^{0}$) one who is free from the opposites (likes and dislikes) (निर्द्वन्द्वः $^{1/1}$) is effortlessly (सुखम् $^{0}$) released (प्रमुच्यते $^{III/1}$) from bondage (बन्धात् $^{5/1}$).

कस्मात् $^{5/1}$ (कर्मयोगः विशिष्यते?) इति $^{0}$ आह $^{III/1}$ --
ज्ञेयः $^{1/1}$ ज्ञातव्यः $^{1/1}$ सः $^{1/1}$ कर्मयोगी $^{1/1}$ नित्यसन्न्यासी $^{1/1}$ इति $^{0}$ यः $^{1/1}$ न $^{0}$ द्वेष्टि $^{III/1}$ किञ्चित् $^{0}$ न $^{0}$ काङ्क्षति $^{III/1}$ दुःखसुखे $^{7/1}$ तत्साधने $^{7/1}$ च $^{0}$ । एवंविधः $^{1/1}$ यः $^{1/1}$, कर्मणि $^{7/1}$ वर्तमानः $^{1/1}$ अपि $^{0}$ सः $^{1/1}$ नित्यसन्न्यासी $^{1/1}$ इति $^{0}$ ज्ञातव्यः $^{1/1}$ इत्यर्थः $^{1/1}$। निर्द्वन्द्वः $^{1/1}$ द्वन्द्व-वर्जितः $^{1/1}$ हि $^{0}$ यस्मात् $^{5/1}$ महाबाहो $^{S/1}$ सुखम् $^{0}$ बन्धात् $^{5/1}$ अनायासेन $^{3/1}$ प्रमुच्यते $^{III/1}$॥

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥५.४॥**

sāṅkhyayogau pṛthagbālāḥ pravadanti na paṇḍitāḥ |
ekamapyāsthitaḥ samyagubhayorvindate phalam ||5.4||

साङ्ख्ययोगौ $^{2/2}$ पृथक् $^{0}$ बालाः $^{1/3}$ प्रवदन्ति $^{III/3}$ न $^{0}$ पण्डिताः $^{1/3}$ ।
एकम् $^{2/1}$ अपि $^{0}$ आस्थितः $^{1/1}$ सम्यक् $^{0}$ उभयोः $^{6/2}$ विन्दते $^{III/1}$ फलम् $^{2/1}$ ॥५.४॥

- साङ्ख्ययोगौ [sāṅkhyayogau] = knowledge and *karma yoga* = साङ्ख्ययोग (m.) + 2/2
    - साङ्ख्यः च योगः च साङ्ख्ययोगौ (ID), तौ ।
- पृथक् [pṛthak] = separately = अव्ययम्
- बालाः [bālāḥ] = those who are childish = बाल (m.) + 1/3

- प्रवदन्ति [pravadanti] = argue = प्र + वद् (1P) to speak, argue + लट्/कर्तरि/III/3
- न [na] = are not = अव्ययम्
- पण्डिताः [paṇḍitāḥ] = those who are not wise = पण्डित (m.) + 1/3
- एकम् [ekam] = one = एक (pron. m.) + कर्मणि to आस्थितः 2/1
- अपि [api] = even = अव्ययम्
- आस्थितः [āsthitaḥ] = one who follows = आस्थित (m.) + 1/1
- सम्यक् [samyak] = well = अव्ययम्
- उभयोः [ubhayoḥ] = of both = उभ (pron. m.) + 6/1
- विन्दते [vindate] = gain = विद् (6U) to gain + लट्/कर्तरि/III/1
- फलम् [phalam] = result = फल (n.) + कर्मणि to विन्दते 2/1

Children (those who do not know), (but) not the wise, argue that knowledge and karma *yoga* are different. The person who follows even one (of the two) properly, gains the result of both.

Sentence 1:

(ये $^{1/3}$) बालाः $^{1/3}$ साङ्ख्ययोगौ $^{2/2}$ पृथक् $^{0}$ प्रवदन्ति $^{III/3}$ (ते $^{1/3}$) न $^{0}$ पण्डिताः $^{1/3}$ ।
Those who are like children (बालाः $^{1/3}$), argue (प्रवदन्ति $^{III/3}$) that knowledge and karma *yoga* (साङ्ख्ययोगौ $^{2/2}$) are different (पृथक् $^{0}$), are not (न $^{0}$) the wise (पण्डिताः $^{1/3}$).

Sentence 2:

एकम् $^{2/1}$ अपि $^{0}$ सम्यक् $^{0}$ आस्थितः $^{1/1}$ उभयोः $^{6/2}$ फलम् $^{2/1}$ विन्दते $^{III/1}$ ॥५.४॥
The person who follows (आस्थितः $^{1/1}$) even (अपि $^{0}$) one (एकम् $^{2/1}$) (of the two) properly (सम्यक् $^{0}$), gains (विन्दते $^{III/1}$) the result (फलम् $^{2/1}$) of both (उभयोः $^{6/2}$).

संन्यास-कर्मयोगयोः $^{6/2}$ भिन्न-पुरुष-आनुष्ठेययोः $^{6/2}$ विरुद्धयोः $^{6/2}$ फले $^{7/1}$ अपि $^{0}$ विरोधः $^{1/1}$ युक्तः $^{1/1}$, न $^{0}$ तु $^{0}$ उभयोः $^{6/2}$ निःश्रेयसकरत्वम् $^{1/1}$ एव $^{0}$ इति $^{0}$ प्राप्ते $^{7/1}$ इदम् $^{1/1}$ उच्यते $^{III/1}$ --

साङ्ख्य-योगौ$^{2/2}$ पृथक्$^{0}$ विरुद्ध-भिन्न-फलौ$^{2/2}$ बालाः$^{1/3}$ प्रवदन्ति$^{III/3}$ न$^{0}$ पण्डिताः$^{1/3}$ । पण्डिताः$^{1/3}$ तु$^{0}$ ज्ञानिनः$^{1/3}$ एकम्$^{2/1}$ फलम्$^{2/1}$ अविरुद्धम्$^{2/1}$ इच्छन्ति$^{III/3}$ । कथम्$^{0}$? एकम्$^{2/1}$ अपि$^{0}$ सांख्य-योगयोः$^{6/2}$ सम्यक्$^{0}$ आस्थितः$^{1/1}$ सम्यक्$^{0}$ अनुष्ठितवान्$^{1/1}$ इत्यर्थः$^{1/1}$, उभयोः$^{6/2}$ विन्दते$^{III/1}$ फलम्$^{2/1}$ । उभयोः$^{6/2}$ तत्$^{1/1}$ एव$^{0}$ हि$^{0}$ निःश्रेयसम्$^{1/1}$ फलम्$^{1/1}$; अतः$^{0}$ न$^{0}$ फले$^{7/1}$ विरोधः$^{1/1}$ अस्ति$^{III/1}$ ॥
ननु$^{0}$ संन्यास-कर्मयोग-शब्देन$^{3/1}$ प्रस्तुत्य$^{0}$ सांख्य-योगयोः$^{6/2}$ फल-एकत्वम्$^{2/1}$ कथम्$^{0}$ इह$^{0}$ अप्रकृतम्$^{2/1}$ ब्रवीति$^{III/1}$ ? ।
न$^{0}$ एषः$^{1/1}$ दोषः$^{1/1}$ । यद्यपि$^{0}$ अर्जुनेन$^{3/1}$ संन्यासम्$^{2/1}$ कर्मयोगम्$^{2/1}$ च$^{0}$ केवलम्$^{0}$ अभिप्रेत्य$^{0}$ प्रश्नः$^{1/1}$ कृतः$^{1/1}$, भगवान्$^{1/1}$ तु$^{0}$ तत्-अपरित्यागेन$^{3/1}$ एव$^{0}$ स्व-अभिप्रेतम्$^{2/1}$ च$^{0}$ विशेषम्$^{2/1}$ संयोज्य$^{0}$ शब्द-अन्तर-वाच्यतया$^{3/1}$ प्रतिवचनम्$^{2/1}$ ददौ$^{III/1}$ "सांख्ययोगौ" इति$^{0}$। तौ$^{1/2}$ एव$^{0}$ संन्यास-कर्मयोगौ$^{1/2}$ ज्ञान-तदुपाय-समबुद्धित्वादि-संयुक्तौ$^{1/2}$ सांख्य-योग-शब्द-वाच्यौ$^{1/2}$ इति$^{0}$ भगवतः$^{6/1}$ मतम्$^{1/1}$। अतः$^{0}$ न$^{0}$ अप्रकृत-प्रक्रिया$^{3/1}$ इति$^{0}$॥

यत् सांख्यैः ज्ञाननिष्ठैः संन्यासिभिः प्राप्यते स्थानं मोक्षाख्यम्, तत् योगैरपि ज्ञानप्राप्त्युपायत्वेन ईश्वरे समर्प्य कर्माणि आत्मनः फलम् अनभिसंधाय अनुतिष्ठन्ति ये ते योगाः योगिनः तैरपि परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यते इत्यभिप्रायः। अतः एकं सारव्यं च योगं च यः पश्यति फलैकत्वात् स सम्यक् पश्यतीत्यर्थः।।

एवं तर्हि योगात् संन्यास एव विशिष्यते; कथं तर्हि इदमुक्तम् 'तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते (गीता 5.2)' इति? श्रृणु तत्र कारणम् -- त्वया पृष्टं केवलं कर्मसंन्यासं कर्मयोगं च अभिप्रेत्य तयोः अन्यतरः कः श्रेयान् इति। तदनुरूपं प्रतिवचनं मया उक्तं कर्मसंन्यासात् कर्मयोगः विशिष्यते इति ज्ञानम् अनपेक्ष्य। ज्ञानापेक्षस्तु संन्यासः सांख्यमिति मया अभिप्रेतः। परमार्थयोगश्च स एव। यस्तु कर्मयोगः वैदिकः स च तादर्थ्यात् योगः संन्यास इति च उपचर्यते। कथं तादर्थ्यम् इति उच्यते --
।।5.6।। --
संन्यासस्तु पारमार्थिकः हे महाबाहो दुःखम् आप्तुं प्राप्तुम् अयोगतः योगेन विना। योगयुक्तः वैदिकेन कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तः, मुनिः मननात् ईश्वरस्वरूपस्य मुनिः, ब्रह्म -- परमात्मज्ञाननिष्ठालक्षणत्वात् प्रकृतः संन्यासः ब्रह्म उच्यते, 'न्यास इति ब्रह्मा ब्रह्मा हि परः (ना0 उ0 2.78)' इति श्रुतेः -- ब्रह्म परमार्थसंन्यासं परमार्थज्ञाननिष्ठालक्षणं न चिरेण क्षिप्रमेव अधिगच्छति प्राप्नोति। अतः मया उक्तम् 'कर्मयोगो विशिष्यते' इति।।

यदा पुनः अयं सम्यग्ज्ञानप्राप्त्युपायत्वेन --
।।5.7।। --
योगेन युक्तः योगयुक्तः, विशुद्धात्मा विशुद्धसत्त्वः, विजितात्मा विजितदेहः, जितेन्द्रियश्च, सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानाम् आत्मभूतः आत्मा प्रत्यक्चेतनो यस्य सः सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः, स तत्रैवं वर्तमानः लोकसंग्रहाय कर्म कुर्वन्नपि न लिप्यते न कर्मभिः बध्यते इत्यर्थः।।

न च असौ परमार्थतः करोतीत्यतः --

।।5.8 -- 5.9।। --
नैव किञ्चित् करोमीति युक्तः समाहितः सन् मन्येत चिन्तयेत्, तत्त्ववित् आत्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित् परमार्थदर्शीत्यर्थः।।
कदा कथं वा तत्त्वमवधारयन् मन्येत इति, उच्यते -- पश्यन्निति। मन्येत इति पूर्वेण संबन्धः। यस्य एवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मसु अकर्मैव, पश्यतः सम्यग्दर्शिनः तस्य सर्वकर्मसंन्यासे एव अधिकारः, कर्मणः अभावदर्शनात्। न हि मृगतृष्णिकायाम् उदकबुद्ध्या पानाय प्रवृत्तः उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते।।

यस्तु पुनः अतत्त्ववित् प्रवृत्तश्च कर्मयोगे --
।।5.10।। --
ब्रह्मणि ईश्वरे आधाय निक्षिप्य' तदर्थं कर्म करोमि' इति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वकर्माणि, लिप्यते न स पापेन न संबध्यते पद्मपत्रमिव अम्भसा उदकेन। केवलं सत्त्वशुद्धिमात्रमेव फलं तस्य कर्मणः स्यात्।।
यस्मात् --
।।5.11।। --
कायेन देहेन मनसा बुद्ध्या च केवलैः ममत्ववर्जितैः' ईश्वरायैव कर्म करोमि, न मम फलाय' इति ममत्वबुद्धिशून्यैः इन्द्रियैरपि -- केवलशब्दः कायादिभिरपि प्रत्येकं संबध्यते -- सर्वव्यापारेषु ममतावर्जनाय। योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयम् आत्मशुद्धये सत्त्वशुद्धये इत्यर्थः। तस्मात् तत्रैव तव अधिकारः इति कुरु कर्मैव।।

यस्माच्च --
।।5.12।। --
युक्तः' ईश्वराय कर्माणि करोमि न मम फलाय' इत्येवं समाहितः सन् कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्याम् आप्नोति नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः। यस्तु पुनः अयुक्तः असमाहितः कामकारेण करणं कारः कामस्य कारः कामकारः तेन कामकारेण, कामप्रेरिततयेत्यर्थः, 'मम फलाय इदं करोमि कर्म' इत्येवं फले सक्तः निबध्यते। अतः त्वं युक्तो भव इत्यर्थः।।

यस्तु परमार्थदर्शी सः --
।।5.13।। --
सर्वाणि कर्माणि सर्वकर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च तानि सर्वाणि कर्माणि मनसा विवेकबुद्ध्या, कर्मादौ अकर्मसंदर्शनेन संत्यज्येत्यर्थः, आस्ते तिष्ठति सुखम्। त्यक्तवाङ्मनःकायचेष्टः निरायासः प्रसन्नचित्तः आत्मनः अन्यत्र निवृत्तसर्वबाह्यप्रयोजनः इति 'सुखम् आस्ते' इत्युच्यते। वशी जितेन्द्रिय इत्यर्थः। क्व कथम् आस्ते इति, आह -- नवद्वारे पुरे। सप्त शीर्षण्यानि आत्मन उपलब्धिद्वाराणि, अवाग् द्वे मूत्रपुरीषविसर्गार्थे, तैः द्वारैः नवद्वारं पुरम् उच्यते शरीरम्, पुरमिव पुरम्, आत्मैकस्वामिकम्, तदर्थप्रयोजनैश्च

इन्द्रियमनोबुद्धिविषयैः अनेकफलविज्ञानस्य उत्पादकैः पौरैरिव अधिष्ठितम्। तस्मिन् नवद्वारे पुरे देही सर्वं कर्म संन्यस्य आस्ते; किं विशेषणेन? सर्वो हि देही संन्यासी असंन्यासी वा देहे एव आस्ते; तत्र अनर्थकं विशेषणमिति। उच्यते -- यस्तु अज्ञः देही देहेन्द्रियसंघातमात्रात्मदर्शी स
सर्वोऽपि 'गेहे भूमौ आसने वा आसे' इति मन्यते। न हि देहमात्रात्मदर्शिनः गेहे इव देहे आसे इति प्रत्ययः संभवति। देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु 'देहे आसे' इति प्रत्ययः उपपद्यते। परकर्मणां च परस्मिन् आत्मनि अविद्यया अध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते। उत्पन्नविवेकज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेहे इव देहे एव नवद्वारे पुरे आसनम्
प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेः। देहे एव आस्ते इति अस्त्येव
विशेषणफलम्, विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात्।।
यद्यपि कार्यकरणकर्माणि अविद्यया आत्मनि अध्यारोपितानि' संन्यस्यास्ते' इत्युक्तम्, तथापि
आत्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यात् इति आशङ्क्य आह -- नैव कुर्वन् स्वयम्, न च कार्यकरणानि कारयन् क्रियासु प्रवर्तयन्। किं यत् तत् कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायि सत् संन्यासात् न संभवति, यथा गच्छतो गतिः गमनव्यापारपरित्यागे न स्यात् तद्वत्? किं वा स्वत एव आत्मनः न अस्ति इति? अत्र उच्यते -- न अस्ति आत्मनः स्वतः कर्तृत्वं कारयितृत्वं च। उक्तं हि 'अविकार्योऽयमुच्यते (गीता 2.25)' 'शरीरस्थोऽपि न करोति न लिप्यते (गीता 13.31)' इति।' ध्यायतीव लेलायतीव (बृ0 उ0 4.34)' इति श्रुतेः।।

किञ्च --
।।5.14।। --
न कर्तृत्वं स्वतः कुरु इति नापि कर्माणि रथघटप्रासादादीनि ईप्सिततमानि लोकस्य सृजति
उत्पादयति प्रभुः आत्मा। नापि रथादि कृतवतः तत्फलेन संयोगं न कर्मफलसंयोगम्। यदि
किञ्चिदपि स्वतः न करोति न कारयति च देही, कः तर्हि कुर्वन् कारयंश्च प्रवर्तते इति, उच्यते -- स्वभावस्तु स्वो भावः स्वभावः अविद्यालक्षणा प्रकृतिः माया प्रवर्तते 'दैवी हि' इत्यादिना वक्ष्यमाणा।।

परमार्थतस्तु --
।।5.15।। --
न आदत्ते न च गृह्णाति भक्तस्यापि कस्यचित् पापम्। न चैव आदत्ते सुकृतं भक्तैः प्रयुक्तं विभुः। किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकं च सुकृतं प्रयुज्यते इत्याह -- अज्ञानेन आवृतं ज्ञानं विवेकविज्ञानम्, तेन मुह्यन्ति 'करोमि कारयामि भोक्ष्ये भोजयामि' इत्येवं मोहं गच्छन्ति अविवेकिनः संसारिणो जन्तवः।।

।।5.16।। --
ज्ञानेन तु येन अज्ञानेन आवृताः मुह्यन्ति जन्तवः तत् अज्ञानं येषां जन्तूनां विवेकज्ञानेन
आत्मविषयेण नाशितम् आत्मनः भवति, तेषां जन्तूनाम् आदित्यवत् यथा आदित्यः समस्तं
रूपजातम् अवभासयति तद्वत् ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति तत् परं परमार्थतत्त्वम्।।

यत् परं ज्ञानं प्रकाशितम् --
।।5.17।। --
तस्मिन् ब्रह्मणि गता बुद्धिः येषां ते तद्बुद्धयः, तदात्मानः तदेव परं ब्रह्म आत्मा येषां ते तदात्मानः, तन्निष्ठाः निष्ठा अभिनिवेशः तात्पर्यं सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येव अवस्थानं येषां ते तन्निष्ठाः, तत्परायणाश्च तदेव परम् अयनं परा गतिः येषां भवति ते तत्परायणाः केवलात्मरतय इत्यर्थः। येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते गच्छन्ति एवंविधाः अपुनरावृत्तिम् अपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषाः यथोक्तेन ज्ञानेन निर्धूतः नाशितः कल्मषः पापादिसंसारकारणदोषः येषां ते ज्ञाननिर्धूतकल्मषाः यतयः इत्यर्थः।।

येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्ति इत्युच्यते --
।।5.18।। --
विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ, विद्या आत्मनो बोधो विनयः उपशमः, ताभ्यां विद्याविनयाभ्यां संपन्नः विद्याविनयसंपन्नः विद्वान् विनीतश्च यो ब्राह्मणः तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनः। विद्याविनयसंपन्ने उत्तमसंस्कारवति ब्राह्मणे सात्त्विके, मध्यमायां च राजस्यां गवि, संस्कारहीनायाम् अत्यन्तमेव केवलतामसे हस्त्यादौ च,सत्त्वादिगुणैः तज्जैश्च संस्कारैः तथा राजसैः तथा तामसैश्च संस्कारैः अत्यन्तमेव अस्पृष्टं
समम् एकम् अविक्रियं तत् ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः।।

ननु अभोज्यान्नाः ते दोषवन्तः, 'समासमाभ्यां विषमसमे पूजातः (गौ0 स्म0 17.20)' इति स्मृतेः। न ते दोषवन्तः। कथम्? --
।।5.19।। --
इह एव जीवद्भिरेव तैः समदर्शिभिः पण्डितैः जितः वशीकृतः सर्गः जन्म, येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनः अन्तःकरणम्। निर्दोषं यद्यपि दोषवत्सु श्वपाकादिषु मूढैः तद्दोषैः दोषवत् इव विभाव्यते, तथापि तद्दोषैः अस्पृष्टम् इति निर्दोषं दोषवर्जितं हि यस्मात्; नापि स्वगुणभेदभिन्नम्, निर्गुणत्वात् चैतन्यस्य। वक्ष्यति च भगवान् इच्छादीनां क्षेत्रधर्मत्वम्, 'अनादित्वान्निर्गुणत्वात् (गीता 13.31)' इति च। नापि अन्त्या विशेषाः आत्मनो भेदकाः सन्ति, प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेः। अतः समं ब्रह्म एकं च। तस्मात् ब्रह्मणि एव ते स्थिताः। तस्मात् न दोषगन्धमात्रमपि तान् स्पृशति, देहादिसंघातात्मदर्शनाभिमानाभावात् तेषाम्। देहादिसंघातात्मदर्शनाभिमानवद्विषयं तु तत् सूत्रम् 'समासमाभ्यां विषमसमे पूजातः (गौ0 स्मृ0 17.20)' इति, पूजाविषयत्वेन विशेषणात्। दृश्यते हि ब्रह्मवित् षडङ्गवित् चतुर्वेदवित् इति पूजादानादौ गुणविशेषसंबन्धः कारणम्। ब्रह्म तु
सर्वगुणदोषसंबन्धवर्जितमित्यतः 'ब्रह्मणि ते स्थिताः' इति युक्तम्। कर्मविषयं च 'समासमाभ्याम्' इत्यादि। इदं तु सर्वकर्मसंन्यासविषयं प्रस्तुतम्, 'सर्वकर्माणि मनसा (गीता 5.13)' इत्यारभ्य आध्यायपरिसमाप्तेः।।

यस्मात् निर्दोषं समं ब्रह्म आत्मा, तस्मात् --
।।5.20।। --
न प्रहृष्येत् प्रहर्षं न कुर्यात् प्रियम् इष्टं प्राप्य लब्ध्वा। न उद्विजेत् प्राप्य च अप्रियम् अनिष्टं लब्ध्वा। देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादौ कुर्वाते, न केवलात्मदर्शिनः, तस्य प्रियाप्रियप्राप्त्यसंभवात्। किञ्च -- 'सर्वभूतेषु एकः समः निर्दोषः आत्मा' इति स्थिरा निर्विचिकित्सा बुद्धिः यस्य सः स्थिरबुद्धिः असंमूढः संमोहवर्जितश्च स्यात् यथोक्तब्रह्मवित् ब्रह्मणि स्थितः, अकर्मकृत् सर्वकर्मसंन्यासी इत्यर्थः

किञ्च, ब्रह्मणि स्थितः --
।।5.21।। --
बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्ते इति स्पर्शाः शब्दादयो विषयाः तेषु बाह्यस्पर्शेषु, असक्तः आत्मा अन्तःकरणं यस्य सः अयम् असक्तात्मा विषयेषु प्रीतिवर्जितः सन् विन्दति लभते आत्मनि यत् सुखं तत् विन्दति इत्येतत्। स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिः ब्रह्मयोगः तेन ब्रह्मयोगेन युक्तः समाहितः तस्मिन् व्यापृतः आत्मा अन्तःकरणं यस्य सः ब्रह्मयोगयुक्तात्मा, सुखम् अक्षयम् अश्नुते व्याप्नोति। तस्मात् बाह्यविषयप्रीतेः क्षणिकायाः इन्द्रियाणि निवर्तयेत् आत्मनि अक्षयसुखार्थी इत्यर्थः।।

इतश्च निवर्तयेत् --
।।5.22।। --
ये हि यस्मात् संस्पर्शजाः विषयेन्द्रियसंस्पर्शेभ्यो जाताः भोगा भुक्तयः दुःखयोनय एव ते, अविद्याकृतत्वात्। दृश्यन्ते हि आध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव। यथा इहलोके तथा परलोकेऽपि इति गम्यते एवशब्दात्। न संसारे सुखस्य गन्धमात्रमपि अस्ति इति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि निवर्तयेत्। न केवलं दुःखयोनय , आद्यन्तवन्तश्च, आदिः विषयेन्द्रियसंयोगो भोगानाम् अन्तश्च तद्वियोग एव; अतः आद्यन्तवन्तः अनित्याः, मध्यक्षणभावित्वात् इत्यर्थः। कौन्तेय, न तेषु भोगेषु रमते बुधः विवेकी अवगतपरमार्थतत्त्वः; अत्यन्तमूढानामेव हि विषयेषु रतिः दृश्यते, यथा पशुप्रभृतीनाम्।।

अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुः दुर्निवारश्च इति तत्परिहारे यत्नाधिक्यं कर्तव्यम् इत्याह भगवान् --
।।5.23।। --
शक्नोति उत्सहते इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक् पूर्वं शरीरविमोक्षणात् आमरणात्

इत्यर्थः। मरणसीमाकरणं जीवतोऽवश्यंभावि हि कामक्रोधोद्भवो वेगः, अनन्तनिमित्तवान् हि सः इति यावत् मरणं तावत् न विश्रम्भणीय इत्यर्थः। कामः इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे वा अनुभूते सुखहेतौ या गर्धिः तृष्णा स कामः; क्रोधश्च आत्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः सः क्रोधः; तौ कामक्रोधौ उद्भवो यस्य वेगस्य सः कामक्रोधोद्भवः वेगः। रोमाञ्चनप्रहृष्टनेत्रवदनादिलिङ्गः अन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः, गात्रप्रकम्पप्रस्वेदसंदष्टोष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगः, तं कामक्रोधोद्भवं वेगं यः उत्सहते प्रसहते सोढुं प्रसहितुम्, सः युक्तः योगी सुखी च इह लोके नरः।।

कथंभूतश्च ब्रह्मणि स्थितः ब्रह्म प्राप्नोति इति आह भगवान् --

## यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
## एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥५.५॥

yatsāṅ-khyaiḥ prāpyate sthānaṃ tadyogairapi gamyate |
ekaṃ sāṅ-khyaṃ ca yogaṃ ca yaḥ paśyati sa paśyati ||5.5||

**यत्** $^{1/1}$ **साङ्ख्यैः** $^{3/3}$ **प्राप्यते** $^{III/1}$ **स्थानम्** $^{1/1}$ **तत्** $^{1/1}$ **योगैः** $^{3/3}$ **अपि** $^{0}$ **गम्यते** $^{III/1}$ ।
**एकम्** $^{2/1}$ **साङ्ख्यम्** $^{2/1}$ **च** $^{0}$ **योगम्** $^{2/1}$ **च** $^{0}$ **यः** $^{1/1}$ **पश्यति** $^{III/1}$ **सः** $^{1/1}$ **पश्यति** $^{III/1}$ ॥५.५॥

- **यत्** [yat] = that which = **यद्** (pron. n.) + 1/1
- **साङ्ख्यैः** [sāṅkhyaiḥ] = by the *sannyāsin*s = **साङ्ख्य** (m.) + 3/3
- **प्राप्यते** [prāpyate] = is gained = **प्र** + **आप्** (5P) to gain + **लट्**/**कर्मणि**/III/1
- **स्थानम्** [sthānam] = the goal = **स्थान** (n.) + 1/1
- **तत्** [tat] = that = **तद्** (pron. n.) + 1/1
- **योगैः** [yogaiḥ] = by the *karma-yogin*s = **योग** (m.) + 3/3
- **अपि** [api] = also = **अव्ययम्**
- **गम्यते** [gamyate] = is gained = **गम्** (1P) to reach + **लट्**/**कर्मणि**/III/1

- एकम् [ekam] = one = एक (pron. m.) + 2/1
- साङ्ख्यम् [sāṅkhyam] = knowledge = साङ्ख्य (m.) + 2/1
- च [ca] = and = अव्ययम्
- योगम् [yogam] = *karma-yoga* = योग (m.) + 2/1
- च [ca] = and = अव्ययम्
- यः [yaḥ] = one who = यद् (pron. m.) + 1/1
- पश्यति [paśyati] = sees = दृश् (1P) to see + लट्/कर्तरि/III/1
- सः [saḥ] = he = तद् (pron. m.) + 1/1
- पश्यति [paśyati] = sees = दृश् (1P) to see + लट्/कर्तरि/III/1

The end (*mokṣa*) that is gained by the *sannyāsin*s is also reached by the *karma yogin*s. The one who sees knowledge and karma yoga as one, that person (alone) sees (the truth).

Sentence 1:

यत् $^{1/1}$ स्थानम् $^{1/1}$ साङ्ख्यैः $^{3/3}$ प्राप्यते $^{III/1}$ तत् $^{1/1}$ योगैः $^{3/3}$ अपि $^{0}$ गम्यते $^{III/1}$ ।
The end (*mokṣa*) (स्थानम् $^{1/1}$) that (यत् $^{1/1}$) is gained (प्राप्यते $^{III/1}$) by the *sannyāsin*s (साङ्ख्यैः $^{3/3}$) is also (तत् $^{1/1}$ अपि $^{0}$) reached (गम्यते $^{III/1}$) by the *karma yogin*s (योगैः $^{3/3}$).

Sentence 2:

यः $^{1/1}$ साङ्ख्यम् $^{2/1}$ च $^{0}$ योगम् $^{2/1}$ च $^{0}$ एकम् $^{2/1}$ पश्यति $^{III/1}$ सः $^{1/1}$ पश्यति $^{III/1}$ ॥५.५॥
The one who (यः $^{1/1}$) sees () knowledge (साङ्ख्यम् $^{2/1}$) and (च $^{0}$) *karma-yoga* (योगम् $^{2/1}$) as one (एकम् $^{2/1}$), that person (सः $^{1/1}$) (alone) sees (पश्यति $^{III/1}$) (the truth).

एकस्य $^{6/1}$ अपि $^{0}$ सम्यक्-अनुष्ठानात् $^{5/1}$ कथम् $^{0}$ उभयोः $^{6/2}$ फलम् $^{2/1}$ विन्दते $^{III/1}$ इति $^{0}$ उच्यते $^{III/1}$ --

यत् $^{1/1}$ साङ्ख्यैः $^{3/3}$ ज्ञाननिष्ठैः $^{3/3}$ संन्यासिभिः $^{3/3}$ प्राप्यते $^{III/1}$ स्थानम् $^{1/1}$ मोक्ष-आख्यम् $^{1/1}$, तत् $^{1/1}$ योगैः $^{3/3}$ अपि $^{0}$ [ज्ञान-प्राप्ति-उपायत्वेन $^{3/1}$ ईश्वरे $^{7/1}$ समर्प्य $^{0}$ कर्माणि $^{2/3}$ आत्मनः $^{6/1}$ फलम् $^{2/1}$ अनभिसंधाय $^{0}$ अनुतिष्ठन्ति $^{III/3}$ ये $^{1/3}$ ते $^{1/3}$ योगाः $^{1/3}$ योगिनः $^{1/3}$] तैः $^{3/3}$ अपि $^{0}$ परमार्थ-ज्ञान-संन्यास-प्राप्ति-द्वारेण $^{3/1}$ गम्यते $^{III/1}$ इत्यभिप्रायः $^{1/1}$। अतः $^{0}$ एकम् $^{2/1}$ साङ्ख्यम् $^{2/1}$ च $^{0}$ योगम् $^{2/1}$ च $^{0}$ यः $^{1/1}$ पश्यति $^{III/1}$ फल-एकत्वात् $^{5/1}$ सः $^{1/1}$ सम्यक् $^{0}$ पश्यति $^{III/1}$ इत्यर्थः $^{1/1}$॥

एवम् $^{0}$ तर्हि $^{0}$ योगात् $^{5/1}$ संन्यासः $^{1/1}$ एव $^{0}$ विशिष्यते $^{III/1}$। कथम् $^{0}$ तर्हि $^{0}$ इदम् $^{1/1}$ उक्तम् $^{1/1}$ "तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते (गीता 5.2)" इति? । श्रृणु $^{II/1}$ तत्र $^{0}$ कारणम् $^{2/1}$। त्वया $^{3/1}$ पृष्टम् $^{1/1}$ केवलम् $^{2/1}$ कर्मसंन्यासम् $^{2/1}$ कर्मयोगम् $^{2/1}$ च $^{0}$ अभिप्रेत्य $^{0}$ तयोः $^{6/2}$ अन्यतरः $^{1/1}$ कः $^{1/1}$ श्रेयान् $^{1/1}$ इति $^{0}$। तद्-अनुरूपम् $^{1/1}$ प्रतिवचनम् $^{1/1}$ मया $^{3/1}$ उक्तम् $^{1/1}$ "कर्मसंन्यासात् $^{5/1}$ कर्मयोगः $^{1/1}$ विशिष्यते $^{III/1}$" इति $^{0}$ ज्ञानम् $^{2/1}$ अनपेक्ष्य $^{0}$। ज्ञान-अपेक्षः $^{1/1}$ तु $^{0}$ संन्यासः $^{1/1}$ सांख्यम् $^{1/1}$ इति $^{0}$ मया $^{3/1}$ अभिप्रेतः $^{1/1}$। परमार्थयोगः $^{1/1}$ च $^{0}$ सः $^{1/1}$ एव $^{0}$। यः $^{1/1}$ तु $^{0}$ कर्मयोगः $^{1/1}$ वैदिकः $^{1/1}$ सः $^{1/1}$ च $^{0}$ तादर्थ्यात् $^{5/1}$ योगः $^{1/1}$ संन्यासः $^{1/1}$ इति $^{0}$ च $^{0}$ उपचर्यते $^{III/1}$॥

## सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
## योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥५.६॥

sannyāsastu mahābāho duḥkhamāptumayogataḥ |
yogayukto munirbrahma nacireṇādhigacchati ||5.6||

सन्न्यासः $^{1/1}$ तु $^{0}$ महाबाहो $^{S/1}$ दुःखम् $^{0}$ आप्तुम् $^{0}$ अयोगतः $^{0}$ ।
योगयुक्तः $^{1/1}$ मुनिः $^{1/1}$ ब्रह्म $^{2/1}$ नचिरेण $^{0}$ अधिगच्छति $^{III/1}$ ॥५.६॥

- सन्न्यासः [sannyāsaḥ] = renunciation (of action) = सन्न्यास (m.) + 1/1
- तु [tu] = whereas = अव्ययम्
- महाबाहो [mahābāho] = Oh! Mighty armed one! = महाबाहु (m.) + सम्बोधने 1/1
- दुःखम् [duḥkham] = difficult = अव्ययम्
- आप्तुम् [āptum] = to gain = अव्ययम्
- अयोगतः [ayogataḥ] = without *karma yoga* = अव्ययम्
- योगयुक्तः [yogayuktaḥ] = one who is committed to a life of karma yoga = योगयुक्त (m.) + 1/1

- मुनिः [muniḥ] = one who is capable of reasoning = मुनि (m.) + 1/1
- ब्रह्म [brahma] = *Brahman* = ब्रह्मन् (n.) + कर्मणि 2/1
- नचिरेण [nacireṇa] = quickly = अव्ययम्
- अधिगच्छति [adhigacchati] = gains = अधि + गम् (1P) to gain + लट्/कर्तरि/III/1

Renunciation of action, O Arjuna, is difficult to accomplish without karma yoga. Whereas, one who is capable of reasoning, who is committed to a life of karma yoga, gains Brahman quickly.

Sentence 1:

महाबाहो $^{S/1}$ सन्न्यासः $^{1/1}$ दुःखम् $^{0}$ आप्तुम् $^{0}$ अयोगतः $^{0}$ ।
Renunciation of action (सन्न्यासः $^{1/1}$), O Arjuna (महाबाहो $^{S/1}$), is difficult (दुःखम् $^{0}$) to accomplish (आप्तुम् $^{0}$) without *karma yoga* (अयोगतः $^{0}$).

Sentence 2:

योगयुक्तः $^{1/1}$ तु $^{0}$ मुनिः $^{1/1}$ ब्रह्म $^{2/1}$ नचिरेण $^{0}$ अधिगच्छति $^{III/1}$ ॥५.६॥
Whereas (तु $^{0}$), one who is capable of reasoning (मुनिः $^{1/1}$), who is committed to a life of *karma yoga* (योगयुक्तः $^{1/1}$), gains (अधिगच्छति $^{III/1}$) *Brahman* (ब्रह्म $^{2/1}$) quickly (नचिरेण $^{0}$).

कथम् $^{0}$ तादर्थ्यम् $^{1/1}$ इति $^{0}$ उच्यते $^{III/}$ --
सन्न्यासः $^{1/1}$ तु $^{0}$ पारमार्थिकः $^{1/1}$ हे $^{0}$ महाबाहो $^{S/1}$ दुःखम् $^{0}$ आप्तुम् $^{0}$ अयोगतः $^{0}$ योगेन $^{3/1}$ विना $^{0}$ । योगयुक्तः $^{1/1}$ वैदिकेन $^{3/1}$ कर्मयोगेन $^{3/1}$ ईश्वर-समर्पित-रूपेण $^{3/1}$ फल-निरपेक्षेण $^{3/1}$ युक्तः $^{1/1}$, मुनिः $^{1/1}$ मननात् $^{5/1}$ ईश्वर-स्वरूपस्य $^{6/1}$ मुनिः $^{1/1}$, ब्रह्म $^{2/1}$ परमात्म-ज्ञान-निष्ठा-लक्षणत्वात् $^{5/1}$ प्रकृतः $^{1/1}$ संन्यासः $^{1/1}$ ब्रह्म $^{1/1}$ उच्यते $^{III/1}$। "न्यास इति ब्रह्मा ब्रह्मा हि परः (ना. उ. 2.78)" इति $^{0}$ श्रुतेः $^{5/1}$ – ब्रह्म $^{2/1}$ परमार्थ-सन्न्यासम् $^{2/1}$ परमार्थ-ज्ञान-निष्ठा-लक्षणम् $^{2/1}$ नचिरेण $^{0}$ क्षिप्रम् $^{0}$ एव $^{0}$ अधिगच्छति $^{III/1}$ प्राप्नोति $^{III/1}$। अतः $^{0}$ मया $^{3/1}$ उक्तम् $^{1/1}$ "कर्मयोगो विशिष्यते" इति $^{0}$॥

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥५.७॥**

yogayukto viśuddhātmā vijitātmā jitendriyaḥ |
sarvabhūtātmabhūtātmā kurvannapi na lipyate ||5.7||

योगयुक्तः $^{1/1}$ विशुद्धात्मा $^{1/1}$ विजितात्मा $^{1/1}$ जितेन्द्रियः $^{1/1}$ ।
सर्वभूतात्मभूतात्मा $^{1/1}$ कुर्वन् $^{1/1}$ अपि $^{0}$ न $^{0}$ लिप्यते $^{III/1}$ ॥५.७॥

- योगयुक्तः [yogayuktaḥ] = one who is committed to a life of *karma yoga* = योगयुक्त (m.) + 1/1
    - योगेन युक्तः योगयुक्तः (3T) ।
- विशुद्धात्मा [viśuddhātmā] = one whose mind is purified = विशुद्धात्मन् (m.) + 1/1
    - विशुद्धः आत्मा अन्तःकरणं यस्य सः विशुद्धात्मा (116B) ।
- विजितात्मा [vijitātmā] = one who has mastered the body = विजितात्मन् (m.) + 1/1
    - विजितः आत्मा देहः येन सः विजितात्मा (113B) ।
- जितेन्द्रियः [viśuddhātmā] = one who has the sense organs under control = जितेन्द्रिय (m.) + 1/1
    - जितानि इन्द्रियाणि येन सः जितेन्द्रियः (113B) ।
- सर्वभूतात्मभूतात्मा [sarvabhūtātmabhūtātmā] = one who knows oneself to be the self in all beings = सर्वभूतात्मभूतात्मन् (m.) + 1/1
    - सर्वेषां भूतानाम् आत्मा सर्वभूतात्मा (6T) ।
    - सर्वभूतात्मानम् भूतः (2T)
    - सर्वभूतात्माभूतः आत्मा यस्य सः सर्वभूतात्मभूतात्मा (116B) ।
- कुर्वन् [kurvan] = doing = कुर्वत् (m.) + 1/1
- अपि [api] = even = अव्ययम्
- न [na] = not = अव्ययम्
- लिप्यते [lipyate] = is touched = लिप् (6P) to gain + लट्/कर्मणि/III/1

One whose mind is purified by being committed to a life of karma yoga, who has mastered the body and has the sense organs under control, and who knows oneself to be the self in all beings, (such a person) is not affected even while doing (actions).

Sentence 1:
One whose mind is purified (विशुद्धात्मा $^{1/1}$) by being committed to a life of *karma yoga* (योगयुक्तः $^{1/1}$), who has mastered the body (विजितात्मा $^{1/1}$) and has the sense organs under control (जितेन्द्रियः $^{1/1}$), and who knows oneself to be the self in all beings (सर्वभूतात्मभूतात्मा $^{1/1}$), (such a person) is not affected (न $^{0}$ लिप्यते $^{III/1}$) even (अपि $^{0}$) while doing (कुर्वन् $^{1/1}$) (actions).

यदा $^{0}$ पुनः $^{0}$ अयम् $^{1/1}$ (पुरुषः $^{1/1}$) सम्यग्ज्ञान-प्राप्ति-उपायेन $^{3/1}$ –
योगेन $^{3/1}$ युक्तः $^{1/1}$ योगयुक्तः $^{1/1}$, विशुद्धात्मा $^{1/1}$ विशुद्ध-सत्त्वः $^{1/1}$, विजितात्मा $^{1/1}$ विजितदेहः $^{1/1}$, जितेन्द्रियः $^{1/1}$ च $^{0}$। सर्वभूतात्मभूतात्मा $^{1/1}$ सर्वेषाम् $^{6/3}$ ब्रह्मादीनाम् $^{6/3}$ स्तम्बपर्यन्तानाम् $^{6/3}$ भूतानाम् $^{6/3}$ आत्मभूतः $^{1/1}$ आत्मा $^{1/1}$ प्रत्यक्-चेतनः $^{1/1}$ यस्य $^{6/1}$ सः $^{1/1}$ सर्वभूतात्मभूतात्मा $^{1/1}$ सम्यग्दर्शी $^{1/1}$ इत्यर्थः $^{1/1}$। सः $^{1/1}$ तत्र $^{0}$ एवम् $^{0}$ वर्तमानः $^{1/1}$ लोक-संग्रहाय $^{4/1}$ कर्म $^{2/1}$ कुर्वन् $^{1/1}$ अपि $^{0}$ न $^{0}$ लिप्यते $^{III/1}$ न $^{0}$ कर्मभिः $^{3/3}$ बध्यते $^{III/1}$ इत्यर्थः $^{1/1}$॥

**नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ् शृण्वन् स्पृशञ् जिघ्रन्नश्नन् गच्छन् स्वपञ् श्वसन्  ॥५.८॥**

naiva kiñcit karomīti yukto manyeta tattvavit |
paśyañ śṛṇvan spṛśañ jighrannaśnan gacchan svapañ śvasan  ||5.8||

न $^{0}$ एव $^{0}$ किञ्चित् $^{0}$ करोमि $^{I/1}$ इति $^{0}$ युक्तः $^{1/1}$ मन्येत $^{III/1}$ तत्त्ववित् $^{1/1}$ ।
पश्यन् $^{1/1}$ शृण्वन् $^{1/1}$ स्पृशन् $^{1/1}$ जिघ्रन् $^{1/1}$ अश्नन् $^{1/1}$ गच्छन् $^{1/1}$ स्वपन् $^{1/1}$ श्वसन् $^{1/1}$  ॥५.८॥

- न [na] = not = अव्ययम्
- एव [eva] = at all = अव्ययम्
- किञ्चित् [kiñcit] = anything = अव्ययम्
- करोमि [karomi] = I do = कृ (8U) to do + लट्/कर्तरि/I/1
- इति [iti] = thus = अव्ययम्
- युक्तः [yuktaḥ] = one who is together = युक्त (m.) + 1/1
- मन्येत [manyeta] = thinks = मन् (4A) to think + लट्/कर्तरि/III/1
- पश्यन् [paśyan] = seeing = पश्यत् (m.) + 1/1
    - दृश् (1P) to see + शतृ (लट्/कर्तरि)
- शृण्वन् [śṛṇvan] = hearing = शृण्वत् (m.) + 1/1
    - श्रु (1P) to hear + शतृ (लट्/कर्तरि)
- स्पृशन् [spṛśan] = touching = स्पृशत् (m.) + 1/1
    - स्पृश् (6P) to touch + शतृ (लट्/कर्तरि)
- जिघ्रन् [jighran] = smelling = जिघ्रत् (m.) + 1/1
    - घ्रा (3P) to smell + शतृ (लट्/कर्तरि)
- अश्नन् [aśnan] = eating = अश्नत् (m.) + 1/1
    - अश् (9P) to eat + शतृ (लट्/कर्तरि)
- गच्छन् [gacchan] = walking = गच्छत् (m.) + 1/1
    - गम् (1P) to go + शतृ (लट्/कर्तरि)
- स्वपन् [svapan] = sleeping = स्वपत् (m.) + 1/1
    - स्वप् (2P) to sleep + शतृ (लट्/कर्तरि)
- श्वसन् [śvasan] = breathing = श्वसत् (m.) + 1/1
    - श्वस् (2P) to breathe + शतृ (लट्/कर्तरि)

The one who is together, who knows the truth, thinks, 'I do not do anything at all,' even while seeing, hearing, touching, smelling, eating, walking, sleeping, breathing, …

Sentence 1:

युक्तः $^{1/1}$ तत्त्ववित् $^{1/1}$ न $^{0}$ एव $^{0}$ किञ्चित् $^{0}$ करोमि $^{I/1}$ इति $^{0}$ मन्येत $^{III/1}$ ।
पश्यन् $^{1/1}$ शृण्वन् $^{1/1}$ स्पृशन् $^{1/1}$ जिघ्रन् $^{1/1}$ अश्नन् $^{1/1}$ गच्छन् $^{1/1}$ स्वपन् $^{1/1}$ श्वसन् $^{1/1}$ ॥५.८॥

The one who is together (युक्तः $^{1/1}$), who knows the truth (तत्त्ववित् $^{1/1}$), thinks (मन्येत $^{III/1}$), 'I do not (न $^{0}$) do (करोमि $^{I/1}$) anything (किञ्चित् $^{0}$) at all (एव $^{0}$)' (इति $^{0}$) even while seeing (पश्यन् $^{1/1}$), hearing (शृण्वन् $^{1/1}$), touching (स्पृशन् $^{1/1}$), smelling (जिघ्रन् $^{1/1}$), eating (अश्नन् $^{1/1}$), walking (गच्छन् $^{1/1}$), sleeping (स्वपन् $^{1/1}$), breathing (श्वसन् $^{1/1}$ ), …

न $^{0}$ च $^{0}$ असौ $^{1/1}$ परमार्थतः $^{0}$ करोति $^{III/1}$ इत्यतः $^{0}$ –
न $^{0}$ एव $^{0}$ किञ्चित् $^{0}$ करोमि $^{I/1}$ इति $^{0}$ युक्तः $^{1/1}$ समाहितः $^{1/1}$ सन् $^{1/1}$ मन्येत $^{III/1}$ चिन्तयेत् $^{III/1}$, तत्त्ववित् $^{1/1}$ आत्मनः $^{6/1}$ याथात्म्यम् $^{0}$ तत्त्वम् $^{2/1}$ वेत्ति $^{III/1}$ इति $^{0}$ तत्त्ववित् $^{1/1}$ परमार्थ-दर्शी $^{1/1}$ इत्यर्थः $^{1/1}$॥ कदा $^{0}$ कथम् $^{0}$ वा $^{0}$ तत्त्वम् $^{2/1}$ अवधारयन् $^{1/1}$ मन्येत $^{III/1}$ इति $^{0}$, उच्यते $^{III/1}$ – पश्यन् $^{1/1}$ इति $^{0}$ । मन्येत $^{III/1}$ इति $^{0}$ पूर्वेण $^{3/1}$ संबन्धः $^{1/1}$। यस्य $^{6/1}$ एवम् $^{0}$ तत्त्वविदः $^{6/1}$ सर्व-कार्य-करण-चेष्टासु $^{7/3}$ कर्मसु $^{7/3}$ अकर्म $^{2/1}$ एव $^{0}$, पश्यतः $^{6/1}$ सम्यग्दर्शिनः $^{6/1}$ तस्य $^{6/1}$ सर्वकर्मसंन्यासे $^{7/1}$ एव $^{0}$ अधिकारः $^{1/1}$, कर्मणः $^{6/1}$ अभाव-दर्शनात् $^{5/1}$। न $^{0}$ हि $^{0}$ मृग-तृष्णिकायाम् $^{7/1}$ उदक-बुद्ध्या $^{3/1}$ पानाय $^{4/1}$ प्रवृत्तः $^{1/1}$ उदक-अभाव-ज्ञाने $^{7/1}$ अपि $^{0}$ तत्र $^{0}$ एव $^{0}$ पान-प्रयोजनाय $^{7/1}$ प्रवर्तते $^{III/1}$ ॥

यस्तु पुनः अतत्त्ववित् प्रवृत्तश्च कर्मयोगे --
।।5.10।। --
ब्रह्मणि ईश्वरे आधाय निक्षिप्य' तदर्थं कर्म करोमि' इति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि
मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वकर्माणि, लिप्यते न स पापेन न संबध्यते
पद्मपत्रमिव अम्भसा उदकेन। केवलं सत्त्वशुद्धिमात्रमेव फलं तस्य कर्मणः स्यात्।।
यस्मात् --
।।5.11।। --
कायेन देहेन मनसा बुद्ध्या च केवलैः ममत्ववर्जितैः' ईश्वरायैव कर्म करोमि, न मम फलाय' इति ममत्वबुद्धिशून्यैः इन्द्रियैरपि -- केवलशब्दः कायादिभिरपि प्रत्येकं संबध्यते -- सर्वव्यापारेषु ममतावर्जनाय। योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयम् आत्मशुद्धये सत्त्वशुद्धये इत्यर्थः। तस्मात् तत्रैव तव अधिकारः इति कुरु कर्मैव।।

यस्माच्च --
।।5.12।। --
युक्तः' ईश्वराय कर्माणि करोमि न मम फलाय' इत्येवं समाहितः सन् कर्मफलं त्यक्त्वा
परित्यज्य शान्तिं मोक्षाख्याम् आप्नोति नैष्ठिकीं निष्ठायां भवां
सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः। यस्तु पुनः अयुक्तः असमाहितः कामकारेण करणं कारः कामस्य कारः कामकारः तेन कामकारेण, कामप्रेरिततयेत्यर्थः, 'मम फलाय इदं करोमि कर्म' इत्येवं फले सक्तः निबध्यते। अतः त्वं युक्तो भव इत्यर्थः।।

यस्तु परमार्थदर्शी सः --
।।5.13।। --
सर्वाणि कर्माणि सर्वकर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च तानि
सर्वाणि कर्माणि मनसा विवेकबुद्ध्या, कर्मादौ अकर्मसंदर्शनेन संत्यज्येत्यर्थः, आस्ते तिष्ठति
सुखम्। त्यक्तवाङ्मनःकायचेष्टः निरायासः प्रसन्नचित्तः आत्मनः अन्यत्र निवृत्तसर्वबाह्यप्रयोजनः इति 'सुखम् आस्ते' इत्युच्यते। वशी जितेन्द्रिय इत्यर्थः। क्व कथम् आस्ते इति, आह -- नवद्वारे पुरे। सप्त शीर्षण्यानि आत्मन उपलब्धिद्वाराणि, अवाग् द्वे मूत्रपुरीषविसर्गार्थे, तैः द्वारैः नवद्वारं पुरम् उच्यते शरीरम्, पुरमिव पुरम्, आत्मैकस्वामिकम्, तदर्थप्रयोजनैश्च इन्द्रियमनोबुद्धिविषयैः अनेकफलविज्ञानस्य उत्पादकैः पौरैरिव अधिष्ठितम्। तस्मिन् नवद्वारे पुरे देही सर्वं कर्म संन्यस्य आस्ते; किं विशेषणेन? सर्वो हि देही संन्यासी असंन्यासी वा देहे एव आस्ते; तत्र अनर्थकं विशेषणमिति। उच्यते -- यस्तु अज्ञः देही देहेन्द्रियसंघातमात्रात्मदर्शी स
सर्वोऽपि 'गेहे भूमौ आसने वा आसे' इति मन्यते। न हि देहमात्रात्मदर्शिनः गेहे इव देहे आसे इति प्रत्ययः संभवति। देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु 'देहे आसे' इति प्रत्ययः उपपद्यते। परकर्मणां च परस्मिन् आत्मनि अविद्यया अध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते। उत्पन्नविवेकज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेहे इव देहे एव नवद्वारे पुरे आसनम्
प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेः। देहे एव आस्ते इति अस्त्येव
विशेषणफलम्, विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात्।।
यद्यपि कार्यकरणकर्माणि अविद्यया आत्मनि अध्यारोपितानि' संन्यस्यास्ते' इत्युक्तम्, तथापि
आत्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यात् इति आशङ्क्य आह -- नैव कुर्वन् स्वयम्, न च कार्यकरणानि कारयन् क्रियासु प्रवर्तयन्। किं यत् तत् कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायि सत् संन्यासात् न संभवति, यथा गच्छतो गतिः गमनव्यापारपरित्यागे न स्यात् तद्वत्? किं वा स्वत एव आत्मनः न अस्ति इति? अत्र उच्यते -- न अस्ति आत्मनः स्वतः कर्तृत्वं कारयितृत्वं च। उक्तं हि 'अविकार्योऽयमुच्यते (गीता 2.25)' 'शरीरस्थोऽपि न करोति न लिप्यते (गीता 13.31)' इति।' ध्यायतीव लेलायतीव (बृ0 उ0 4.34)' इति श्रुतेः।।

किञ्च --
।।5.14।। --
न कर्तृत्वं स्वतः कुरु इति नापि कर्माणि रथघटप्रासादादीनि ईप्सिततमानि लोकस्य सृजति
उत्पादयति प्रभुः आत्मा। नापि रथादि कृतवतः तत्फलेन संयोगं न कर्मफलसंयोगम्। यदि
किञ्चिदपि स्वतः न करोति न कारयति च देही, कः तर्हि कुर्वन् कारयंश्च प्रवर्तते इति, उच्यते -- स्वभावस्तु स्वो भावः स्वभावः अविद्यालक्षणा प्रकृतिः माया प्रवर्तते 'दैवी हि' इत्यादिना वक्ष्यमाणा।।

परमार्थतस्तु --
।।5.15।। --

न आदत्ते न च गृह्णाति भक्तस्यापि कस्यचित् पापम्। न चैव आदत्ते सुकृतं भक्तैः प्रयुक्तं विभुः। किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकं च सुकृतं प्रयुज्यते इत्याह -- अज्ञानेन आवृतं ज्ञानं विवेकविज्ञानम्, तेन मुह्यन्ति 'करोमि कारयामि भोक्ष्ये भोजयामि' इत्येवं मोहं गच्छन्ति अविवेकिनः संसारिणो जन्तवः।।

।।5.16।। --
ज्ञानेन तु येन अज्ञानेन आवृताः मुह्यन्ति जन्तवः तत् अज्ञानं येषां जन्तूनां विवेकज्ञानेन आत्मविषयेण नाशितम् आत्मनः भवति, तेषां जन्तूनाम् आदित्यवत् यथा आदित्यः समस्तं रूपजातम् अवभासयति तद्वत् ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति तत् परं परमार्थतत्त्वम्।।

यत् परं ज्ञानं प्रकाशितम् --
।।5.17।। --
तस्मिन् ब्रह्मणि गता बुद्धिः येषां ते तद्बुद्धयः, तदात्मानः तदेव परं ब्रह्म आत्मा येषां ते तदात्मानः, तन्निष्ठाः निष्ठा अभिनिवेशः तात्पर्यं सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येव अवस्थानं येषां ते तन्निष्ठाः, तत्परायणाश्च तदेव परम् अयनं परा गतिः येषां भवति ते तत्परायणाः केवलात्मरतय इत्यर्थः। येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते गच्छन्ति एवंविधाः अपुनरावृत्तिम् अपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषाः यथोक्तेन ज्ञानेन निर्धूतः नाशितः कल्मषः पापादिसंसारकारणदोषः येषां ते ज्ञाननिर्धूतकल्मषाः यतयः इत्यर्थः।।

येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्ति इत्युच्यते --
।।5.18।। --
विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ, विद्या आत्मनो बोधो विनयः उपशमः, ताभ्यां विद्याविनयाभ्यां संपन्नः विद्याविनयसंपन्नः विद्वान् विनीतश्च यो ब्राह्मणः तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनः। विद्याविनयसंपन्ने उत्तमसंस्कारवति ब्राह्मणे सात्त्विके, मध्यमायां च राजस्यां गवि, संस्कारहीनायाम् अत्यन्तमेव केवलतामसे हस्त्यादौ च,सत्त्वादिगुणैः तज्जैश्च संस्कारैः तथा राजसैः तथा तामसैश्च संस्कारैः अत्यन्तमेव अस्पृष्टं
समम् एकम् अविक्रियं तत् ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः।।

ननु अभोज्यान्नाः ते दोषवन्तः, 'समासमाभ्यां विषमसमे पूजातः (गौ0 स्म0 17.20)' इति स्मृतेः। न ते दोषवन्तः। कथम्? --
।।5.19।। --
इह एव जीवद्भिरेव तैः समदर्शिभिः पण्डितैः जितः वशीकृतः सर्गः जन्म, येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनः अन्तःकरणम्। निर्दोषं यद्यपि दोषवत्सु श्वपाकादिषु मूढैः तद्दोषैः दोषवत् इव विभाव्यते, तथापि तद्दोषैः अस्पृष्टम् इति निर्दोषं दोषवर्जितं हि यस्मात्; नापि स्वगुणभेदभिन्नम्, निर्गुणत्वात् चैतन्यस्य। वक्ष्यति च भगवान् इच्छादीनां

क्षेत्रधर्मत्वम्, 'अनादित्वान्निर्गुणत्वात् (गीता 13.31)' इति च। नापि अन्त्या विशेषाः आत्मनो भेदकाः सन्ति, प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेः। अतः समं ब्रह्म एकं च। तस्मात् ब्रह्मणि एव ते स्थिताः। तस्मात् न दोषगन्धमात्रमपि तान् स्पृशति, देहादिसंघातात्मदर्शनाभिमानाभावात् तेषाम्। देहादिसंघातात्मदर्शनाभिमानवद्विषयं तु तत् सूत्रम् 'समासमाभ्यां विषमसमे पूजातः (गौ0 स्मृ0 17.20)' इति, पूजाविषयत्वेन विशेषणात्। दृश्यते हि ब्रह्मवित् षडङ्गवित् चतुर्वेदवित् इति पूजादानादौ गुणविशेषसंबन्धः कारणम्। ब्रह्म तु सर्वगुणदोषसंबन्धवर्जितमित्यतः 'ब्रह्मणि ते स्थिताः' इति युक्तम्। कर्मविषयं च 'समासमाभ्याम्' इत्यादि। इदं तु सर्वकर्मसंन्यासविषयं प्रस्तुतम्, 'सर्वकर्माणि मनसा (गीता 5.13)' इत्यारभ्य आध्यायपरिसमाप्तेः।।

यस्मात् निर्दोषं समं ब्रह्म आत्मा, तस्मात् --
।।5.20।। --
न प्रहृष्येत् प्रहर्षं न कुर्यात् प्रियम् इष्टं प्राप्य लब्ध्वा। न उद्विजेत् प्राप्य च अप्रियम् अनिष्टं लब्ध्वा। देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादौ कुर्वाते, न केवलात्मदर्शिनः, तस्य प्रियाप्रियप्राप्त्यसंभवात्। किञ्च -- 'सर्वभूतेषु एकः समः निर्दोषः आत्मा' इति स्थिरा निर्विचिकित्सा बुद्धिः यस्य सः स्थिरबुद्धिः असंमूढः संमोहवर्जितश्च स्यात् यथोक्तब्रह्मवित् ब्रह्मणि स्थितः, अकर्मकृत् सर्वकर्मसंन्यासी इत्यर्थः

किञ्च, ब्रह्मणि स्थितः --
।।5.21।। --
बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्ते इति स्पर्शाः शब्दादयो विषयाः तेषु बाह्यस्पर्शेषु, असक्तः आत्मा अन्तःकरणं यस्य सः अयम् असक्तात्मा विषयेषु प्रीतिवर्जितः सन् विन्दति लभते आत्मनि यत् सुखं तत् विन्दति इत्येतत्। स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिः ब्रह्मयोगः तेन ब्रह्मयोगेन युक्तः समाहितः तस्मिन् व्यापृतः आत्मा अन्तःकरणं यस्य सः ब्रह्मयोगयुक्तात्मा, सुखम् अक्षयम् अश्नुते व्याप्नोति। तस्मात् बाह्यविषयप्रीतेः क्षणिकायाः इन्द्रियाणि निवर्तयेत् आत्मनि अक्षयसुखार्थी इत्यर्थः।।

इतश्च निवर्तयेत् --
।।5.22।। --
ये हि यस्मात् संस्पर्शजाः विषयेन्द्रियसंस्पर्शेभ्यो जाताः भोगा भुक्तयः दुःखयोनय एव ते, अविद्याकृतत्वात्। दृश्यन्ते हि आध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव। यथा इहलोके तथा परलोकेऽपि इति गम्यते एवशब्दात्। न संसारे सुखस्य गन्धमात्रमपि अस्ति इति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि निवर्तयेत्। न केवलं दुःखयोनय , आद्यन्तवन्तश्च, आदिः

विषयेन्द्रियसंयोगो भोगानाम् अन्तश्च तद्वियोग एव; अतः आद्यन्तवन्तः अनित्याः, मध्यक्षणभावित्वात् इत्यर्थः। कौन्तेय, न तेषु भोगेषु रमते बुधः विवेकी अवगतपरमार्थतत्त्वः; अत्यन्तमूढानामेव हि विषयेषु रतिः दृश्यते, यथा पशुप्रभृतीनाम्।।

अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुः दुर्निवारश्च इति तत्परिहारे यत्नाधिक्यं कर्तव्यम् इत्याह भगवान् --
।।5.23।। --
शक्नोति उत्सहते इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक् पूर्वं शरीरविमोक्षणात् आमरणात् इत्यर्थः। मरणसीमाकरणं जीवतोऽवश्यंभावि हि कामक्रोधोद्भवो वेगः, अनन्तनिमित्तवान् हि सः इति यावत् मरणं तावत् न विश्रम्भणीय इत्यर्थः। कामः इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे वा अनुभूते सुखहेतौ या गर्धिः तृष्णा स कामः; क्रोधश्च आत्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः सः क्रोधः; तौ कामक्रोधौ उद्भवो यस्य वेगस्य सः कामक्रोधोद्भवः वेगः। रोमाञ्चनप्रहृष्टनेत्रवदनादिलिङ्गः अन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः, गात्रप्रकम्पप्रस्वेदसंदष्टोष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगः, तं कामक्रोधोद्भवं वेगं यः उत्सहते प्रसहते सोढुं प्रसहितुम्, सः युक्तः योगी सुखी च इह लोके नरः।।

कथंभूतश्च ब्रह्मणि स्थितः ब्रह्म प्राप्नोति इति आह भगवान् --

**प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥५.९॥**

pralapan visṛjan gṛhṇannunmiṣannimiṣannapi |
indriyāṇīndriyārtheṣu vartanta iti dhārayan ||5.9||

**प्रलपन्** $^{1/1}$ **विसृजन्** $^{1/1}$ **गृह्णन्** $^{1/1}$ **उन्मिषन्** $^{1/1}$ **निमिषन्** $^{1/1}$ **अपि** $^{0}$ **।**
**इन्द्रियाणि** $^{1/3}$ **इन्द्रियार्थेषु** $^{7/3}$ **वर्तन्ते** $^{III/3}$ **इति** $^{0}$ **धारयन्** $^{1/1}$ **॥५.९॥**

- प्रलपन् [pralapan] = talking = प्रलपत् (m.) + 1/1
    - प्र + लप् (1P) to talk + शतृ (लट्/कर्तरि)
- विसृजन् [visṛjan] = releasing = विसृजत् (m.) + 1/1
    - वि + सृज् (6P) to release + शतृ (लट्/कर्तरि)
- गृह्णन् [gṛhṇan] = grasping = गृह्णत् (m.) + 1/1
    - ग्रह् (9U) to grasp + शतृ (लट्/कर्तरि)
- उन्मिषन् [unmiṣan] = opening eyes = उन्मिषत् (m.) + 1/1
    - उद् + मिष् (6P) to open the eyes + शतृ (लट्/कर्तरि)
- निमिषन् [nimiṣan] = closing eyes = निमिषत् (m.) + 1/1
    - नि + मिष् (6P) to close the eyes + शतृ (लट्/कर्तरि)
- अपि [api] = even = अव्ययम्
- इन्द्रियाणि [indriyāṇi] = sense organs = इन्द्रिय (n.) + 1/3
- इन्द्रियार्थेषु [indriyārtheṣu] = in the objects of sense organs = इन्द्रियार्थ (m.) + 7/3
- वर्तन्ते [vartante] = are engaged = वृत् (4A) to be engaged + लट्/कर्तरि/III/3
- इति [iti] = thus = अव्ययम्
- धारयन् [dhārayan] = being aware of = धारयत् (m.) + 1/1
    - धृ (1P) to hold + णिच् + शतृ (लट्/कर्तरि)

... talking, releasing, grasping, opening and closing the eyes, (the person) knowing (full well that) the organs are engaged in their objects

Sentence 1:

प्रलपन् $^{1/1}$ विसृजन् $^{1/1}$ गृह्णन् $^{1/1}$ उन्मिषन् $^{1/1}$ निमिषन् $^{1/1}$ अपि $^{0}$ ।
इन्द्रियाणि $^{1/3}$ इन्द्रियार्थेषु $^{7/3}$ वर्तन्ते $^{III/3}$ इति $^{0}$ धारयन् $^{1/1}$ ॥५.९॥
...even while (अपि $^{0}$) talking (प्रलपन् $^{1/1}$), releasing (विसृजन् $^{1/1}$), grasping (गृह्णन् $^{1/1}$), opening (उन्मिषन् $^{1/1}$) and closing the eyes (निमिषन् $^{1/1}$), (the person) knowing (धारयन् $^{1/1}$) (full well that) (इति $^{0}$) the organs (इन्द्रियाणि $^{1/3}$) are engaged (वर्तन्ते $^{III/3}$) in their objects (इन्द्रियार्थेषु $^{7/3}$).

न च असौ परमार्थतः करोतीत्यतः –

And he (योगयुक्तः कुर्वन् अपि कर्मभि न लिप्यते) does not do anything in reality. Therefore –

।।5.8 -- 5.9।। --
नैव किञ्चित् करोमीति युक्तः समाहितः सन् मन्येत चिन्तयेत्, तत्त्ववित् आत्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित् परमार्थदर्शीत्यर्थः।
कदा कथं वा तत्त्वमवधारयन् मन्येत इति, उच्यते -- पश्यन्निति।

When and how he thinks while seeing the तत्त्व in mind? This is answered – Seeing …
मन्येत इति पूर्वेण संबन्धः।

The word मन्येत is connected as: "पश्यन् श्रृण्वन् … निमिषन् अपि (सन्) तत्त्वविद् "नैव किञ्चित् करोमि" इति मन्येत"

यस्य एवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मसु अकर्मैव, पश्यतः सम्यग्दर्शिनः तस्य सर्वकर्मसंन्यासे एव अधिकारः, कर्मणः अभावदर्शनात्।

For that person, the knower of तत्त्व in this manner, who is seeing the absence of कर्तृत्व in all actions which are nothing but modifications of body-mind-sense-complex, who has got clear vision of वस्तु, there is अधिकार only in सर्वकर्मसन्न्यास because of his vision of absence of कर्म.
न हि मृगतृष्णिकायाम् उदकबुद्ध्या पानाय प्रवृत्तः उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते ॥

The person who is engaged in mirage water with the perception to quench his thirst, if he found out there is no water, he will not go toward that for drinking. (Similarly, when one finds पूर्णात्मा, all कर्मफलs are found in पूर्णात्मा.)

## ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
## लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥५.१०॥

brahmaṇyādhāya karmāṇi saṅgaṃ tyaktvā karoti yaḥ ।

lipyate na sa pāpena padmapatramivāmbhasā ||5.10||

ब्रह्मणि $^{7/1}$ आधाय $^{0}$ कर्माणि $^{2/3}$ सङ्गम् $^{2/1}$ त्यक्त्वा $^{0}$ करोति $^{III/1}$ यः $^{1/1}$ ।
लिप्यते $^{III/1}$ न $^{0}$ सः $^{1/1}$ पापेन $^{3/1}$ पद्मपत्रम् $^{1/1}$ इव $^{0}$ अम्भसा $^{3/1}$ ॥५.१०॥

- ब्रह्मणि [brahmaṇi] = unto *Brahman* = ब्रह्मन् (n.) + 7/1
- आधाय [ādhāya] = offering = अव्ययम्
    - आ + धा + ल्यप्
- कर्माणि [karmāṇi] = actions = कर्म (n.) + कर्मणि to आधाय 2/3
- सङ्गम् [saṅgam] = attachment = सङ्ग (m.) + कर्मणि to त्यक्त्वा 2/1
- त्यक्त्वा [tyaktvā] = giving up = अव्ययम्
    - त्यज् + त्त्वा
- करोति [karoti] = does = कृ (8U) to do + लट्/कर्तरि/III/1
- यः [yaḥ] = one who = यद् (pron. m.) + 1/1
- लिप्यते [lipyate] = is touched = लिप् (6P) to gain + लट्/कर्मणि/III/1
- न [na] = not = अव्ययम्
- सः [saḥ] = he = तद् (pron. m.) + 1/1
- पापेन [pāpena] = by *pāpa* = पाप (n.) + कर्तरि 3/1
- पद्मपत्रम् [padmapatram] = lotus leaf = पद्मपत्र (n.) + 1/1
    - पद्मस्य पत्रं पद्मपत्रम् (6T) ।
- इव [iva] = just as = अव्ययम्
- अम्भसा [ambhasā] = by water = अम्भस् (n.) + कर्तरि 3/1

The one who performs actions, giving up attachment, offering (one's actions) unto Brahman, is not affected by sin, just as the leaf of a lotus (is not wetted) by water.

Sentence 1:

यः $^{1/1}$ ब्रह्मणि $^{7/1}$ आधाय $^{0}$ सङ्गम् $^{2/1}$ त्यक्त्वा $^{0}$ कर्माणि $^{2/3}$ करोति $^{III/1}$ ।

सः $^{1/1}$ पापेन $^{3/1}$ न $^{0}$ लिप्यते $^{III/1}$ पद्मपत्रम् $^{1/1}$ अम्भसा $^{3/1}$ (न $^{0}$ लिप्यते $^{III/1}$) इव $^{0}$ ॥५.१०॥

The one who (यः $^{1/1}$) performs (करोति $^{III/1}$) actions (कर्माणि $^{2/3}$), giving up (त्यक्त्वा $^{0}$) attachment (सङ्गम् $^{2/1}$), offering (आधाय $^{0}$) (one's actions) unto Brahman (ब्रह्मणि $^{7/1}$), is not (न $^{0}$) affected (सः $^{1/1}$ लिप्यते $^{III/1}$) by sin (पापेन $^{3/1}$), just as (इव $^{0}$) the leaf of a lotus (पद्मपत्रम् $^{1/1}$) (is not wetted) by water (अम्भसा $^{3/1}$).

यः $^{1/1}$ तु $^{0}$ पुनः $^{0}$ अतत्त्ववित् $^{1/1}$ प्रवृत्तः $^{1/1}$ च $^{0}$ कर्मयोगे $^{7/1}$ –
ब्रह्मणि $^{7/1}$ ईश्वरे $^{7/1}$ आधाय $^{0}$ निक्षिप्य $^{0}$ "तदर्थम् $^{0}$ कर्म $^{2/1}$ करोमि $^{I/1}$" इति $^{0}$ भृत्यः $^{1/1}$ इव $^{0}$ स्वामि-अर्थम् $^{0}$ सर्वाणि $^{2/3}$ कर्माणि $^{2/3}$ मोक्षे $^{7/1}$ अपि $^{0}$ फले $^{7/1}$ सङ्गम् $^{2/1}$ त्यक्त्वा $^{0}$ करोति $^{III/1}$ यः $^{1/1}$ सर्वकर्माणि $^{2/3}$, लिप्यते $^{III/1}$ न $^{0}$ सः $^{1/1}$ पापेन $^{3/1}$ न $^{0}$ संबध्यते $^{III/1}$ पद्मपत्रम् $^{1/1}$ इव $^{0}$ अम्भसा $^{3/1}$ उदकेन $^{3/1}$। केवलम् $^{0}$ सत्त्वशुद्धिमात्रम् $^{1/1}$ एव $^{0}$ फलम् $^{1/1}$ तस्य $^{6/1}$ कर्मणः $^{6/1}$ स्यात् $^{III/1}$ ॥

## कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
## योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥५.११॥

kāyena manasā buddhyā kevalairindriyairapi |
yoginaḥ karma kurvanti saṅgaṃ tyaktvātmaśuddhaye ||5.11||

कायेन $^{3/1}$ मनसा $^{3/1}$ बुद्ध्या $^{3/1}$ केवलैः $^{3/3}$ इन्द्रियैः $^{3/3}$ अपि $^{0}$ ।
योगिनः $^{1/3}$ कर्म $^{2/1}$ कुर्वन्ति $^{III/3}$ सङ्गम् $^{2/1}$ त्यक्त्वा $^{0}$ आत्मशुद्धये $^{4/1}$ ॥५.११॥

- कायेन [kāyena] = by body = काय (m.) + करणे to कुर्वन्ति 3/1
- मनसा [manasā] = by mind = मनस् (n.) + करणे to कुर्वन्ति 3/1
- बुद्ध्या [buddhyā] = by intellect = बुद्धि (f.) + करणे to कुर्वन्ति 3/1
- केवलैः [kevalaiḥ] = only = केवल (n.) + adj. to इन्द्रिय 3/3
- इन्द्रियैः [indriyaiḥ] = senses = इन्द्रिय (n.) + करणे to कुर्वन्ति 3/3
- अपि [api] = also = अव्ययम्

- योगिनः [yoginaḥ] = yogins = योगिन् (m.) + कर्तरि to कुर्वन्ति 1/3
- कर्म [karma] = action = कर्म (n.) + कर्मणि to कुर्वन्ति 2/1
- कुर्वन्ति [kurvanti] = perform = कृ (8U) to do + लट्/कर्तरि/III/3
- सङ्गम् [saṅgam] = attachment = सङ्ग (m.) + कर्मणि to त्यक्त्वा 2/1
- त्यक्त्वा [tyaktvā] = giving up = अव्ययम्
    - ज्यज् + त्त्वा
- आत्मशुद्धये [ātmaśuddhaye] = for the purification of the mind = आत्मशुद्धि (n.) + 4/1
    - आत्मनः सत्त्वस्य अन्तःकरणस्य शुद्धिः आत्मशुद्धिः (6T), तस्मै ।

Giving up attachment, karma *yogī*s perform action purely (without attachment) with the body, mind, intellect, and also by the senses, for the purification of the mind.

Sentence 1:

कायेन $^{3/1}$ मनसा $^{3/1}$ बुद्ध्या $^{3/1}$ केवलैः $^{3/3}$ इन्द्रियैः $^{3/3}$ अपि $^{0}$ ।
योगिनः $^{1/3}$ कर्म $^{2/1}$ कुर्वन्ति $^{III/3}$ सङ्गम् $^{2/1}$ त्यक्त्वा $^{0}$ आत्मशुद्धये $^{4/1}$ ॥५.११॥
Giving up (त्यक्त्वा $^{0}$) attachment (सङ्गम् $^{2/1}$), *karma yogī*s (योगिनः $^{1/3}$) perform (कुर्वन्ति $^{III/3}$) action (कर्म $^{2/1}$) purely (केवलैः $^{3/3}$) (without attachment) with the body (कायेन $^{3/1}$), mind (मनसा $^{3/1}$), intellect (बुद्ध्या $^{3/1}$), and also (अपि $^{0}$) by the senses (इन्द्रियैः $^{3/3}$), for the purification of the mind (आत्मशुद्धये $^{4/1}$).

यस्मात् –
कायेन $^{3/1}$ देहेन $^{3/1}$ मनसा $^{3/1}$ बुद्ध्या $^{3/1}$ च $^{0}$ केवलैः $^{3/3}$ ममत्व-वर्जितैः $^{3/3}$ "ईश्वराय $^{4/1}$ एव $^{0}$ कर्म $^{2/1}$ करोमि $^{III/1}$, न $^{0}$ मम $^{6/1}$ फलाय $^{4/1}$" इति $^{0}$ ममत्व-बुद्धि-शून्यैः $^{3/3}$ इन्द्रियैः $^{3/3}$ अपि $^{0}$ । केवल-शब्दः $^{1/1}$ काय-आदिभिः $^{3/3}$ अपि $^{0}$ प्रत्येकम् $^{0}$ संबध्यते $^{III/1}$ – सर्वव्यापारेषु $^{7/3}$ ममता-वर्जनाय $^{4/1}$। योगिनः $^{1/3}$ कर्मिणः $^{1/3}$ कर्म $^{2/1}$ कुर्वन्ति $^{III/3}$ सङ्गम् $^{2/1}$ त्यक्त्वा $^{0}$ फलविषयम् $^{2/1}$ आत्मशुद्धये $^{4/1}$ सत्त्वशुद्धये $^{4/1}$ इत्यर्थः $^{1/1}$। तस्मात् $^{5/1}$ तत्र $^{0}$ एव $^{0}$ तव $^{6/1}$ अधिकारः $^{1/1}$ इति $^{0}$ कुरु $^{II/1}$ कर्म $^{2/1}$ एव $^{0}$॥

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥५.१२॥**

yuktaḥ karmaphalaṃ tyaktvā śāntimāpnoti naiṣṭhikīm |
ayuktaḥ kāmakāreṇa phale sakto nibadhyate ||5.12||

**युक्तः** $^{1/1}$ **कर्मफलम्** $^{2/1}$ **त्यक्त्वा** $^{0}$ **शान्तिम्** $^{2/1}$ **आप्नोति** $^{III/1}$ **नैष्ठिकीम्** $^{2/1}$ **।**
**अयुक्तः** $^{1/1}$ **कामकारेण** $^{3/1}$ **फले** $^{7/1}$ **सक्तः** $^{1/1}$ **निबध्यते** $^{III/1}$ **॥५.१२॥**

- युक्तः [yuktaḥ] = one who is endowed with *karma yoga* = युक्त (m.) + कर्तरि to आप्नोति 1/1
- कर्मफलम् [karmaphalam] = result of action = कर्मफल (n.) + कर्मणि to त्यक्त्वा 2/1
- त्यक्त्वा [tyaktvā] = giving up = अव्ययम्
    - ज्यज् + त्त्वा
- शान्तिम् [śāntim] = composure = शान्ति (f.) + कर्मणि to आप्नोति 2/1
- आप्नोति [āpnoti] = gains = आप् (5P) to gain + लट्/कर्तरि/III/1
- नैष्ठिकीम् [naiṣṭhikīm] = born of a commitment to a life of *karma-yoga* = नैष्ठिकी (f.) + adj. to शान्तिम् 2/1
    - निष्ठायां भवा नैष्ठिकी । Born of the commitment
    - निष्ठा + ङस् + ठक्

      निष्ठा + इक      तस्येकः।
      नैष्ठ् + इक      आदिवृद्धिः, यस्येति च।
      नैष्ठिक् + ङीप्      4.1.15, यस्येति च।
- अयुक्तः [ayuktaḥ] = one who is not endowed with *karma yoga* = अयुक्त (m.) + कर्तरि to आप्नोति 1/1
- कामकारेण [kāmakāreṇa] = by desire = कामकार (m.) + करणे to कुर्वन्ति 3/1
    - कामस्य कारः कामकारः (6T)।

- फले [phale] = in result = फल (n.) + अधिकरणे 7/1
- सक्तः [saktaḥ] = one who is attached = सक्त (m.) + adj. to अयुक्तः 1/1
- निबध्यते [nibadhyate] = is bound = नि + बध् (1A) to bind + लट्/कर्मणि/III/1

The one who is endowed with (karma yoga), giving up the result of action, gains a composure born of a commitment to a life of karma yoga. (Whereas) one who is not committed to a life of karma yoga, led by desire, is bound, (being) attached to the result (of action).

Sentence 1:

युक्तः 1/1 कर्मफलम् 2/1 त्यक्त्वा 0 नैष्ठिकीम् 2/1 शान्तिम् 2/1 आप्नोति III/1 ।
The one who is endowed with (*karma yoga*) (युक्तः 1/1), giving up (त्यक्त्वा 0) the result of action (कर्मफलम् 2/1), gains (आप्नोति III/1) a composure (शान्तिम् 2/1) born of a commitment to a life of karma *yoga* (नैष्ठिकीम् 2/1).

Sentence 2:

अयुक्तः 1/1 कामकारेण 3/1 फले 7/1 सक्तः 1/1 निबध्यते III/1 ॥५.१२॥
(Whereas) one who is not committed to a life of *karma yoga* (अयुक्तः 1/1), led by desire (कामकारेण 3/1), is bound (निबध्यते III/1), (being) attached (सक्तः 1/1) to the result (of action) (फले 7/1).

यस्मात् 5/1 च 0 –
युक्तः 1/1 "ईश्वराय 4/1 कर्माणि 2/3 करोमि I/1, न 0 मम 6/1 फलाय 4/1" इत्येवम् 0 समाहितः 1/1 सन् 1/1 कर्मफलम् 2/1 त्यक्त्वा 0 परित्यज्य 0 शान्तिम् 2/1 मोक्ष-आख्याम् 2/1 आप्नोति III/1 नैष्ठिकीम् 2/1 निष्ठायाम् 7/1 भवाम् 2/1 सत्त्वशुद्धि-ज्ञानप्राप्ति-सर्वकर्मसंन्यास-ज्ञान-निष्ठा-क्रमेण् 3/1 इति 0 वाक्यशेषः 1/1। यः 1/1 तु 0 पुनः 0 अयुक्तः 1/1 असमाहितः 1/1

काम-कारेण $^{3/1}$ करणम् $^{1/1}$ कारः $^{1/1}$ कामस्य $^{6/1}$ कारः $^{1/1}$ कामकारः $^{1/1}$, तेन $^{3/1}$ कामकारेण $^{3/1}$, काम-प्रेरिततया $^{3/1}$ इत्यर्थः $^{1/1}$। "मम $^{6/1}$ फलाय $^{4/1}$ इदम् $^{2/1}$ करोमि $^{I/1}$ कर्म $^{2/1}$" इत्येवम् $^{0}$ फले $^{7/1}$ सक्तः $^{1/1}$ निबध्यते $^{III/1}$ । अतः $^{0}$ त्वम् $^{1/1}$ युक्तः $^{1/1}$ भव $^{II/1}$ इत्यर्थः $^{1/1}$ ॥

## सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी ।
## नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥५.१३॥

sarvakarmāṇi manasā sannyasyāste sukhaṃ vaśī |
navadvāre pure dehī naiva kurvanna kārayan ||5.13||

सर्वकर्माणि $^{2/3}$ मनसा $^{3/1}$ सन्न्यस्य $^{0}$ आस्ते $^{III/1}$ सुखम् $^{0}$ वशी $^{1/1}$ ।
नवद्वारे $^{7/1}$ पुरे $^{7/1}$ देही $^{1/1}$ न $^{0}$ एव $^{0}$ कुर्वन् $^{1/1}$ न $^{0}$ कारयन् $^{1/1}$ ॥५.१३॥

- सर्वकर्माणि [sarvakarmāṇi] = all action = सर्वकर्म (n.) + कर्मणि to सन्न्यस्य 2/3
- मनसा [manasā] = by the mind = मनस् (m.) + करणे to सन्न्यस्य 3/1
- सन्न्यस्य [sannyasya] = having renounced = अव्ययम्
    - सम् + नि + अस् + ल्यप्
- आस्ते [āste] = remains = आस् (2A) to sit + लट्/कर्तरि/III/1
- सुखम् [sukham] = happily = अव्ययम्
- वशी [vaśī] = the one who is self-controlled = वशिन् (m.) + कर्तरि to आस्ते 1/1
- नवद्वारे [navadvāre] = nine-gated = नवद्वार (n.) + अधिकरणे 7/1
    - नव द्वाराणि यस्मिन् तत् नवद्वारम् (117B), तस्मिन् ।
- पुरे [pure] = city = पुर (n.) + अधिकरणे 7/1
- देही [dehī] = the indweller of the physical body = देहिन् (m.) + कर्तरि to आस्ते 1/1
- न [na] = not = अव्ययम्
- एव [eva] = at all = अव्ययम्
- कुर्वन् [kurvan] = performing action = कुर्वत् (m.) + 1/1

- कृ (8U) to do + शतृँ (लट्/कर्तरि)
- न [na] = not = अव्ययम्
- कारयन् [kārayan] = causing (others) to act = कारयत् (m.) + 1/1
    - कृ (8U) to do + णिच् (causal) + शतृँ (लट्/कर्तरि)

The indweller of the physical body, the one who is self-controlled, having renounced all actions mentally (by knowledge), remains happily in the nine-gated city (the body) neither performing action, nor causing (others) to act.

Sentence 1:

सर्वकर्माणि $^{2/3}$ मनसा $^{3/1}$ सन्न्यस्य $^{0}$ वशी $^{1/1}$ सुखम् $^{0}$ आस्ते $^{III/1}$ ।
नवद्वारे $^{7/1}$ पुरे $^{7/1}$ देही $^{1/1}$ न $^{0}$ एव $^{0}$ कुर्वन् $^{1/1}$ न $^{0}$ कारयन् $^{1/1}$ ॥५.१३॥
The indweller of the physical body (देही $^{1/1}$), the one who is self-controlled (वशी $^{1/1}$), having renounced (सन्न्यस्य $^{0}$) all actions (सर्वकर्माणि $^{2/3}$) mentally (by knowledge) (मनसा $^{3/1}$), remains (आस्ते $^{III/1}$) happily (सुखम् $^{0}$) in the nine-gated (नवद्वारे $^{7/1}$) city (the body) (पुरे $^{7/1}$) neither (न $^{0}$ एव $^{0}$) performing action (कुर्वन् $^{1/1}$), nor (न $^{0}$) causing (others) to act (कारयन् $^{1/1}$).

यः $^{1/1}$ तु $^{0}$ परमार्थ-दर्शी $^{1/1}$ सः $^{1/1}$ –
सर्वाणि $^{2/3}$ कर्माणि $^{2/3}$ सर्वकर्माणि $^{2/3}$ सन्न्यस्य $^{0}$ परित्यज्य $^{0}$ । नित्यम् $^{1/1}$ नैमित्तिकम् $^{1/1}$ काम्यम् $^{1/1}$ प्रतिषिद्धम् $^{1/1}$ (कर्म) च $^{0}$ तानि $^{2/3}$ सर्वाणि $^{2/3}$ कर्माणि $^{2/3}$ मनसा $^{3/1}$ विवेक-बुद्ध्या $^{3/1}$, कर्मादौ $^{7/1}$ अकर्म-संदर्शनेन $^{3/1}$ संत्यज्य $^{0}$ इत्यर्थः $^{1/1}$ ।आस्ते $^{III/1}$ तिष्ठति $^{III/1}$ सुखम् $^{0}$ । त्यक्त-वाक्-मनः-काय-चेष्टः $^{1/1}$ यतिः $^{1/1}$ निरायासः $^{1/1}$ प्रसन्न-चित्तः $^{1/1}$ आत्मनः $^{5/1}$ अन्यत्र $^{0}$ निवृत्त-सर्व-बाह्य-प्रयोजनः $^{1/1}$ इति $^{0}$ "सुखम् $^{0}$ आस्ते $^{III/1}$" इत्युच्यते $^{III/1}$। वशी $^{1/1}$ जितेन्द्रियः $^{1/1}$ इत्यर्थः $^{1/1}$। क्व $^{0}$ कथम् $^{0}$ आस्ते $^{III/1}$ इति $^{0}$, आह $^{III/1}$ – नवद्वारे $^{7/1}$ पुरे $^{7/1}$ सप्त $^{1/3}$ शीर्षण्यानि $^{1/3}$ आत्मनः $^{6/1}$ उपलब्धि-द्वाराणि $^{1/3}$, अवाग् $^{0}$ द्वे $^{1/2}$ मूत्र-पुरीष-विसर्ग-अर्थे $^{1/2}$, तैः $^{3/3}$ द्वारैः $^{3/3}$ नवद्वारम् $^{1/1}$ पुरम् $^{1/1}$ उच्यते $^{III/1}$ शरीरम् $^{1/1}$ । पुरम् $^{1/1}$ इव $^{0}$ पुरम् $^{1/1}$, आत्म-एक-स्वामिकम् $^{1/1}$। तत्-अर्थ-प्रयोजनैः $^{3/3}$ च $^{0}$ इन्द्रिय-मनो-बुद्धि-विषयैः $^{3/3}$ (ID) अनेक-फल-विज्ञानस्य $^{6/1}$ (KT-6T) उत्पादकैः $^{3/3}$ पौरैः $^{3/3}$ इव $^{0}$ अधिष्ठितम् $^{1/1}$। तस्मिन् $^{7/1}$ नवद्वारे $^{7/1}$ पुरे $^{7/1}$ देही $^{1/1}$ सर्वम् $^{2/1}$ कर्म $^{2/1}$ संन्यस्य $^{0}$ आस्ते $^{III/1}$॥

किम्[0] विशेषणेन[3/1]? सर्वः[1/1] हि[0] देही[1/1] संन्यासी[1/1] असंन्यासी[1/1] वा[0] देहे[7/1] एव[0] आस्ते[III/1]; तत्र[0] अनर्थकम्[1/1] विशेषणम्[1/1] इति[0] । उच्यते[III/1] – यः[1/1] तु[0] अज्ञः[1/1] देही[1/1] देहेन्द्रिय-संघात-मात्र-अत्म-दर्शी[1/1] सः[1/1] सर्व[1/1] अपि[0] "गेहे[7/1] भूमौ[7/1] आसने[7/1] वा[0] आसे[I/1]" इति[0] मन्यते[III/1]। न[0] हि[0] देहमात्रात्मदर्शिनः[6/1] "गेहे[7/1] इव[0] देहे[7/1] आसे[I/1]" इति[0] प्रत्ययः[1/1] संभवति[III/1]। देहादि-संघात-व्यतिरिक्त-आत्म-दर्शिः[6/1] तु[0] "देहे[7/1] आसे[I/1]" इति[0] प्रत्ययः[1/1] उपपद्यते[III/1]। परकर्मणाम्[6/3] च[0] परस्मिन्[7/1] आत्मनि[7/1] अविद्यया[3/1] अध्यारोपितानाम्[6/3] विद्यया[3/1] विवेक-ज्ञानेन[3/1] मनसा[3/1] संन्यासः[1/1] उपपद्यते[III/1]। उत्पन्न-विवेक-ज्ञानस्य[6/1] सर्वकर्मसंन्यासिनः[6/1] अपि[0] गेहे[7/1] इव[0] देहे[7/1] एव[0] नवद्वारे[7/1] पुरे[7/1] आसनम्[1/1] प्रारब्ध-फल-कर्म-संस्कार-शेष-अनुवृत्त्या[3/1] देहे[7/1] एव[0] विशेष-विज्ञान-उत्पत्तेः[5/1] । "देहे[7/1] एव[0] आस्ते[III/1] इति[0]" अस्ति[III/1] एव[0] विशेषण-फलम्[1/1], विद्वद्-अविद्वत्-प्रत्यय-भेद-अपेक्षत्वात्[5/1]॥

यद्यपि[0] कार्य-करण-कर्माणि[2/3] अविद्यया[3/1] आत्मनि[7/1] अध्यारोपितानि[2/3] संन्यस्य[0] आस्ते[III/1] इत्युक्तम्[1/1], तथापि[0] आत्म-समवायि[1/1] तु[0] कर्तृत्वम्[1/1] कारयितृत्वम्[1/1] च[0] स्यात्[III/1] इति[0] आशङ्क्य[0] आह[III/1] – न[0] एव[0] कुर्वन्[1/1] स्वयम्[0], न[0] च[0] कार्य-करणानि[2/3] कारयन्[1/1] क्रियासु[7/3] प्रवर्तयन्[1/1]। किम्[0] यत्[1/1] तत्[1/1] कर्तृत्वम्[1/1] कारयितृत्वम्[1/1] च[0] देहिनः[6/1] स्वात्म-समवायि[1/1] सत्[1/1] संन्यासात्[5/1] न[0] संभवति[III/1], यथा[0] गच्छतः[6/1] गतिः[1/1] गमन-व्यापार-परित्यागे[7/1] न[0] स्यात्[III/1] तद्वत्[0]? किम्[0] वा[0] स्वतः[0] एव[0] आत्मनः[6/1] न[0] अस्ति[III/1] इति[0]? अत्र[0] उच्यते[III/1] – न[0] अस्ति[III/1] आत्मनः[6/1] स्वतः[0] कर्तृत्वम्[1/1] कारयितृत्वम्[1/1] च[0] । उक्तम्[1/1] हि[0] "अविकार्योऽयमुच्यते (गीता 2.25)" "शरीरस्थोऽपि न करोति न लिप्यते (गीता 13.31)" इति[0]।"ध्यायतीव लेलायतीव (बृ. 4.34)" इति[0] श्रुतेः[5/1]॥

## न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
## न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥५.१४॥

na kartṛtvaṃ na karmāṇi lokasya sṛjati prabhuḥ |
na karmaphalasaṃyogaṃ svabhāvastu pravartate ||5.14||

**न[0] कर्तृत्वम्[2/1] न[0] कर्माणि[2/3] लोकस्य[6/1] सृजति[III/1] प्रभुः[1/1] ।**
**न[0] कर्मफलसंयोगम्[2/1] स्वभावः[1/1] तु[0] प्रवर्तते[III/1] ॥५.१४॥**

- न [na] = not = अव्ययम्
- कर्तृत्वम् [kartṛtvam] = doership = कर्तृत्व (n.) + कर्मणि to सृजति 2/1

- न [na] = not = अव्ययम्
- कर्माणि [karmāṇi] = action = कर्म (n.) + कर्मणि to सृजति 2/3
- लोकस्य [lokasya] = for any person = लोक (m.) + सम्बन्धे to कर्तृत्वम् and कर्माणि 6/1
- सृजति [sṛjati] = creates = सृज् (6P) to create + लट्/कर्तरि/III/1
- प्रभुः [prabhuḥ] = ātmā = प्रभु (m.) + कर्तरि to सृजति 1/1
- न [na] = not = अव्ययम्
- कर्मफलसंयोगम् [karmaphalasaṃyogam] = the connection with the results of action= कर्मफलसंयोग (m.) + कर्मणि to सृजति 2/1
- स्वभावः [svabhāvaḥ] = one's own nature = स्वभाव (m.) + कर्तरि to प्रवर्तते 1/1
- तु [tu] = but = अव्ययम्
- प्रवर्तते [pravartate] = leads = प्र + वृत् (1A) to engage+ लट्/कर्तरि/III/1

Ātmā creates neither doership nor action for any person nor the connection with the results of action. But one's own nature leads to action.

Sentence 1:

प्रभुः $^{1/1}$ लोकस्य $^{6/1}$ कर्तृत्वम् $^{2/1}$ न $^{0}$ सृजति $^{III/1}$ कर्माणि $^{2/3}$ न $^{0}$ (सृजति $^{III/1}$) कर्मफलसंयोगम् $^{2/1}$ न $^{0}$ (सृजति $^{III/1}$)।
Ātmā (प्रभुः $^{1/1}$) creates (सृजति $^{III/1}$) neither (न $^{0}$) doership (कर्तृत्वम् $^{2/1}$) nor (न $^{0}$) action (कर्माणि $^{2/3}$) for any person (लोकस्य $^{6/1}$) nor (न $^{0}$) the connection with the results of action (कर्मफलसंयोगम् $^{2/1}$).

Sentence 2:

स्वभावः $^{1/1}$ तु $^{0}$ प्रवर्तते $^{III/1}$ ॥५.१४॥
But (तु $^{0}$) one's own nature (स्वभावः $^{1/1}$) leads to action (प्रवर्तते $^{III/1}$).

किञ्च –

न [0] कर्तृत्वम् [2/1] स्वतः [0] "कुरु [II/1]" इति [0] । न [0] अपि [0] कर्माणि [2/3] रथ-घट-प्रासाद-आदीनि [2/3] ईप्सिततमानि [2/3] लोकस्य [6/1] सृजति [III/1] उत्पादयति [III/1] प्रभुः [1/1] आत्मा [1/1]। न [0] अपि [0] रथादि [2/1] कृतवतः [6/1] तत्फलेन [3/1] संयोगम् [2/1] न [0] कर्मफलसंयोगम् [2/1] । यदि [0] किञ्चित् [0] अपि [0] स्वतः [0] न [0] करोति [III/1] न [0] कारयति [III/1] च [0] देही [1/1], कः [1/1] तर्हि [0] कुर्वन् [1/1] कारयन् [1/1] च [0] प्रवर्तते [III/1] इति [0], उच्यते [III/1] – स्वभावः [1/1] तु [0] स्वः [1/1] भावः [1/1] स्वभावः [1/1] अविद्या-लक्षणा [1/1] प्रकृतिः [1/1] माया [1/1] प्रवर्तते [III/1] "दैवी हि (7.14)" इत्यादिना [3/1] वक्ष्यमाणा [1/1]॥

**नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥५.१५॥**

nādatte kasyacit pāpaṃ na caiva sukṛtaṃ vibhuḥ ।
ajñānenāvṛtaṃ jñānaṃ tena muhyanti jantavaḥ।।5.15।।

न [0] आदत्ते [III/1] कस्यचित् [0] पापम् [2/1] न [0] च [0] एव [0] सुकृतम् [2/1] विभुः [1/1] ।
अज्ञानेन [3/1] आवृतम् [1/1] ज्ञानम् [1/1] तेन [3/1] मुह्यन्ति [III/3] जन्तवः [1/3] ॥५.१५॥

- न [na] = not = अव्ययम्
- आदत्ते [ādatte] = take = आ + दा to take + लट्/कर्तरि/III/1
- कस्यचित् [kasyacit] = any body = अव्ययम्
- पापम् [pāpam] = pāpa = पाप (n.) + कर्मणि to आदत्ते 2/1
- न [na] = not = अव्ययम्
- च [ca] = and = अव्ययम्
- एव [eva] = indeed = अव्ययम्
- सुकृतम् [sukṛtam] = puṇya = सुकृत (n.) + कर्मणि to आदत्ते 2/1
- विभुः [vibhuḥ] = ātmā = विभु (m.) + कर्तरि to आदत्ते 1/1
- अज्ञानेन [ajñānena] = by ignorance = अज्ञान (n.) + कर्तरि to आवृतम् 3/1
- आवृतम् [āvṛtam] = covered = आवृत (n.) + comlement to ज्ञानम् 1/1
- ज्ञानम् [jñānam] = knowledge = ज्ञान (n.) + कर्तरि to (भवति) 1/1

- तेन [tena] = because of that (ignorance) = तद् (pron. n.) + हेतौ 3/1
- मुह्यन्ति [muhyanti] = are deluded = मुह् (4P) to be deluded + लट्/कर्तरि/III/3
- जन्तवः [jantavaḥ] = people = जन्तु (m.) + कर्तरि to मुह्यन्ति 1/3

The ātmā accepts neither the pāpa nor the puṇya of anyone. Knowledge is covered by ignorance and because of that (ignorance) people are deluded.

Sentence 1:

विभुः [1/1] कस्यचित् [0] पापम् [2/1] न [0] आदत्ते [III/1], (विभुः [1/1] कस्यचित् [0]) सुकृतम् [2/1] न [0] च [0] एव [0] (आदत्ते [III/1])।
The ātmā (विभुः [1/1]) accepts (आदत्ते [III/1]) neither (न [0]) the pāpa (पापम् [2/1]) nor (न [0] च [0] एव [0]) the puṇya (सुकृतम् [2/1]) of anyone (कस्यचित् [0]).

Sentence 2:

ज्ञानम् [1/1] अज्ञानेन [3/1] आवृतम् [1/1], तेन [3/1] जन्तवः [1/3] मुह्यन्ति [III/3] ॥५.१५॥
Knowledge (ज्ञानम् [1/1]) is covered (आवृतम् [1/1]) by ignorance (अज्ञानेन [3/1]) and because of that (ignorance) (तेन [3/1]) people (जन्तवः [1/3]) are deluded (मुह्यन्ति [III/3]).

परमार्थतः [0] तु [0] –
न [0] आदत्ते [III/1] न [0] च [0] गृह्णाति [III/1] भक्तस्य [6/1] अपि [0] कस्यचित् [0] पापम् [2/1], न [0] च [0] एव [0] आदत्ते [III/1] सुकृतम् [2/1] भक्तैः [3/3] प्रयुक्तम् [2/1] विभुः [1/1] । किमर्थम् [0] तर्हि [0] भक्तैः [3/3] पूजादिलक्षणम् [1/1] याग-दान-होम-आदिकम् [1/1] च [0] सुकृतम् [1/1] प्रयुज्यते [III/1] इति [0] आह [III/1] – अज्ञानेन [3/1] आवृतम् [1/1] ज्ञानम् [1/1] विवेक-विज्ञानम् [1/1], तेन [3/1] मुह्यन्ति [III/3] "करोमि [I/1] कारयामि [I/1] भोक्ष्ये [I/1] भोजयामि [I/1]" इत्येवम् [0] मोहम् [2/1] गच्छन्ति [III/1] अविवेकिनः [1/3] संसारिणः [1/3] जन्तवः [1/3]॥

## ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।

**तेषामादित्यवज् ज्ञानं प्रकाशयति तत्परम् ॥५.१६॥**

jñānena tu tadajñānaṃ yeṣāṃ nāśitamātmanaḥ |
teṣāmādityavaj jñānaṃ prakāśayati tatparam ||5.16||

ज्ञानेन $^{3/1}$ तु $^{0}$ तत् $^{1/1}$ अज्ञानम् $^{1/1}$ येषाम् $^{6/3}$ नाशितम् $^{1/1}$ आत्मनः $^{6/1}$ ।
तेषाम् $^{6/3}$ आदित्यवत् $^{0}$ ज्ञानम् $^{1/1}$ प्रकाशयति $^{III/1}$ तत् $^{2/1}$ परम् $^{2/1}$ ॥५.१६॥

- ज्ञानेन [jñānena] = by knowledge = ज्ञान (n.) + कर्तरि to नाशितम् 3/1
- तु [tu] = whereas = अव्ययम्
- तत् [tat] = that = तद् (pron. n.) + adjective to अज्ञानम् 1/1
- अज्ञानम् [ajñānam] = ignorance = अज्ञान (n.) + कर्तरि to (भवति) 1/1
- येषाम् [yeṣām] = of those = यद् (pron. m.) + सम्बन्धे to अज्ञानम् 6/3
- नाशितम् [nāśitam] = destroyed = नाशित (n.) + complement to अज्ञानम् 1/1
- आत्मनः [ātmanaḥ] = of the self = आत्मन् (m.) + सम्बन्धे to अज्ञानम् 6/1
- तेषाम् [teṣām] = of them = तद् (pron. m.) + सम्बन्धे to ज्ञानम् 6/3
- आदित्यवत् [ādityavat] = like the sun = अव्ययम्
- ज्ञानम् [jñānam] = knowledge = ज्ञान (n.) + कर्तरि to प्रकाशयति 1/1
- प्रकाशयति [prakāśayati] = reveals = प्र + काश् to shine + लट्/कर्तरि/III/1
- तत् [tat] = that = तद् (pron. n.) + adjective to परम् 2/1
- परम् [param] = Brahman = पर (n.) + कर्मणि to प्रकाशयति 2/1

Whereas for those whose ignorance of the self is destroyed by knowledge, the knowledge reveals (the self as) that Brahman, like the sun (reveals objects previously covered in darkness).

Sentence 1:

येषाम् $^{6/3}$ तु $^{0}$ तत् $^{1/1}$ आत्मनः $^{6/1}$ अज्ञानम् $^{1/1}$ ज्ञानेन $^{3/1}$ नाशितम् $^{1/1}$ ।
तेषाम् $^{6/3}$ ज्ञानम् $^{1/1}$ आदित्यवत् $^{0}$ तत् $^{2/1}$ परम् $^{2/1}$ प्रकाशयति $^{III/1}$ ॥५.१६॥
Whereas (तु $^{0}$) for those whose (येषाम् $^{6/3}$ तेषाम् $^{6/3}$) ignorance (तत् $^{1/1}$ अज्ञानम् $^{1/1}$) of the self (आत्मनः $^{6/1}$) is destroyed (नाशितम् $^{1/1}$) by knowledge (ज्ञानेन $^{3/1}$), the knowledge (ज्ञानम् $^{1/1}$) reveals (प्रकाशयति $^{III/1}$) (the self as) that (तत् $^{2/1}$) Brahman (परम् $^{2/1}$), like the sun (आदित्यवत् $^{0}$) (reveals objects previously covered in darkness).

।।5.16।। --
ज्ञानेन तु येन अज्ञानेन आवृताः मुह्यन्ति जन्तवः तत् अज्ञानं येषां जन्तूनां विवेकज्ञानेन आत्मविषयेण नाशितम् आत्मनः भवति, तेषां जन्तूनाम् आदित्यवत् यथा आदित्यः समस्तं रूपजातम् अवभासयति तद्वत् ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति तत् परं परमार्थतत्त्वम्।।

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥५.१७॥**

tadbuddhayastadātmānastanniṣṭhāstatparāyaṇāḥ |
gacchantyapunarāvṛttiṃ jñānanirdhūtakalmaṣāḥ ||5.17||

तद्बुद्धयः $^{1/3}$ तदात्मानः $^{1/3}$ तन्निष्ठाः $^{1/3}$ तत्परायणाः $^{1/3}$ ।
गच्छन्ति $^{III/3}$ अपुनरावृत्तिम् $^{2/1}$ ज्ञाननिर्धूतकल्मषाः $^{1/3}$ ॥५.१७॥

- तद्बुद्धयः [tadbuddhayaḥ] = those whose intellect is awake to that (Brahman) = तद्बुद्धि (m.) + कर्तरि to गच्छन्ति 1/3
    - तस्मिन् ब्रह्मणि गता बुद्धिः येषां ते तद्बुद्धयः (716B) ।

- तदात्मानः [tadātmānaḥ] = those for whom the self is that (Brahman) = तदात्मन् (m.) + कर्तरि to गच्छन्ति 1/3
    - तद् एव परं ब्रह्म आत्मा येषां ते तदात्मानः (116B) ।
- तन्निष्ठाः [tanniṣṭhāḥ] = those who are committed only to that (Brahman) = तन्निष्ठ (m.) + कर्तरि to गच्छन्ति 1/3
    - तस्मिन् ब्रह्मणि निष्ठा अभिनिवेशः येषां ते तदात्मानः (716B) ।
- तत्परायणाः [tatparāyaṇāḥ] = those for whom the ultimate end is that (Brahman) = तत्परायण (m.) + कर्तरि to गच्छन्ति 1/3
    - तद् एव परम् अयनं परा गतिः येषां ते तदात्मानः (116B) ।
- गच्छन्ति [gacchanti] = attain = गम् (1P) to go, attain + लट्/कर्तरि/III/3
- अपुनरावृत्तिम् [apunarāvṛttim] = a state from which there is no return = अपुनरावृत्ति (f.) + कर्मणि to गच्छन्ति 2/1
    - पुनः आवृत्तिः पुनरावृत्तिः (SS) ।
    - न पुनरावृत्तिः अपुनरावृत्तिः (NT), ताम् ।
- ज्ञाननिर्धूतकल्मषाः [jñānanirdhūtakalmaṣāḥ] = whose impurities have been destroyed by knowledge = ज्ञाननिर्धूतकल्मष (m.) + कर्तरि to गच्छन्ति 1/3
    - ज्ञानेन निर्धूतः कल्मषः येषां ते (116B) ।

Those whose intellect is awake to that (Brahman), for whom the self is that (Brahman), who are committed only to that (Brahman), for whom the ultimate end is that (Brahman, which they have already accomplished), whose impurities have been destroyed by knowledge — they attain a state from which there is no return.

Sentence 1:

तद्बुद्धयः $^{1/3}$ तदात्मानः $^{1/3}$ तन्निष्ठाः $^{1/3}$ तत्परायणाः $^{1/3}$ ज्ञाननिर्धूतकल्मषाः $^{1/3}$ अपुनरावृत्तिम् $^{2/1}$ गच्छन्ति $^{III/3}$ ॥५.१७॥

Those whose intellect is awake to that (Brahman) (तद्बुद्धयः $^{1/3}$), for whom the self is that (Brahman) (तदात्मानः $^{1/3}$), who are committed only to that (Brahman) (तन्निष्ठाः $^{1/3}$), for whom the ultimate end is that (Brahman) (तत्परायणाः $^{1/3}$), whose impurities have been

destroyed by knowledge (ज्ञाननिर्धूतकल्मषाः [1/3]) — they attain (गच्छन्ति [III/3]) a state from which there is no return (अपुनरावृत्तिम् [2/1]).

यत् परं ज्ञानं प्रकाशितम् --
।।5.17।। --
तस्मिन् ब्रह्मणि गता बुद्धिः येषां ते तद्बुद्धयः, तदात्मानः तदेव परं ब्रह्म आत्मा येषां ते तदात्मानः, तन्निष्ठाः निष्ठा अभिनिवेशः तात्पर्यं सर्वाणि कर्माणि संन्यस्य तस्मिन् ब्रह्मण्येव अवस्थानं येषां ते तन्निष्ठाः, तत्परायणाश्च तदेव परम् अयनं परा गतिः येषां भवति ते तत्परायणाः केवलात्मरतय इत्यर्थः। येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते गच्छन्ति एवंविधाः अपुनरावृत्तिम् अपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषाः यथोक्तेन ज्ञानेन निर्धूतः नाशितः कल्मषः पापादिसंसारकारणदोषः येषां ते ज्ञाननिर्धूतकल्मषाः यतयः इत्यर्थः।।

येषां ज्ञानेन नाशितम् आत्मनः अज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्ति इत्युच्यते --
।।5.18।। --
विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ, विद्या आत्मनो बोधो विनयः उपशमः, ताभ्यां विद्याविनयाभ्यां संपन्नः विद्याविनयसंपन्नः विद्वान् विनीतश्च यो ब्राह्मणः तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनः। विद्याविनयसंपन्ने उत्तमसंस्कारवति ब्राह्मणे सात्त्विके, मध्यमायां च राजस्यां गवि, संस्कारहीनायाम् अत्यन्तमेव केवलतामसे हस्त्यादौ च,सत्त्वादिगुणैः तज्जैश्च संस्कारैः तथा राजसैः तथा तामसैश्च संस्कारैः अत्यन्तमेव अस्पृष्टं
समम् एकम् अविक्रियं तत् ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः।।

ननु अभोज्यान्नाः ते दोषवन्तः, 'समासमाभ्यां विषमसमे पूजातः (गौ0 स्म0 17.20)' इति स्मृतेः। न ते दोषवन्तः। कथम्? --
।।5.19।। --
इह एव जीवद्भिरेव तैः समदर्शिभिः पण्डितैः जितः वशीकृतः सर्गः जन्म, येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनः अन्तःकरणम्। निर्दोषं यद्यपि दोषवत्सु श्वपाकादिषु मूढैः तद्दोषैः दोषवत् इव विभाव्यते, तथापि तद्दोषैः अस्पृष्टम् इति निर्दोषं दोषवर्जितं हि यस्मात्; नापि स्वगुणभेदभिन्नम्, निर्गुणत्वात् चैतन्यस्य। वक्ष्यति च भगवान् इच्छादीनां क्षेत्रधर्मत्वम्, 'अनादित्वान्निर्गुणत्वात् (गीता 13.31)' इति च। नापि अन्त्या विशेषाः आत्मनो भेदकाः सन्ति, प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेः। अतः समं ब्रह्म एकं च। तस्मात् ब्रह्मणि एव ते स्थिताः। तस्मात् न दोषगन्धमात्रमपि तान् स्पृशति, देहादिसंघातात्मदर्शनाभिमानाभावात्

श्लो. 22 ( व्या ) 'न चैतद्दुःशकमित्यादि'। अत्र पङ्क्तयस्त्रुटिता इव। न हि
क्षणमात्रसाध्योऽतिसुशकः पन्था उपदिश्यते भगवता। अतोऽत्रेदं विवक्षितमिव -- 'न चैतत्
सुशकम्; दुःशकोऽयं कामक्रोधादिजो वेगः शरीरान्तकालं यावत् -- न क्षणमात्रम् -- सह्यते
यदि, तदा आत्यन्तिकी सुखप्राप्तिः।' इति। अत्र च संदर्भे
'न क्षणमात्रम्, किन्तु प्राक् शरीरविमोचनात्, आ देहपातात् '
इति श्रीभास्कराचार्यव्याखायनम्; तथा --
'अयं च -- कष्टतमो दोषः -- -दुर्निवारश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह -- आ
मरणात् -- -'
इति श्रीशङ्कराचार्यव्याख्यानं चानुसंधेयम्।।
श्लो. 25 ( व्या ) 'सर्वास्ववस्थासु ब्रह्मसत्ता ब्रह्मसत्ता पारमार्थिकी' इत्यादि। अनेन सर्वतो
ब्रह्म निर्वाणं वर्तते इति मूलं व्याख्यातमिव। तथा हि -- सर्वतः, सर्वदा इत्यर्थः;
सार्वविभक्तिकस्तसिः। वर्तते इति धात्वर्थो वर्तनं सत्ता, सा ब्रह्मेति प्रथमान्तपदार्थब्रह्मकर्तृका।
सत्तायां ब्रह्मकर्तृकत्वं च ब्रह्मात्मकत्वमेव। निर्वाणमिति क्रियाविशेषणस्यार्थः
सत्तायमभेदेनान्वेति; निर्वाणत्वं च पारमार्थिकत्वम्। कथम्? वा
गतिगन्धनयोरित्यदादेर्धातोर्भावे क्तप्रत्यये निष्पन्नस्य वातशब्दस्य गत्यर्थकतया, निर्गतं वातात् --
'निर्वाणोऽवाते
(1 घ्ऩ्ऽ,1 ज्क्ष्क्ष्क्ष्, त्त, 50 ) इति तकारस्य णत्वे -- इति व्युत्पत्त्या निष्पन्नस्य निर्वाणशब्दस्य
सर्वगतिशून्यार्थकत्वात्। वं च सर्वगमनागमनशून्या अनागमापायिनी पारमार्थिकापरपर्याया
ब्रह्मात्मिका सत्ता इत्यर्थलाभः इति।।
वर्तते इति लब्धयोगस्वारस्यं दर्शयति -- 'न निरोधकालमपेक्षते इति'। चित्तवृत्तिनिरोधकालं
नापेक्षते इत्यर्थः। अष्टांगयोगिनो यदा चित्तवृत्तिनिरोधः तदा, तदैव द्रष्टुः स्वरूपेऽवस्थानम्।
यतेस्तु वर्तते सर्वास्ववस्थासु ब्रह्मसत्ता इति विशेषः। अथ वा निरोधो नाशमाह। स च
शरीरस्येत्यादिः। तथा च शरीरनाशकालं मरणकालं नापेक्षते इत्यर्थः। तार्किकादिमते
'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' ( न्या. सू. क्ष्क्ष्, त, 2 )
इति रीत्या दुःखात्मकशरीरापायकालमपेक्षतेऽपवर्गः। यतिस्तु अत्र ब्रह्म समश्नुते इति
हृदयम्।।
श्लो. 26-27 ( व्या ) 'एतदेव बाह्ये' इति। तत् व्युत्पत्तिप्रदर्शनं बाह्यानां भौतिकानां।
भ्रूप्राणापानवायुनासानां विषयेऽपि संभवतीत्यर्थः। अथवा ते व बाह्ये इत्येव लिलेखिषितम्।
क्रोधरागो धर्माधर्मौ इति द्विकद्वये ते व बाह्ये, न तु स्पर्शादीनि, यतः तानि भगवत्याः संविद
आभासरूपाणि। तेषां क्रोधादिसंबन्धादेव, न वस्तुगत्या, बाह्यत्वमिति तात्पर्यम्।।
श्लो. 28 ( व्या ) 'यज्ञफलेषु भोक्ता इति'। यज्ञेषु फलभोक्तेति यावत्। 'यतो
वक्ष्यत्यनुपदमेव' 'एवं तपस्सु ' इति। भोक्ता, पालयिता। कथमित्याह -- 'त्यक्तफलत्वात्'
इति। त्यक्तं, दत्तं, वितीर्णं फलं, कर्मफलं येन तस्य भावस्तस्मादिति विग्रहः।
फलदातृत्वादित्यर्थः। यद्वा भोक्ता, अनुभविता, अनुभवितृत्वेन मतः। कुतः? त्यक्तफलत्वात्,

त्यक्तं समर्पितं फलं यस्मै तस्य भावस्तस्मात्। 'यत् करोषि -- यज्जुहोषि -- यत्तपस्यसि -- तत् कुरुष्व मदर्पणम्' इति ( क्ष्ज्ञ्र, 29 ) वक्ष्यमाणोपदेशानुसारेण संन्यासिना भगवेत सर्वसमर्पणात् इति भावः। अथ वा त्यक्तफलत्वात् इत्यस्य विदुष इत्यादिः। तस्यैव प्रकरणात्। उक्तदिशा विदुषा फलस्य त्यक्तत्वात् भोक्ता परमात्मैव मत इति भावः। 'एवं तपस्सु' इति। तपःफलविषयेऽप्येवमेवार्थौ बोध्य इत्यर्थः।।
'संग्रहश्लोके -- मोक्षायैवावकल्पते इत्यत्र' 'भक्तिर्ज्ञानाय कल्पते' इत्यादाविव, 'क्लृपि संपद्यमाने च'
( 1घ्त्रृ,1 क्ष्क्ष, त्त्त, 13, 1ध्ठ्ढ्घ्घ्त्त्ठ1 2 ) इति चतुर्थी।।
।।इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां पञ्चमोऽध्यायः।।

## कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
## अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥५.२६॥

kāmakrodhaviyuktānāṃ yatīnāṃ yatacetasām |
abhito brahmanirvāṇaṃ vartate viditātmanām ||5.26||

कामक्रोधवियुक्तानाम् $^{6/3}$ यतीनाम् $^{6/3}$ यतचेतसाम् $^{6/3}$ ।
अभितः $^{0}$ ब्रह्मनिर्वाणम् $^{1/1}$ वर्तते $^{III/1}$ विदितात्मनाम् $^{6/3}$ ॥५.२६॥

- कामक्रोधवियुक्तानाम् [kāmakrodhaviyuktānām] = of those who are free from desire and anger = कामक्रोधवियुक्त (m.) + adjective to यतीनाम् 6/3
    - कामः च क्रोधः च कामक्रोधौ (ID), ताभ्याम् वियुक्ताः (3T), तेषाम् ।
- यतीनाम् [yatīnām] = for *sannyāsin*s = यति (m.) + सम्बन्धे to ब्रह्मनिर्वाणम् 6/3
- यतचेतसाम् [yatacetasām] = of those whose mind is under control = यतचेतस् (m.) + adjective to यतीनाम् 6/3
    - यतानि चेतांसि येषां ते यतचेतसः (116B), तेषाम् ।

- अभितः [abhitaḥ] = on both sides = both here and in the hereafter = अव्ययम्
- ब्रह्मनिर्वाणम् [brahmanirvāṇam] = the freedom which is Brahman = ब्रह्मनिर्वाण (n.) + कर्तरि to वर्तते 1/1
- वर्तते [vartate] = वृत् (1A) to be + लट्/कर्तरि/III/1
- विदितात्मनाम् [viditātmanām] = of those who know the self = विदितात्मन् (m.) + adjective to यतीनाम् 6/3
    - विदितः आत्मा येषां ते विदितात्मानः (116B), तेषाम् ।

For sannyāsins, those who are free from desire and anger, whose mind is under control, (and) who know the self, there is liberation, both here and in the hereafter.

Sentence 1:

कामक्रोधवियुक्तानाम् $^{6/3}$ यतचेतसाम् $^{6/3}$ विदितात्मनाम् $^{6/3}$ यतीनाम् $^{6/3}$ अभितः $^{0}$ ब्रह्मनिर्वाणम् $^{1/1}$ वर्तते $^{III/1}$ ॥५.२६॥
For sannyāsins (यतीनाम् $^{6/3}$), those who are free from desire and anger (कामक्रोधवियुक्तानाम् $^{6/3}$), whose mind is under control (यतचेतसाम् $^{6/3}$), (and) who know the self (विदितात्मनाम् $^{6/3}$), there is (वर्तते $^{III/1}$) liberation (ब्रह्मनिर्वाणम् $^{1/1}$), both here and in the hereafter (अभितः $^{0}$).

किञ्च --
।।5.26।। --
कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानाम् अभितः उभयतः जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते विदितात्मनां विदितः ज्ञातः आत्मा येषां ते विदितात्मानः तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः।।

सम्यग्दर्शननिष्ठानां संन्यासिनां सद्यः मुक्तिः उक्ता। कर्मयोगश्च ईश्वरार्पितसर्वभावेन ईश्वरे ब्रह्मणि आधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षाय इति भगवान् पदे पदे अब्रवीत्, वक्ष्यति च। अथ इदानीं ध्यानयोगं सम्यग्दर्शनस्य अन्तरङ्गं विस्तरेण वक्ष्यामि इति तस्य सूत्रस्थानीयान् श्लोकान् उपदिशति स्म -- -
।।5.27 -- 5.28।। --

स्पर्शान् शब्दादीन् कृत्वा बहिः बाह्यान् -- श्रोत्रादिद्वारेण अन्तः बुद्धौ प्रवेशिताः शब्दादयः विषयाः तान् अचिन्तयतः शब्दादयो बाह्या बहिरेव कृताः भवन्ति -- तान् एवं बहिः कृत्वा चक्षुश्चैव अन्तरे भ्रुवोः 'कृत्वा' इति अनुषज्यते। तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा, यतेन्द्रियमनोबुद्धिः यतानि संयतानि इन्द्रियाणि मनः बुद्धिश्च यस्य सः यतेन्द्रियमनोबुद्धिः, मननात् मुनिः संन्यासी, मोक्षपरायणः एवं देहसंस्थानात् मोक्षपरायणः मोक्ष एव परम् अयनं परा गतिः यस्य सः अयं मोक्षपरायणो मुनिः भवेत्। विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः ते विगताः यस्मात् सः विगतेच्छाभयक्रोधः, यः एवं वर्तते सदा

संन्यासी, मुक्त एव सः न तस्य मोक्षायान्यः कर्तव्योऽस्ति।।

एवं समाहितचित्तेन किं विज्ञेयम् इति, उच्यते --

भोक्तारं यज्ञतपसां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च, सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तम् ईश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिम् ऋच्छति प्राप्नोति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये

पञ्चमोऽध्यायः।।

।श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी।।

श्लो. 6 ( व्या ) 'संन्यासमाप्तुं दुःखमेवेति'। अत्रेदं विचार्यते -- संन्यासस्त्विति प्रथमान्तसंन्यासपदक व सार्वत्रिको मूलपाठः। परन्तु संन्यासमाप्तुमिति विलिखता आचार्येण अपि नाम द्वितीयार्थे प्रथमा छान्दसी इति सूचितम्? अथ स्याद्वा आचार्यसमादृतो मूलपाठः 'संन्यासं तु महाबाहो' इत्येव? स्याद्वा संन्यास आप्तुं दुःखमेवेत्येव लिलेखिषितमाचार्येण, यश्च मार्गो व्याख्यात्रन्तराणामपि बहूनाम्? सर्वत्रापि पक्षे श्रीभास्कराचार्योपदर्शितः संन्यासपदस्य यथाश्रुतार्थकत्वे प्रथमान्तत्वस्य साधुत्वानुपपत्तेः तद्भिया तत्पदस्य अर्श आद्यजन्तत्वं परिकल्प्य संन्यास्यर्थकत्वमंङ्गीकार्यमिति मार्गो न तथा हृदयङ्गम इति सूच्यत इवाचार्येण।

'प्राङ्नीत्या' , प्रागुक्तयुक्त्या।।

श्लो. 7-11 ( व्या ) 'अकरणप्रतिषेधारूढत्वात्' इति। क्रियते अधिक्रियते अनेन इति करणं विधिः; प्रतिषिध्यते अनेनेति प्रतिषेधः; तावारूढः, तयोरधिकृतः अज्ञानी; स न भवतीति अकरणप्रतिषेधारूढः; तस्य भावस्तस्मादित्यर्थोऽभिमत इव भाति। मातृकासु सर्वासु न लिप्यते 'करणप्रतिषेधारूढत्वादिति' वर्तते। तत्र करणेत्यतः पूर्वम् अकारः प्रश्लिष्ट इव। अथ वा न प्रश्लिष्टः। करणे प्रतिषेधे च अरूढत्वात् अस्थिरत्वात् अनाग्रहात् इत्यर्थः।।

श्लो. 14 ( व्या ) 'नान्येति'। घटादिरूपकार्यादिति शेषः। 'न च सा घटनिष्पदादितेति'। 'न चासौ घटनिष्पादयिता इति विवक्षितमिव'। 'अन्यो घटादिरूपकार्यात् ' इत्यनुषज्यते।।

अथवा, न वैदिकं स्मार्तं वा, अग्निहोत्रादिकर्ममात्रं विवक्षितम्, परन्तु क्रियासामान्यमेव।

घटादि निष्पादयिता कुलालादिः तदीयाः क्रियाः दण्डचक्रभ्रमणादयः, तत्फलं घटादि इत्येतत् सर्वं प्रकृते विवक्षितम्। सर्वस्यापि संविदन्तर्गततत्वात् इत्यभिप्रायः।।
श्लो. 16 ( व्या ) 'स्वयमेव करोति' इति। तेनेदं सूचितमिव यत् प्रायश आचार्यः प्रकृतगीताश्लोकचतुर्थपादं 'प्रकाशयति तत् स्वयम् ' इति पपाठ इति। परन्तु 'प्रकाशयति तत् परम्' इत्येव सार्वत्रिकः पाठः। अथ वा परमित्यस्यैव स्वयमित्यर्थवर्णनमिति वक्तव्यम्। 'स्वयमेव करोतीत्यस्य' स्वपरप्रकाशकत्वमित्यनेन पूर्वतनेनाप्यन्वयः।।
श्लो. 18 ( व्या ) 'समं पश्यन्ति इति न तु व्यवहरन्ति इति'। 'अनेन मूले समदर्शिन' इत्यत्र सममिति दर्शनक्रियाविशेषणमिति सूचितम्।।
श्लो. 21 ( व्या ) 'एवं भावयतीति'। तथा च मूले आद्यपादत्रयं बुधस्य ज्ञानाकाराभिलापकमिति भावः।
'तथाविधा' अपीति। 'अतथाविधा अपि' इत्येव विवक्षितमिव। अदुःखकारणरूपा अपीति तदर्थः। अथ वा यदि स्थितस्य गतिः कल्पनीया तदा -- 'तथाविधत्वं च संस्पर्शजन्यत्वम्; तदेव दुःखकारणत्वेन निर्दिष्टम्। अपि, अपि चेत्यर्थः' इत्येवं रीत्या कथंचित् नेयम्।।
श्लो. 22 ( व्या ) 'न चैतद्दुःशकमित्यादि'। अत्र पङ्क्तयस्त्रुटिता इव। न हि क्षणमात्रसाध्योऽतिसुशकः पन्था उपदिश्यते भगवता। अतोऽत्रेदं विवक्षितमिव -- 'न चैतत् सुशकम्; दुःशकोऽयं कामक्रोधादिजो वेगः शरीरान्तकालं यावत् -- न क्षणमात्रम् -- सह्यते यदि, तदा आत्यन्तिकी सुखप्राप्तिः।' इति। अत्र च संदर्भे
'न क्षणमात्रम्, किन्तु प्राक् शरीरविमोचनात्, आ देहपातात् '
इति श्रीभास्कराचार्यव्याखायनम्; तथा --
'अयं च -- कष्टतमो दोषः -- -दुर्निवारश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह -- आ मरणात् -- -'
इति श्रीशङ्कराचार्यव्याख्यानं चानुसंधेयम्।।
श्लो. 25 ( व्या ) 'सर्वास्ववस्थासु ब्रह्मसत्ता ब्रह्मसत्ता पारमार्थिकी' इत्यादि। अनेन सर्वतो ब्रह्म निर्वाणं वर्तते इति मूलं व्याख्यातमिव। तथा हि -- सर्वतः, सर्वदा इत्यर्थः; सार्वविभक्तिकस्तसिः। वर्तते इति धात्वर्थो वर्तनं सत्ता, सा ब्रह्मेति प्रथमान्तपदार्थब्रह्मकर्तृका। सत्तायां ब्रह्मकर्तृकत्वं च ब्रह्मात्मकत्वमेव। निर्वाणमिति क्रियाविशेषणस्यार्थः सत्तायमभेदेनान्वेति; निर्वाणत्वं च पारमार्थिकत्वम्। कथम्? वा गतिगन्धनयोरित्यदादेर्धातोर्भावे क्तप्रत्यये निष्पन्नस्य वातशब्दस्य गत्यर्थकतया, निर्गतं वातात् -- 'निर्वाणोऽवाते
(1 घ्नॠ,1 ज्क्ष्क्ष्क्ष्, त्त, 50 ) इति तकारस्य णत्वे -- इति व्युत्पत्त्या निष्पन्नस्य निर्वाणशब्दस्य सर्वगतिशून्यार्थकत्वात्। वं च सर्वगमनागमनशून्या अनागमापायिनी पारमार्थिकापरपर्याया ब्रह्मात्मिका सत्ता इत्यर्थलाभः इति।।
वर्तते इति लड्प्रयोगस्वारस्यं दर्शयति -- 'न निरोधकालमपेक्षते इति'। चित्तवृत्तिनिरोधकालं नापेक्षते इत्यर्थः। अष्टांगयोगिनो यदा चित्तवृत्तिनिरोधः तदा, तदैव द्रष्टुः स्वरूपेऽवस्थानम्।

यतेस्तु वर्तते सर्वास्ववस्थासु ब्रह्मसत्ता इति विशेषः। अथ वा निरोधो नाशमाह। स च शरीरस्येत्यादिः। तथा च शरीरनाशकालं मरणकालं नापेक्षते इत्यर्थः। तार्किकादिमते 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' ( न्या. सू. क्ष्क्ष, त, 2 ) इति रीत्या दुःखात्मकशरीरापायकालमपेक्षतेऽपवर्गः। यतिस्तु अत्र ब्रह्म समश्नुते इति हृदयम्।।

श्लो. 26-27 ( व्या ) 'एतदेव बाह्ये' इति। तत् व्युत्पत्तिप्रदर्शनं बाह्यानां भौतिकानां। भ्रूप्राणापानवायुनासानां विषयेऽपि संभवतीत्यर्थः। अथवा ते व बाह्ये इत्येव लिलेखिषितम्। क्रोधरागो धर्माधर्मौ इति द्विकद्वये ते व बाह्ये, न तु स्पर्शादीनि, यतः तानि भगवत्याः संविद आभासरूपाणि। तेषां क्रोधादिसंबन्धादेव, न वस्तुगत्या, बाह्यत्वमिति तात्पर्यम्।।

श्लो. 28 ( व्या ) 'यज्ञफलेषु भोक्ता इति'। यज्ञेषु फलभोक्तेति यावत्। 'यतो वक्ष्यत्यनुपदमेव' 'एवं तपस्सु ' इति। भोक्ता, पालयिता। कथमित्याह -- 'त्यक्तफलत्वात्' इति। त्यक्तं, दत्तं, वितीर्णं फलं, कर्मफलं येन तस्य भावस्तस्मादिति विग्रहः। फलदातृत्वादित्यर्थः। यद्वा भोक्ता, अनुभविता, अनुभवितृत्वेन मतः। कुतः? त्यक्तफलत्वात्, त्यक्तं समर्पितं फलं यस्मै तस्य भावस्तस्मात्। 'यत् करोषि -- यज्जुहोषि -- यत्तपस्यसि -- तत् कुरुष्व मदर्पणम्' इति ( क्ष्त्र, 29 ) वक्ष्यमाणोपदेशानुसारेण संन्यासिना भगवेत सर्वसमर्पणात् इति भावः। अथ वा त्यक्तफलत्वात् इत्यस्य विदुष इत्यादिः। तस्यैव प्रकरणात्। उक्तदिशा विदुषा फलस्य त्यक्तत्वात् भोक्ता परमात्मैव मत इति भावः। 'एवं तपस्सु' इति। तपःफलविषयेऽप्येवमेवार्थो बोध्य इत्यर्थः।।

'संग्रहश्लोके -- मोक्षायैवावकल्पते इत्यत्र' 'भक्तिर्ज्ञानाय कल्पते' इत्यादाविव, 'क्लृपि संपद्यमाने च'

( 1घ्त्रॠ,1 क्ष्क्ष, त्त्त, 13, 1ध्ठ्ठद्धद्ययत्त्ठ्ठ1 2 ) इति चतुर्थी।।

।।इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां पञ्चमोऽध्यायः।।

**स्पर्शान् कृत्वा बहिर्बाह्यान् चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥५.२७॥**

sparśān kṛtvā bahirbāhyān cakṣuścaivāntare bhruvoḥ |
prāṇāpānau samau kṛtvā nāsābhyantaracāriṇau ||5.27||

स्पर्शान् $^{2/3}$ कृत्वा $^{0}$ बहिः $^{0}$ बाह्यान् $^{2/3}$ चक्षुः $^{2/1}$ च $^{0}$ एव $^{0}$ अन्तरे $^{7/1}$ भ्रुवोः $^{6/2}$ ।
प्राणापानौ $^{2/2}$ समौ $^{2/2}$ कृत्वा $^{0}$ नासाभ्यन्तरचारिणौ $^{2/2}$ ॥५.२७॥

- स्पर्शान् [sparśān] = the objects = स्पर्श (m.) + कर्मणि to कृत्वा 2/3
- कृत्वा [kṛtvā] = keeping = अव्ययम्
- बहिः [bahiḥ] = outside = अव्ययम्
- बाह्यान् [bāhyān] = external = बाह्य (m.) + adjective to स्पर्शान् 2/3
- चक्षुः [cakṣuḥ] = the eye = चक्षुस् (n.) + कर्मणि to (कृत्वा) 2/1
- च [ca] = and = अव्ययम्
- एव [eva] = indeed = अव्ययम्
- अन्तरे [antare] = between = अव्ययम्
- भ्रुवोः [bhruvoḥ] = of two eyebrows = भ्रू (f.) + सम्बन्धे to अन्तरे 6/2
- प्राणापानौ [prāṇāpānau] = the exhalation and inhalation = प्राणापान (m.) + कर्मणि to कृत्वा 2/2
    - प्राणः च अपानः च प्राणापानौ (ID), तौ ।
- समौ [samau] = equal = सम (m.) + objective complement to प्राणापानौ 2/2
    - प्राणः च अपानः च प्राणापानौ (ID), तौ ।
- कृत्वा [kṛtvā] = making = अव्ययम्
- नासाभ्यन्तरचारिणौ [nāsābhyantaracāriṇau] = the movement in the nostrils= नासाभ्यन्तरचारिन् (m.) + adjective to प्राणापानौ 2/2
    - नासयोः आभ्यन्तरे चरणं शीलं ययोः तौ नासाभ्यन्तरचारिणौ (UT), तौ।

Shutting out the external objects and keeping the eyes between the two eyebrows, (closed), keeping the movement of the exhalation and inhalation in the nostrils equal, (rhythmic), … to be continued.

Sentence 1:

बाह्यान् $^{2/3}$ स्पर्शान् $^{2/3}$ बहिः $^{0}$ कृत्वा $^{0}$ चक्षुः $^{2/1}$ च $^{0}$ भ्रुवोः $^{6/2}$ अन्तरे $^{7/1}$ एव $^{0}$ (कृत्वा $^{0}$)।
नासाभ्यन्तरचारिणौ $^{2/2}$ प्राणापानौ $^{2/2}$ समौ $^{2/2}$ कृत्वा $^{0}$ ॥५.२७॥
Keeping (कृत्वा $^{0}$) out (बहिः $^{0}$) the external (बाह्यान् $^{2/3}$) objects (स्पर्शान् $^{2/3}$), and (च $^{0}$ एव $^{0}$) keeping (कृत्वा $^{0}$) the eyes (चक्षुः $^{2/1}$) between (अन्तरे $^{7/1}$) the two eyebrows (भ्रुवोः $^{6/2}$), (closed), keeping (कृत्वा $^{0}$) the movement of the exhalation and inhalation (प्राणापानौ $^{2/2}$) in the nostrils (नासाभ्यन्तरचारिणौ $^{2/2}$) equal (समौ $^{2/2}$), … to be continued.

सम्यग्दर्शननिष्ठानां संन्यासिनां सद्यः मुक्तिः उक्ता। कर्मयोगश्च ईश्वरार्पितसर्वभावेन ईश्वरे ब्रह्मणि आधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षाय इति भगवान् पदे पदे अब्रवीत्, वक्ष्यति च। अथ इदानीं ध्यानयोगं सम्यग्दर्शनस्य अन्तरङ्गं विस्तरेण वक्ष्यामि इति तस्य सूत्रस्थानीयान् श्लोकान् उपदिशति स्म -- -
।।5.27 -- 5.28।। --
स्पर्शान् शब्दादीन् कृत्वा बहिः बाह्यान् -- श्रोत्रादिद्वारेण अन्तः बुद्धौ प्रवेशिताः शब्दादयः
विषयाः तान् अचिन्तयतः शब्दादयो बाह्या बहिरेव कृताः भवन्ति -- तान् एवं बहिः कृत्वा
चक्षुश्चैव अन्तरे भ्रुवोः 'कृत्वा' इति अनुषज्यते। तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ
कृत्वा, यतेन्द्रियमनोबुद्धिः यतानि संयतानि इन्द्रियाणि मनः बुद्धिश्च यस्य सः
यतेन्द्रियमनोबुद्धिः, मननात् मुनिः संन्यासी, मोक्षपरायणः एवं देहसंस्थानात् मोक्षपरायणः मोक्ष एव परम् अयनं परा गतिः यस्य सः अयं मोक्षपरायणो मुनिः भवेत्। विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः ते विगताः यस्मात् सः विगतेच्छाभयक्रोधः, यः एवं वर्तते सदा
संन्यासी, मुक्त एव सः न तस्य मोक्षायान्यः कर्तव्योऽस्ति।।
एवं समाहितचित्तेन किं विज्ञेयम् इति, उच्यते --
भोक्तारं यज्ञतपसां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च, सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तम् ईश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिम् ऋच्छति प्राप्नोति।।
इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
पञ्चमोऽध्यायः।।

श्लो. 6 ( व्या ) 'संन्यासमाप्तुं दुःखमेवेति'। अत्रेदं विचार्यते -- संन्यासस्त्विति प्रथमान्तसंन्यासपदक व सार्वत्रिको मूलपाठः। परन्तु संन्यासमाप्तुमिति विलिखता आचार्येण अपि नाम द्वितीयार्थे प्रथमा छान्दसी इति सूचितम्? अथ स्याद्वा आचार्यसमादृतो मूलपाठः 'संन्यासं तु महाबाहो' इत्येव? स्याद्वा संन्यास आप्तुं दुःखमेवेत्येव लिलेखिषितमाचार्येण, यश्च मार्गो व्याख्यात्रन्तराणामपि बहूनाम्? सर्वत्रापि पक्षे श्रीभास्कराचार्योपदर्शितः संन्यासपदस्य यथाश्रुतार्थकत्वे प्रथमान्तत्वस्य साधुत्वानुपपत्तेः तद्धिया तत्पदस्य अर्श आद्यजन्तत्वं परिकल्प्य संन्यास्यर्थकत्वमङ्गीकार्यमिति मार्गो न तथा हृदयङ्गम इति सूच्यत इवाचार्येण।

'प्राङ्नीत्या' , प्रागुक्तयुक्त्या।।

श्लो. 7-11 ( व्या ) 'अकरणप्रतिषेधारूढत्वात्' इति। क्रियते अधिक्रियते अनेन इति करणं विधिः; प्रतिषिध्यते अनेनेति प्रतिषेधः; तावारूढः, तयोरधिकृतः अज्ञानी; स न भवतीति अकरणप्रतिषेधारूढः; तस्य भावस्तस्मादित्यर्थोऽभिमत इव भाति। मातृकासु सर्वासु न लिप्यते 'करणप्रतिषेधारूढत्वादिति' वर्तते। तत्र करणेत्यतः पूर्वम् अकारः प्रश्लिष्ट इव। अथ वा न प्रश्लिष्टः। करणे प्रतिषेधे च अरूढत्वात् अस्थिरत्वात् अनाग्रहात् इत्यर्थः।।

श्लो. 14 ( व्या ) 'नान्येति'। घटादिरूपकार्यादिति शेषः। 'न च सा घटनिष्पदादितेति'। 'न चासौ घटनिष्पादयिता इति विवक्षितमिव'। 'अन्यो घटादिरूपकार्यात् ' इत्यनुषज्यते।। अथवा, न वैदिकं स्मार्तं वा, अग्निहोत्रादिकर्ममात्रं विवक्षितम्, परन्तु क्रियासामान्यमेव। घटादि निष्पादयिता कुलालादिः तदीयाः क्रियाः दण्डचक्रभ्रमणादयः, तत्फलं घटादि इत्येतत् सर्वं प्रकृते विवक्षितम्। सर्वस्यापि संविदन्तर्गतत्वात् इत्यभिप्रायः।।

श्लो. 16 ( व्या ) 'स्वयमेव करोति' इति। तेनेदं सूचितमिव यत् प्रायश आचार्यः प्रकृतगीताश्लोकचतुर्थपादं 'प्रकाशयति तत् स्वयम् ' इति पपाठ इति। परन्तु 'प्रकाशयति तत् परम्' इत्येव सार्वत्रिकः पाठः। अथ वा परमित्यस्यैव स्वयमित्यर्थवर्णनमिति वक्तव्यम्। 'स्वयमेव करोतीत्यस्य' स्वपरप्रकाशकत्वमित्यनेन पूर्वतनेनाप्यन्वयः।।

श्लो. 18 ( व्या ) 'समं पश्यन्ति इति न तु व्यवहरन्ति इति'। 'अनेन मूले समदर्शिन' इत्यत्र सममिति दर्शनक्रियाविशेषणमिति सूचितम्।।

श्लो. 21 ( व्या ) 'एवं भावयतीति'। तथा च मूले आद्यपादत्रयं बुधस्य ज्ञानाकाराभिलापकमिति भावः।

'तथाविधा' अपीति। 'अतथाविधा अपि' इत्येव विवक्षितमिव। अदुःखकारणरूपा अपीति तदर्थः। अथ वा यदि स्थितस्य गतिः कल्पनीया तदा -- 'तथाविधत्वं च संस्पर्शजन्यत्वम्; तदेव दुःखकारणत्वेन निर्दिष्टम्। अपि, अपि चेत्यर्थः' इत्येवं रीत्या कथंचित् नेयम्।।

श्लो. 22 ( व्या ) 'न चैतद्दुःशकमित्यादि'। अत्र पङ्क्तयस्त्रुटिता इव। न हि क्षणमात्रसाध्योऽतिसुशकः पन्था उपदिश्यते भगवता। अतोऽत्रेदं विवक्षितमिव -- 'न चैतत् सुशकम्; दुःशकोऽयं कामक्रोधादिजो वेगः शरीरान्तकालं यावत् -- न क्षणमात्रम् -- सह्यते यदि, तदा आत्यन्तिकी सुखप्राप्तिः।' इति। अत्र च संदर्भे

'न क्षणमात्रम्, किन्तु प्राक् शरीरविमोचनात्, आ देहपातात् '
इति श्रीभास्कराचार्यव्याखायनम्; तथा --
'अयं च -- कष्टतमो दोषः -- -दुर्निवारश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह -- आ मरणात् -- -'
इति श्रीशङ्कराचार्यव्याख्यानं चानुसंधेयम्।।
श्लो. 25 ( व्या ) 'सर्वास्ववस्थासु ब्रह्मसत्ता ब्रह्मसत्ता पारमार्थिकी' इत्यादि। अनेन सर्वतो ब्रह्म निर्वाणं वर्तते इति मूलं व्याख्यातमिव। तथा हि -- सर्वतः, सर्वदा इत्यर्थः; सार्वविभक्तिकस्तसिः। वर्तते इति धात्वर्थो वर्तनं सत्ता, सा ब्रह्मेति प्रथमान्तपदार्थब्रह्मकर्तृका। सत्तायां ब्रह्मकर्तृकत्वं च ब्रह्मात्मकत्वमेव। निर्वाणमिति क्रियाविशेषणस्यार्थः सत्तायमभेदेनान्वेति; निर्वाणत्वं च पारमार्थिकत्वम्। कथम्? वा गतिगन्धनयोरित्यदादेर्धातोर्भावे क्तप्रत्यये निष्पन्नस्य वातशब्दस्य गत्यर्थकतया, निर्गतं वातात् -- 'निर्वाणोऽवाते
(1 घ्रृ,1 ज्क्ष्क्ष्क्ष्, त्त, 50 ) इति तकारस्य णत्वे -- इति व्युत्पत्त्या निष्पन्नस्य निर्वाणशब्दस्य सर्वगतिशून्यार्थकत्वात्। वं च सर्वगमनागमनशून्या अनागमापायिनी पारमार्थिकापरपर्याया ब्रह्मात्मिका सत्ता इत्यर्थलाभः इति।।
वर्तते इति लट्प्रयोगस्वारस्यं दर्शयति -- 'न निरोधकालमपेक्षते इति'। चित्तवृत्तिनिरोधकालं नापेक्षते इत्यर्थः। अष्टांगयोगिनो यदा चित्तवृत्तिनिरोधः तदा, तदैव द्रष्टुः स्वरूपेऽवस्थानम्। यतेस्तु वर्तते सर्वास्ववस्थासु ब्रह्मसत्ता इति विशेषः। अथ वा निरोधो नाशमाह। स च शरीरस्येत्यादिः। तथा च शरीरनाशकालं मरणकालं नापेक्षते इत्यर्थः। तार्किकादिमते 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' ( न्या. सू. क्ष्क्ष, त, 2 ) इति रीत्या दुःखात्मकशरीरापायकालमपेक्षतेऽपवर्गः। यतिस्तु अत्र ब्रह्म समश्नुते इति हृदयम्।।
श्लो. 26-27 ( व्या ) 'एतदेव बाह्ये' इति। तत् व्युत्पत्तिप्रदर्शनं बाह्यानां भौतिकानां। भ्रूप्राणापानवायुनासानां विषयेऽपि संभवतीत्यर्थः। अथवा ते व बाह्ये इत्येव लिलेखिषितम्। क्रोधरागो धर्माधर्मौ इति द्विकद्वये ते व बाह्ये, न तु स्पर्शादीनि, यतः तानि भगवत्याः संविद् आभासरूपाणि। तेषां क्रोधादिसंबन्धादेव, न वस्तुगत्या, बाह्यत्वमिति तात्पर्यम्।।
श्लो. 28 ( व्या ) 'यज्ञफलेषु भोक्ता इति'। यज्ञेषु फलभोक्तेति यावत्। 'यतो वक्ष्यत्यनुपदमेव' 'एवं तपस्सु ' इति। भोक्ता, पालयिता। कथमित्याह -- 'त्यक्तफलत्वात्' इति। त्यक्तं, दत्तं, वितीर्णं फलं, कर्मफलं येन तस्य भावस्तस्मादिति विग्रहः। फलदातृत्वादित्यर्थः। यद्वा भोक्ता, अनुभविता, अनुभवितृत्वेन मतः। कुतः? त्यक्तफलत्वात्, त्यक्तं समर्पितं फलं यस्मै तस्य भावस्तस्मात्। 'यत् करोषि -- यज्जुहोषि -- यत्तपस्यसि -- तत् कुरुष्व मदर्पणम्' इति ( क्ष्त्र, 29 ) वक्ष्यमाणोपदेशानुसारेण संन्यासिना भगवेत सर्वसमर्पणात् इति भावः। अथ वा त्यक्तफलत्वात् इत्यस्य विदुष इत्यादिः। तस्यैव प्रकरणात्। उक्तदिशा विदुषा फलस्य त्यक्तत्वात् भोक्ता परमात्मैव मत इति भावः।

'एवं तपस्सु' इति। तपःफलविषयेऽप्येवमेवार्थो बोध्य इत्यर्थः।।
'संग्रहश्लोके -- मोक्षायैवावकल्पते इत्यत्र' 'भक्तिर्ज्ञानाय कल्पते' इत्यादाविव, 'क्लृपि संपद्यमाने च'
( 1घ्रॠ,1 क्ष्क्ष्, त्त्त्, 13, 1ध्ठ्द्धय्यत्त्ठ1 2 ) इति चतुर्थी।।
।।इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां पञ्चमोऽध्यायः।।

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छभयक्रोधो यः सदा मुक्त एव सः ॥५.२८॥**

yatendriyamanobuddhirmunirmokṣaparāyaṇaḥ ।
vigatecchabhayakrodho yaḥ sadā mukta eva saḥ ।।5.28।।

यतेन्द्रियमनोबुद्धिः $^{1/1}$ मुनिः $^{1/1}$ मोक्षपरायणः $^{1/1}$ ।
विगतेच्छभयक्रोधः $^{1/1}$ यः $^{1/1}$ सदा $^{0}$ मुक्तः $^{1/1}$ एव $^{0}$ सः $^{1/1}$ ॥५.२८॥

- यतेन्द्रियमनोबुद्धिः [yatendriyamanobuddhiḥ] = one who has mastered his (or her) organs of action, senses, mind, and intellect = यतेन्द्रियमनोबुद्धि (m.) + 1/1
  - यतानि इन्द्रियाणि मनः बुद्धिः यस्य सः यतेन्द्रियमनोबुद्धिः (116B) ।
- मुनिः [muniḥ] = contemplative person = मुनि (m.) + 1/1
- मोक्षपरायणः [mokṣaparāyaṇaḥ] = one for whom mokṣa is the ultimate end = मोक्षपरायण (m.) + 1/1
  - मोक्षः परायणम् यस्य सः मोक्षपरायणः (116B) ।
- विगतेच्छभयक्रोधः [vigatecchabhayakrodhaḥ] = who is free from desire, fear, and anger = विगतेच्छभयक्रोध (m.) + 1/1
  - विगताः इच्छा भयः क्रोधः यस्मात् सः विगतेच्छभयक्रोधः (115B) ।
- यः [yaḥ] = the one who = यद् (pron. m.) + 1/1

- सदा [sadā] = always = अव्ययम्
- मुक्तः [muktaḥ] = liberated = मुक्त (m.) + 1/1
- एव [eva] = indeed = अव्ययम्
- सः [saḥ] = he is = तद् (pron. m.) + 1/1

… the contemplative person, who has mastered his (or her) organs of action, senses, mind, and intellect, one for whom mokṣa is the ultimate end, who is free from desire, fear, and anger, that person is always liberated indeed.

Sentence 1:

यः $^{1/1}$ मुनिः $^{1/1}$ यतेन्द्रियमनोबुद्धिः $^{1/1}$ मोक्षपरायणः $^{1/1}$ विगतेच्छभयक्रोधः $^{1/1}$ सः $^{1/1}$ सदा $^{0}$ मुक्तः $^{1/1}$ एव $^{0}$ ॥५.२८॥
… the contemplative person (यः $^{1/1}$ मुनिः $^{1/1}$), who has mastered his (or her) organs of action, senses, mind, and intellect (यतेन्द्रियमनोबुद्धिः $^{1/1}$),one for whom mokṣa is the ultimate end (मोक्षपरायणः $^{1/1}$), who is free from desire, fear, and anger (विगतेच्छभयक्रोधः $^{1/1}$), that person (सः $^{1/1}$) is always (सदा $^{0}$) liberated (मुक्तः $^{1/1}$) indeed (एव $^{0}$).

सम्यग्दर्शननिष्ठानां संन्यासिनां सद्यः मुक्तिः उक्ता। कर्मयोगश्च ईश्वरार्पितसर्वभावेन ईश्वरे ब्रह्मणि आधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षाय इति भगवान् पदे पदे अब्रवीत्, वक्ष्यति च। अथ इदानीं ध्यानयोगं सम्यग्दर्शनस्य अन्तरङ्गं विस्तरेण वक्ष्यामि इति तस्य सूत्रस्थानीयान् श्लोकान् उपदिशति स्म -- -
।।5.27 -- 5.28।। --
स्पर्शान् शब्दादीन् कृत्वा बहिः बाह्यान् -- श्रोत्रादिद्वारेण अन्तः बुद्धौ प्रवेशिताः शब्दादयः विषयाः तान् अचिन्तयतः शब्दादयो बाह्या बहिरेव कृताः भवन्ति -- तान् एवं बहिः कृत्वा चक्षुश्चैव अन्तरे भ्रुवोः 'कृत्वा' इति अनुषज्यते। तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा, यतेन्द्रियमनोबुद्धिः यतानि संयतानि इन्द्रियाणि मनः बुद्धिश्च यस्य सः

यतेन्द्रियमनोबुद्धिः, मननात् मुनिः संन्यासी, मोक्षपरायणः एवं देहसंस्थानात् मोक्षपरायणः मोक्ष एव परम् अयनं परा गतिः यस्य सः अयं मोक्षपरायणो मुनिः भवेत्। विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः ते विगताः यस्मात् सः विगतेच्छाभयक्रोधः, यः एवं वर्तते सदा
संन्यासी, मुक्त एव सः न तस्य मोक्षायान्यः कर्तव्योऽस्ति।।
एवं समाहितचित्तेन किं विज्ञेयम् इति, उच्यते --
भोक्तारं यज्ञतपसां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च, सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तम् ईश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिम् ऋच्छति प्राप्नोति।।
इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
पञ्चमोऽध्यायः।।

।श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी।।
श्लो. 6 ( व्या ) 'संन्यासमाप्तुं दुःखमेवेति'। अत्रेदं विचार्यते -- संन्यासस्त्विति प्रथमान्तसंन्यासपदक व सार्वत्रिको मूलपाठः। परन्तु संन्यासमाप्तुमिति विलिखता आचार्येण अपि नाम द्वितीयार्थे प्रथमा छान्दसी इति सूचितम्? अथ स्याद्वा आचार्यसमादृतो मूलपाठः 'संन्यासं तु महाबाहो' इत्येव? स्याद्वा संन्यास आप्तुं दुःखमेवेत्येव लिलेखिषितमाचार्येण, यश्च मार्गो व्याख्यात्रन्तराणामपि बहूनाम्? सर्वत्रापि पक्षे श्रीभास्कराचार्योपदर्शितः संन्यासपदस्य यथाश्रुतार्थकत्वे प्रथमान्तत्वस्य साधुत्वानुपपत्तेः तद्भिया तत्पदस्य अर्श आद्यजन्तत्वं परिकल्प्य संन्यास्यर्थकत्वमंङ्गीकार्यमिति मार्गो न तथा हृदयङ्गम इति सूच्यत इवाचार्येण।
'प्राङ्गीत्या' , प्रागुक्तयुक्त्या।।
श्लो. 7-11 ( व्या ) 'अकरणप्रतिषेधारूढत्वात्' इति। क्रियते अधिक्रियते अनेन इति करणं विधिः; प्रतिषिध्यते अनेनेति प्रतिषेधः; तावारूढः, तयोरधिकृतः अज्ञानी; स न भवतीति अकरणप्रतिषेधारूढः; तस्य भावस्तस्मादित्यर्थोऽभिमत इव भाति। मातृकासु सर्वासु न लिप्यते 'करणप्रतिषेधारूढत्वादिति' वर्तते। तत्र करणेत्यतः पूर्वम् अकारः प्रश्लिष्ट इव। अथ वा न प्रश्लिष्टः। करणे प्रतिषेधे च अरूढत्वात् अस्थिरत्वात् अनाग्रहात् इत्यर्थः।।
श्लो. 14 ( व्या ) 'नान्येति'। घटादिरूपकार्यादिति शेषः। 'न च सा घटनिष्पदादितेति'। 'न चासौ घटनिष्पादयिता इति विवक्षितमिव'। 'अन्यो घटादिरूपकार्यात् ' इत्यनुषज्यते।।
अथवा, न वैदिकं स्मार्तं वा, अग्निहोत्रादिकर्ममात्रं विवक्षितम्, परन्तु क्रियासामान्यमेव। घटादि निष्पादयिता कुलालादिः तदीयाः क्रियाः दण्डचक्रभ्रमणादयः, तत्फलं घटादि इत्येतत् सर्वं प्रकृते विवक्षितम्। सर्वस्यापि संविदन्तर्गतत्वात् इत्यभिप्रायः।।
श्लो. 16 ( व्या ) 'स्वयमेव करोति' इति। तेनेदं सूचितमिव यत् प्रायश आचार्यः प्रकृतगीताश्लोकचतुर्थपादं 'प्रकाशयति तत् स्वयम् ' इति पपाठ इति। परन्तु 'प्रकाशयति तत्

परम्' इत्येव सार्वत्रिकः पाठः। अथ वा परमित्यस्यैव स्वयमित्यर्थवर्णनमिति वक्तव्यम्।
'स्वयमेव करोतीत्यस्य' स्वपरप्रकाशकत्वमित्यनेन पूर्वतनेनाप्यन्वयः।।
श्लो. 18 ( व्या ) 'समं पश्यन्ति इति न तु व्यवहरन्ति इति'। 'अनेन मूले समदर्शिन' इत्यत्र
सममिति दर्शनक्रियाविशेषणमिति सूचितम्।।
श्लो. 21 ( व्या ) 'एवं भावयतीति'। तथा च मूले आद्यपादत्रयं बुधस्य
ज्ञानाकाराभिलापकमिति भावः।
'तथाविधा' अपीति। 'अतथाविधा अपि' इत्येव विवक्षितमिव। अदुःखकारणरूपा अपीति
तदर्थः। अथ वा यदि स्थितस्य गतिः कल्पनीया तदा -- 'तथाविधत्वं च संस्पर्शजन्यत्वम्;
तदेव दुःखकारणत्वेन निर्दिष्टम्। अपि, अपि चेत्यर्थः' इत्येवं रीत्या कथंचित् नेयम्।।
श्लो. 22 ( व्या ) 'न चैतद्दुःशकमित्यादि'। अत्र पङ्क्तयस्त्रुटिता इव। न हि
क्षणमात्रसाध्योऽतिसुशकः पन्था उपदिश्यते भगवता। अतोऽत्रेदं विवक्षितमिव -- 'न चैतत्
सुशकम्; दुःशकोऽयं कामक्रोधादिजो वेगः शरीरान्तकालं यावत् -- न क्षणमात्रम् -- सह्यते
यदि, तदा आत्यन्तिकी सुखप्राप्तिः।' इति। अत्र च संदर्भे
'न क्षणमात्रम्, किन्तु प्राक् शरीरविमोचनात्, आ देहपातात् '
इति श्रीभास्कराचार्यव्याखायनम्; तथा --
'अयं च -- कष्टतमो दोषः -- -दुर्निवारश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह -- आ
मरणात् -- -'
इति श्रीशङ्कराचार्यव्याख्यानं चानुसंधेयम्।।
श्लो. 25 ( व्या ) 'सर्वास्ववस्थासु ब्रह्मसत्ता ब्रह्मसत्ता पारमार्थिकी' इत्यादि। अनेन सर्वतो
ब्रह्म निर्वाणं वर्तते इति मूलं व्याख्यातमिव। तथा हि -- सर्वतः, सर्वदा इत्यर्थः;
सार्वविभक्तिकस्तसिः। वर्तते इति धात्वर्थो वर्तनं सत्ता, सा ब्रह्मेति प्रथमान्तपदार्थब्रह्मकर्तृका।
सत्तायां ब्रह्मकर्तृकत्वं च ब्रह्मात्मकत्वमेव। निर्वाणमिति क्रियाविशेषणस्यार्थः
सत्तायमभेदेनान्वेति; निर्वाणत्वं च पारमार्थिकत्वम्। कथम्? वा
गतिगन्धनयोरित्यदादेर्धातोर्भावे क्तप्रत्यये निष्पन्नस्य वातशब्दस्य गत्यर्थकतया, निर्गतं वातात् --
'निर्वाणोऽवाते
(1 घ्त्रृ,1 ज्क्षक्षक्ष, त्त, 50 ) इति तकारस्य णत्वे -- इति व्युत्पत्त्या निष्पन्नस्य निर्वाणशब्दस्य
सर्वगतिशून्यार्थकत्वात्। वं च सर्वगमनागमनशून्या अनागमापायिनी पारमार्थिकापरपर्याया
ब्रह्मात्मिका सत्ता इत्यर्थलाभः इति।।
वर्तते इति लड्प्रयोगस्वारस्यं दर्शयति -- 'न निरोधकालमपेक्षते इति'। चित्तवृत्तिनिरोधकालं
नापेक्षते इत्यर्थः। अष्टांगयोगिनो यदा चित्तवृत्तिनिरोधः तदा, तदैव द्रष्टुः स्वरूपेऽवस्थानम्।
यतेस्तु वर्तते सर्वास्ववस्थासु ब्रह्मसत्ता इति विशेषः। अथ वा निरोधो नाशमाह। स च
शरीरस्येत्यादिः। तथा च शरीरनाशकालं मरणकालं नापेक्षते इत्यर्थः। तार्किकादिमते
'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' ( न्या. सू. क्ष्क्ष, त, 2 )
इति रीत्या दुःखात्मकशरीरापायकालमपेक्षतेऽपवर्गः। यतिस्तु अत्र ब्रह्म समश्नुते इति

हृदयम्।।
श्लो. 26-27 ( व्या ) 'एतदेव बाह्ये' इति। तत् व्युत्पत्तिप्रदर्शनं बाह्यानां भौतिकानां।
भ्रूप्राणापानवायुनासानां विषयेऽपि संभवतीत्यर्थः। अथवा ते व बाह्ये इत्येव लिलेखिषितम्।
क्रोधरागो घर्माधर्मौ इति द्विकद्वये ते व बाह्ये, न तु स्पर्शादीनि, यतः तानि भगवत्याः संविद
आभासरूपाणि। तेषां क्रोधादिसंबन्धादेव, न वस्तुगत्या, बाह्यत्वमिति तात्पर्यम्।।
श्लो. 28 ( व्या ) 'यज्ञफलेषु भोक्ता इति'। यज्ञेषु फलभोक्तेति यावत्। 'यतो
वक्ष्यत्यनुपदमेव' 'एवं तपस्सु ' इति। भोक्ता, पालयिता। कथमित्याह -- 'त्यक्तफलत्वात्'
इति। त्यक्तं, दत्तं, वितीर्णं फलं, कर्मफलं येन तस्य भावस्तस्मादिति विग्रहः।
फलदातृत्वादित्यर्थः। यद्वा भोक्ता, अनुभविता, अनुभवितृत्वेन मतः। कुतः? त्यक्तफलत्वात्,
त्यक्तं समर्पितं फलं यस्मै तस्य भावस्तस्मात्। 'यत् करोषि -- यज्जुहोषि -- यत्तपस्यसि --
तत् कुरुष्व मदर्पणम्' इति ( क्ष्त्र, 29 ) वक्ष्यमाणोपदेशानुसारेण संन्यासिना भगवेत
सर्वसमर्पणात् इति भावः। अथ वा त्यक्तफलत्वात् इत्यस्य विदुष इत्यादिः। तस्यैव
प्रकरणात्। उक्तदिशा विदुषा फलस्य त्यक्तत्वात् भोक्ता परमात्मैव मत इति भावः।
'एवं तपस्सु' इति। तपःफलविषयेऽप्येवमेवार्थो बोध्य इत्यर्थः।।
'संग्रहश्लोके -- मोक्षायैवावकल्पते इत्यत्र' 'भक्तिर्ज्ञानाय कल्पते' इत्यादाविव, 'क्लृपि
संपद्यमाने च'
( 1घ्रॠ,1 क्ष्क्ष, त्त्त, 13, 1ध्ठ्ढ्द्यद्यत्त्ठ्1 2 ) इति चतुर्थी।।
।।इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां पञ्चमोऽध्यायः।।

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥५.२९॥**

bhoktāraṃ yajñatapasāṃ sarvalokamaheśvaram |
suhṛdaṃ sarvabhūtānāṃ jñātvā māṃ śāntimṛcchati ||5.29||

**भोक्तारम्** $^{2/1}$ **यज्ञतपसाम्** $^{6/3}$ **सर्वलोकमहेश्वरम्** $^{2/1}$ **।**
**सुहृदम्** $^{2/1}$ **सर्वभूतानाम्** $^{6/3}$ **ज्ञात्वा** $^{0}$ **माम्** $^{2/1}$ **शान्तिम्** $^{2/1}$ **ऋच्छति** $^{III/1}$ **॥५.२९॥**

- भोक्तारम् [bhoktāram] = sustainer = भोक्तृ (m.) + objective complement to माम् 2/1
    - भुज् पालनाभ्यवहारयोः (7P) to protect, to eat + तृच् (कर्तरि)
- यज्ञतपसाम् [yajñatapasām] = of rituals and disciplines = यज्ञतपस् (m.) + सम्बन्धे to भोक्तारम् 6/3
    - यज्ञाः तपांसि च यज्ञतपांसि (ID), तेषाम् ।
- सर्वलोकमहेश्वरम् [sarvalokamaheśvaram] = the lord of all the worlds = सर्वलोकमहेश्वर (m.) + objective complement to माम् 2/1
    - सर्वेषां लोकानां महान् ईश्वरः सर्वलोकमहेश्वरः (6T) ।
- सुहृदम् [suhṛdam] = friend = सुहृद् (m.) + objective complement to माम् 2/1
- सर्वभूतानाम् [sarvabhūtānām] = of all beings = सर्वभूत (n.) + सम्बन्धे to सुहृदम् 6/3
    - सर्वाणि भूतानि सर्वभूतानि (KT) तेषाम् ।
- ज्ञात्वा [jñātvā] = having known = अव्ययम्
    - ज्ञा (9P) to know + क्त्वा
- माम् [mām] = me = अस्मद् (pron. m.) + कर्मणि to ज्ञात्वा 2/1
- शान्तिम् [śāntim] = peace = शान्ति (f.) + कर्मणि to ऋच्छति 2/1
- ऋच्छति [ṛcchati] = gains = ऋ (1P) to go, to gain + लट्/कर्तरि/III/1
    - ऋ is replaced by ऋच्छ् by 7.3.78

Knowing me as the sustainer of rituals and disciplines, the lord of all the worlds, friend of all beings, he gains peace.

Sentence 1:

यज्ञतपसाम् $^{6/3}$ भोक्तारम् $^{2/1}$ सर्वलोकमहेश्वरम् $^{2/1}$ सर्वभूतानाम् $^{6/3}$ सुहृदम् $^{2/1}$ माम् $^{2/1}$ ज्ञात्वा $^{0}$ शान्तिम् $^{2/1}$ ऋच्छति $^{III/1}$ ॥५.२९॥

Knowing (ज्ञात्वा $^{0}$) me (माम् $^{2/1}$) as the sustainer (भोक्तारम् $^{2/1}$) of rituals and disciplines (यज्ञतपसाम् $^{6/3}$), the lord of all the worlds (सर्वलोकमहेश्वरम् $^{2/1}$), friend (सुहृदम् $^{2/1}$) of all beings (सर्वभूतानाम् $^{6/3}$), he gains (ऋच्छति $^{III/1}$) peace (शान्तिम् $^{2/1}$).

एवं समाहितचित्तेन किं विज्ञेयम् इति, उच्यते --
भोक्तारं यज्ञतपसां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च, सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तम् ईश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिम् ऋच्छति प्राप्नोति।।
इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
पञ्चमोऽध्यायः।।

**श्रीभगवान् उवाच ।**

**अनाश्रितः कर्मफलं कार्यम् कर्म करोति यः ।**
**स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः ॥६.१॥**

śrībhagavān uvāca |
anāśritaḥ karmaphalaṃ kāryam karma karoti yaḥ |
sa sannyāsī ca yogī ca na niragnirna cākriyaḥ ||6.1||

श्रीभगवान् $^{1/1}$ उवाच $^{III/1}$ ।

अनाश्रितः $^{1/1}$ कर्मफलम् $^{2/1}$ कार्यम् $^{2/1}$ कर्म $^{2/1}$ करोति $^{III/1}$ यः $^{1/1}$ ।
सः $^{1/1}$ सन्न्यासी $^{1/1}$ च $^{0}$ योगी $^{1/1}$ च $^{0}$ न $^{0}$ निरग्निः $^{1/1}$ न $^{0}$ च $^{0}$ अक्रियः $^{1/1}$ ॥६.१॥

- श्रीभगवान् [śrībhagavān] = Bhagavān = भगवत् (m.) + कर्तरि to उवाच 1/1
    - भगः अस्य अस्ति इति भगवान् ।
    - श्रिया सहित भगवान् श्रीभगवान् ।
- उवाच [uvāca] = said = वच् (2P) to say + लिट्/कर्तरि/III/1

- अनाश्रितः [anāśritaḥ] = one without dependance = अनाश्रित (m.) + 1/1
- कर्मफलम् [karmaphalam] = the result of action = कर्मफल (n.) + कर्मणि to अनाश्रितः 2/1
    - कर्मणः फलं कर्मफलम् (6T) ।
- कार्यम् [kāryam] = to be done = कार्य (n.) + adjective to कर्म 2/1
- कर्म [karma] = action = कर्मन् (n.) + कर्मणि to करोति 2/1
- करोति [karoti] = does = कृ (8U) to do + लट्/कर्तरि/III/1
- यः [yaḥ] = one who = यद् (m.) + 1/1
- सः [saḥ] = he = तद् (m.) + 1/1
- सन्न्यासी [sannyāsī] = *sannyāsī* = सन्न्यासिन् (m.) + 1/1
- च [ca] = and = अव्ययम्
- योगी [yogī] = *yogī* = योगिन् (m.) + 1/1
- च [ca] = and = अव्ययम्
- न [na] = not = अव्ययम्

- निरग्निः [niragniḥ] = one who has renounced all fire rituals = निरग्नि (m.) + 1/1
  - निर्गताः अग्नयः यास्मात् सः निरग्निः (P15B) ।
- न [na] = not = अव्ययम्
- च [ca] = and = अव्ययम्
- अक्रियः [akriyaḥ] = one who does not perform any other action = अक्रिय (m.) + 1/1
  - अविद्यमानाः क्रियाः यस्य सः अक्रियः (N16B) ।

Śrī Bhagavān said:

The one who performs action that is to be done without depending on the result of action, he is also a *sannyāsī* and a *yogī*, and not just the *sannyāsī* who has renounced all fire rituals and who does not perform any other action.

Sentence 1:

श्रीभगवान् $^{1/1}$ उवाच $^{III/1}$ ।
Śrī Bhagavān (श्रीभगवान् $^{1/1}$) said (उवाच $^{III/1}$).

Sentence 2:

अनाश्रितः $^{1/1}$ कर्मफलम् $^{2/1}$ कार्यम् $^{2/1}$ कर्म $^{2/1}$ करोति $^{III/1}$ यः $^{1/1}$ ।
सः $^{1/1}$ सन्न्यासी $^{1/1}$ च $^{0}$ योगी $^{1/1}$ च $^{0}$ न $^{0}$ निरग्निः $^{1/1}$ न $^{0}$ च $^{0}$ अक्रियः $^{1/1}$ ॥६.१॥
The one who () performs (करोति $^{III/1}$) action (कर्म $^{2/1}$) that is to be done (कार्यम् $^{2/1}$) without depending (अनाश्रितः $^{1/1}$) on the result of action (कर्मफलम् $^{2/1}$), he (सः $^{1/1}$) is also (च $^{0}$) a *sannyāsī* (सन्न्यासी $^{1/1}$) and (च $^{0}$) a *yogī* (योगी $^{1/1}$), and (च $^{0}$) not (न $^{0}$) just the *sannyāsī* who has renounced all fire rituals (निरग्निः $^{1/1}$) and (च $^{0}$) who does not perform any other action (अक्रियः $^{1/1}$).

।।6.1।। --
अनाश्रितः न आश्रितः अनाश्रितः। किम्? कर्मफलं कर्मणां फलं कर्मफलं यत् तदनाश्रितः,
कर्मफलतृष्णारहित इत्यर्थः। यो हि कर्मफले तृष्णावान् सः कर्मफलमाश्रितो भवति, अयं तु
तद्विपरीतः, अतः अनाश्रितः कर्मफलम्। एवंभूतः सन् कार्यं कर्तव्यं नित्यं काम्यविपरीतम् अग्निहोत्रादिकं कर्म करोति
निर्वर्तयति यः कश्चित् ईदृशः कर्मी स
कर्म्यन्तरेभ्यो विशिष्यते इत्येवमर्थमाह -- स संन्यासी च योगी च इति। संन्यासः परित्यागः स
यस्यास्ति स संन्यासी च, योगी च योगः चित्तसमाधानं स यस्यास्ति स योगी च इति
एवंगुणसंपन्नः अयं मन्तव्यः; न केवलं निरग्निः अक्रिय एव संन्यासी योगी च इति मन्तव्यः।
निर्गताः अग्नयः कर्माङ्गभूताः यस्मात् स निरग्निः, अक्रियश्च अनग्निसाधना अपि अविद्यमानाः
क्रियाः तपोदानादिकाः यस्य असौ अक्रियः।।

ननु च निरग्नेः अक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धम्। कथम् इह
साग्नेः सक्रियस्य च संन्यासित्वं योगित्वं च अप्रसिद्धमुच्यते इति। नैष दोषः, कयाचित्
गुणवृत्त्या उभयस्य संपिपादयिषितत्वात्। तत् कथम्? कर्मफलसंकल्पसंन्यासात् संन्यासित्वम्,
योगाङ्गत्वेन च कर्मानुष्ठानात् कर्मफलसंकल्पस्य च चित्तविक्षेपहेतोः परित्यागात् योगित्वं च
इति गौणमुभयम्; न पुनः मुख्यं संन्यासित्वं योगित्वं च अभिप्रेतमित्येतमर्थं दर्शयितुमाह --
।।6.2।। --
यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासं संन्यासम् इति प्राहुः श्रुतिस्मृतिविदः, योगं
कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि जानीहि हे पाण्डव। कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन
परमार्थसंन्यासेन कीदृशं सामान्यमङ्गीकृत्य तद्भाव उच्यते
इत्यपेक्षायाम् इदमुच्यते -- अस्ति हि परमार्थसंन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य। यो हि परमार्थसंन्यासी स
त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं संकल्पं प्रवृत्तिहेतुकामकारणं
संन्यस्यति। अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं संकल्पं संन्यस्यति इत्येतमर्थं
दर्शयिष्यन् आह -- न हि यस्मात् असंन्यस्तसंकल्पः असंन्यस्तः अपरित्यक्तः फलविषयः
संकल्पः अभिसंधिः येन सः असंन्यस्तसंकल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान् भवति न संभवतीत्यर्थः,
फलसंकल्पस्य चित्तवेक्षेपहेतुत्वात्। तस्मात् यः कश्चन कर्मी संन्यस्तफलसंकल्पो
भवेत् स योगी समाधानवान् अविक्षिप्तचित्तो भवेत्, चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः।।
एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं संन्याससामान्यमपेक्ष्य 'यं संन्यासमिति प्राहुर्योगं तं

विद्धि पाण्डव' इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वम् उक्तम्। ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गं साधनमिति तं संन्यासत्वेन स्तुत्वा अधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति --
।।6.3।। --
आरुरुक्षोः आरोढुमिच्छतः, अनारूढस्य, ध्यानयोगे अवस्थातुमशक्तस्यैवेत्यर्थः। कस्य तस्य आरुरुक्षोः? मुनेः, कर्मफलसंन्यासिन इत्यर्थः। किमारुरुक्षोः? योगम्। कर्म कारणं साधनम् उच्यते। योगारूढस्य पुनः तस्यैव शमः उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढस्य साधनम् उच्यते इत्यर्थः। यावद्यावत् कर्मभ्यः उपरमते, तावत्तावत् निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते। तथा सति स झटिति योगारूढो भवति। तथा चोक्तं व्यासेन -- 'नैतादृशं ब्राह्मणस्यास्ति चित्तं यथैकता समता सत्यता च। शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः (महा0 शान्ति0 175।37)' इति।।

अथेदानीं कदा योगारूढो भवति इत्युच्यते --
।।6.4।। --
यदा समाधीयमानचित्तो योगी हि इन्द्रियार्थेषु इन्द्रियाणामर्थाः शब्दादयः तेषु इन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या न अनुषज्जते अनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः। सर्वसंकल्पसंन्यासी सर्वान् संकल्पान् इहामुत्रार्थकामहेतून् संन्यसितुं शीलम् अस्य इति सर्वसंकल्पसंन्यासी, योगारूढः प्राप्तयोग इत्येतत्, तदा तस्मिन् काले उच्यते। 'सर्वसंकल्पसंन्यासी' इति वचनात् सर्वांश्च कामान् सर्वाणि च कर्माणि संन्यस्येदित्यर्थः। संकल्पमूला हि सर्वे कामाः -- 'संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः (मनु 2।3)। काम जानामि ते मूलं संकल्पात्किल जायसे। न त्वां संकल्पयिष्यामि तेन मे न भविष्यसि (महा0 शान्ति0 177।25)' इत्यादिस्मृतेः। सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति, 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते (बृह0 उ0 4।4।5)'
इत्यादिश्रुतिभ्यः; 'यद्यद्धि कुरुते जन्तुः तत्तत् कामस्य चेष्टितम् (मनु0 2।4)'
इत्यादिस्मृतिभ्यश्च; न्यायाच्च -- न हि सर्वसंकल्पसंन्यासे कश्चित् स्पन्दितुमपि शक्तः।
तस्मात् 'सर्वसंकल्पसंन्यासी' इति वचनात् सर्वान् कामान् सर्वाणि कर्माणि च त्याजयति भगवान्।।

यदा एवं योगारूढः, तदा तेन आत्मा उद्धृतो भवति संसारादनर्थजातात्। अतः --
।।6.5।। --
उद्धरेत् संसारसागरे निमग्नम् आत्मना आत्मानं ततः उत् ऊर्ध्वं हरेत् उद्धरेत्, योगारूढतामापादयेदित्यर्थः। न आत्मानम् अवसादयेत् न अधः नयेत्, न अधः गमयेत्। आत्मैव हि यस्मात् आत्मनः बन्धुः। न हि अन्यः कश्चित् बन्धुः, यः संसारमुक्तये भवति। बन्धुरपि तावत् मोक्षं प्रति प्रतिकूल एव, स्नेहादिबन्धनायतनत्वात्। तस्मात् युक्तमवधारणम् 'आत्मैव ह्यात्मनो बन्धुः' इति। आत्मैव रिपुः शत्रुः। यः अन्यः अपकारी बाह्यः शत्रुः सोऽपि आत्मप्रयुक्त वेति युक्तमेव अवधारणम् 'आत्मैव रिपुरात्मनः' इति।।

आत्मैव बन्धुः आत्मैव रिपुः आत्मनः इत्युक्तम्। तत्र किंलक्षण आत्मा आत्मनो बन्धुः, किंलक्षणो वा आत्मा आत्मनो रिपुः इत्युच्यते --
।।6.6।। --
बन्धुः आत्मा आत्मनः तस्य, तस्य आत्मनः स आत्मा बन्धुः येन आत्मना आत्मैव जितः, आत्मा कार्यकरणसंघातो येन वशीकृतः, जितेन्द्रिय इत्यर्थः। अनात्मनस्तु अजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्तेत आत्मैव शत्रुवत्, यथा अनात्मा शत्रुः आत्मनः अपकारी, तथा आत्मा आत्मन अपकारे वर्तेत इत्यर्थः।।

।।6.7।। --
जितात्मनः कार्यकरणसंघात आत्मा जितो येन सः जितात्मा तस्य जितात्मनः, प्रशान्तस्य प्रसन्नान्तःकरणस्य सतः संन्यासिनः परमात्मा समाहितः साक्षादात्मभावेन वर्तते इत्यर्थः। किञ्च शीतोष्णसुखदुःखेषु तथा माने अपमाने च मानापमानयोः पूजापरिभवयोः समः स्यात्।।

।।6.8।। --
ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानम्, विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणम्, ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः संजातालंप्रत्ययः आत्मा अन्तःकरणं यस्य सः ज्ञानविज्ञानतृप्तात्मा, कूटस्थः अप्रकम्प्यः, भवति इत्यर्थः; विजितेन्द्रियश्च। य ईदृशः, युक्तः समाहितः इति स उच्यते कथ्यते। स योगी समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य सः समलोष्टाश्मकाञ्चनः।।

किञ्च --
।।6.9।। --
'सुहृत्' इत्यादिश्लोकार्धम् एकं पदम्। सुहृत् इति प्रत्युपकारमनपेक्ष्य उपकर्ता, मित्रं स्नेहवान्, अरिः शत्रुः, उदासीनः न कस्यचित् पक्षं भजते, मध्यस्थः यो विरुद्धयोः उभयोः हितैषी, द्वेष्यः आत्मनः अप्रियः, बन्धुः संबन्धी इत्येतेषु साधुषु शास्त्रानुवर्तिषु अपि च पापेषु प्रतिषिद्धकारिषु सर्वेषु एतेषु समबुद्धिः 'कः किंकर्मा' इत्यव्यापृतबुद्धिरित्यर्थः। विशिष्यते,
'विमुच्यते' इति वा पाठान्तरम्। योगारूढानां सर्वेषाम् अयम् उत्तम इत्यर्थः।।

अत एवमुत्तमफलप्राप्तये --
।।6.10।। --
योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदा आत्मानम् अन्तःकरणं रहसि कान्ते गिरिगुहादौ स्थितः सन् काकी असहायः। 'रहसि स्थितः काकी च' इति विशेषणात् संन्यासं

कृत्वा इत्यर्थः। यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा देहश्च संयतौ यस्य सः यतचित्तात्मा,
निराशीः वीततृष्णः अपरिग्रहः परिग्रहरहितश्चेत्यर्थः। संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन्
युञ्जीत इत्यर्थः।।

अथेदानीं योगं युञ्जतः आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य
लक्षणं तत्फलादि च, इत्यत आरभ्यते। तत्र आसनमेव तावत् प्रथममुच्यते --
।।6.11।। --
शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा, देशे स्थाने प्रतिष्ठाप्य स्थिरम् अचलम् आत्मनः आसनं नात्युच्छ्रितं नातीव
उच्छ्रितं न अपि अतिनीचम्, तच्च चैलाजिनकुशोत्तरं चैलम् अजिनं कुशाश्च उत्तरे यस्मिन् आसने तत् आसनं
चैलाजिनकुशोत्तरम्। पाठक्रमाद्विपरीतः अत्र क्रमः चैलादीनाम्।।

प्रतिष्ठाप्य, किम्? --
।।6.12।। --
तत्र तस्मिन् आसने उपविश्य योगं युञ्ज्यात्। कथम्? सर्वविषयेभ्यः उपसंहृत्य एकाग्रं मनः
कृत्वा यतचित्तेन्द्रियक्रियः चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता यस्य सः
यतचित्तेन्द्रियक्रियः। स किमर्थं योगं युञ्ज्यात् इत्याह -- आत्मविशुद्धये अन्तःकरणस्य
विशुद्ध्यर्थमित्येतत्।।

बाह्यमासनमुक्तम्; अधुना शरीरधारणं कथम् इत्युच्यते --
।।6.13।। --
समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन् अचलं च। समं
धारयतः चलनं संभवति; अतः विशिनष्टि -- अचलमिति। स्थिरः स्थिरो भूत्वा इत्यर्थः। स्वं
नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वेव इति। इवशब्दो लुप्तो द्रष्टव्यः। न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितम्। किं
तर्हि? चक्षुषो दृष्टिसंनिपातः। स च
अन्तःकरणसमाधानापेक्षो विवक्षितः। स्वनासिकाग्रसंप्रेक्षणमेव चेत् विवक्षितम्, मनः तत्रैव
समाधीयेत, नात्मनि। आत्मनि हि मनसः समाधानं वक्ष्यति 'आत्मसंस्थं मनः कृत्वा (गीता
6।25)' इति। तस्मात् इवशब्दलोपेन अक्ष्णोः दृष्टिसंनिपात एव 'संप्रेक्ष्य' इत्युच्यते। दिशश्च
अनवलोकयन् दिशां च अवलोकनमन्तराकुर्वन् इत्येतत्।।
किञ्च –

।।6.14।। --
प्रशान्तात्मा प्रकर्षेण शान्तः आत्मा अन्तःकरणं यस्य सोऽयं प्रशान्तात्मा, विगतभीः विगतभयः,
ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षान्नभुक्त्यादि तस्मिन् स्थितः,
तदनुष्ठाता भवेदित्यर्थः। किञ्च, मनः संयम्य मनसः वृत्तीः उपसंहृत्य इत्येतत्, मच्चित्तः मयि

परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः, युक्तः समाहितः सन् आसीत उपविशेत्। मत्परः अहं परो यस्य सोऽयं मत्परो भवति। कश्चित् रागी स्त्रीचित्तः, न तु स्त्रियमेव परत्वेन गृह्णाति; किं तर्हि? राजानं महादेवं वा। अयं तु मच्चित्तो मत्परश्च।।

अथेदानीं योगफलमुच्यते --
।।6.15।। --
युञ्जन् समाधानं कुर्वन् एवं यथोक्तेन विधानेन सदा आत्मानं सर्वदा योगी नियतमानसः नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः, शान्तिम् उपरतिं निर्वाणपरमां निर्वाणं मोक्षः तत् परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमाम्. मत्संस्थां मदधीनाम् अधिगच्छति प्राप्नोति।।

इदानीं योगिनः आहारादिनियम उच्यते -- -
।।6.16।। --
न अत्यश्नतः आत्मसंमितमन्नपरिमाणमतीत्याश्नतः अत्यश्नतः न योगः अस्ति। न च एकान्तम् अनश्नतः योगः अस्ति। 'यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयोऽन्नं न तदवति (शतपथ)' इति श्रुतेः। तस्मात् योगी न आत्मसंमितात् अन्नात् अधिकं न्यूनं वा अश्नीयात्। अथवा, योगिनः योगशास्त्रे परिपठितात् अन्नपरिमाणात् अतिमात्रमश्नतः योगो नास्ति। उक्तं हि -- -'अर्धमशनस्य सव्यञ्जनान्नस्य तृतीयमुदकस्य च। वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादिपरिमाणम्। तथा -- न च अतिस्वप्नशीलस्य योगो भवति नैव च अतिमात्रं जाग्रतो भवति च अर्जुन।।

कथं पुनः योगो भवति इत्युच्यते --
।।6.17।। --
युक्ताहारविहारस्य आह्रियते इति आहारः अन्नम्, विहरणं विहारः पादक्रमः, तौ युक्तौ नियतपरिमाणौ यस्य सः युक्ताहारविहारः तस्य, तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तस्य, तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्च अवबोधश्च तौ नियतकालौ यस्य तस्य, युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो
योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृत् योगः भवतीत्यर्थः।।

अथ अधुना कदा युक्तो भवति इत्युच्यते --
।।6.18।। --
यदा विनियतं चित्तं विशेषेण नियतं संयतम् एकाग्रतामापन्नं चित्तं हित्वा बाह्यार्थचिन्ताम् आत्मन्येव केवले अवतिष्ठते, स्वात्मनि स्थितिं लभते इत्यर्थः। निःस्पृहः सर्वकामेभ्यः निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः सः युक्तः समाहितः इत्युच्यते तदा तस्मिन्काले।।

तस्य योगिनः समाहितं यत् चित्तं तस्योपमा उच्यते --
।।6.19।। --
यथा दीपः प्रदीपः निवातस्थः निवाते वातवर्जिते देशे स्थितः न इङ्गते न चलति, सा उपमा उपमीयते अनया इत्युपमा योगज्ञैः चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगम् अनुतिष्ठतः आत्मनः समाधिमनुतिष्ठत इत्यर्थः।।

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत् --
।।6.20।। -- -
यत्र यस्मिन् काले उपरमते चित्तम् उपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया योगानुष्ठानेन, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेन अन्तःकरणेन आत्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन् उपलभमानः स्वे एव आत्मनि तुष्यति तुष्टिं भजते।।

किञ्च --
।।6.21।। --
सुखम् आत्यन्तिकं अत्यन्तमेव भवति इत्यात्यन्तिकम् अनन्तमित्यर्थः, यत् तत् बुद्धिग्राह्यं बुद्ध्यैव इन्द्रियनिरपेक्षया गृह्यते इति बुद्धिग्राह्यम् अतीन्द्रियम् इन्द्रियगोचरातीतम् अविषयजनितमित्यर्थः, वेत्ति तत् ईदृशं सुखमनुभवति यत्र यस्मिन् काले, न च एव अयं विद्वान् आत्मस्वरूपे स्थितः तस्मात् नैव चलति तत्त्वतः तत्त्वस्वरूपात् न प्रच्यवते इत्यर्थः।।

किञ्च --
।।6.22।। --
यं लब्ध्वाम् यम् आत्मलाभं लब्ध्वा प्राप्य च अपरम् अन्यत् लाभं लाभान्तरं ततः अधिकम् अस्तीति न मन्यते न चिन्तयति। किञ्च, यस्मिन् आत्मतत्त्वे स्थितः दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महता अपि न विचाल्यते।।

'यत्रोपरमते (गीता 6।20)' इत्याद्यारभ्य यावद्भिः विशेषणैः विशिष्ट आत्मावस्थाविशेषः योग उक्तः --
।।6.23।। --
तं विद्यात् विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगः दुःखसंयोगः, तेन वियोगः दुःखसंयोगवियोगः, तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्यात् विजानीयादित्यर्थः। योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यता उच्यते निश्चयानिर्वेदयोः योगसाधनत्वविधानार्थम्। स यथोक्तफलो योगः निश्चयेन अध्यवसायेन योक्तव्यः अनिर्विण्णचेतसा न निर्विण्णम् अनिर्विण्णम्। किं तत्? चेतः तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः।।

किञ्च --
।।6.24।। --

संकल्पप्रभवान् संकल्पः प्रभवः येषां कामानां ते संकल्पप्रभवाः कामाः तान् त्यक्त्वा परित्यज्य सर्वान् अशेषतः निर्लेपेन। किञ्च, मनसैव विवेकयुक्तेन इन्द्रियग्रामम् इन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात्।।

।।6.25।। --
शनैः शनैः न सहसा उपरमेत् उपरतिं कुर्यात्। कया? बुद्ध्या। किंविशिष्टया? धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तया इत्यर्थः। आत्मसंस्थम् आत्मनि संस्थितम् 'आत्मैव सर्वं न ततोऽन्यत् किञ्चिदस्ति' इत्येवमात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्। एष योगस्य परमो विधिः।।

तत्र वमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी --
।।6.26।। -- -
यतो यतः यस्माद्यस्मात् निमित्तात् शब्दादेः निश्चरति निर्गच्छति स्वभावदोषात् मनः चञ्चलम् अत्यर्थं चलम्, अत एव अस्थिरम्, ततस्ततः तस्मात्तस्मात् शब्दादेः निमित्तात् नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतत् मनः आत्मन्येव वशं नयेत् आत्मवश्यतामापादयेत्। एवं योगाभ्यासबलात् योगिनः आत्मन्येव प्रशाम्यति मनः।।

।।6.27।। --
प्रशान्तमनसं प्रकर्षेण शान्तं मनः यस्य सः प्रशान्तमनाः तं प्रशान्तमनसं हि नं योगिनं सुखम् उत्तमं निरतिशयम् उपैति उपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः, ब्रह्मभूतं जीवन्मुक्तम्' ब्रह्मैव सर्वम्' इत्येवं निश्चयवन्तं ब्रह्मभूतम् अकल्मषं धर्माधर्मादिवर्जितम्।।

।।6.28।। --
युञ्जन् एवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदा आत्मानं विगतकल्मषः विगतपापः, सुखेन अनायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तत् ब्रह्मसंस्पर्शं सुखम् अत्यन्तम् अन्तमतीत्य वर्तत इत्यत्यन्तम् उत्कृष्टं निरतिशयम् अश्नुते व्याप्नोति।।

इदानीं योगस्य यत् फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत् प्रदर्श्यते -- -
।।6.29।। --
सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वम् आत्मानं सर्वभूतानि च आत्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि च सर्वभूतानि आत्मनि एकतां गतानि ईक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः।।

एतस्य आत्मैकत्वदर्शनस्य फलम् उच्यते --
।।6.30।। --

।।6.34।। --
चञ्चलं हि मनः कृष्ण इति कृष्यतेः विलेखनार्थस्य रूपम्। भक्तजनपापादिदोषाकर्षणात् कृष्णः, तस्य संबुद्धिः हे कृष्ण। हि यस्मात् मनः चञ्चलं न केवलमत्यर्थं चञ्चलम्, प्रमाथि च प्रमथनशीलम्, प्रमथ्नाति शरीरम् इन्द्रियाणि च विक्षिपत् सत् परवशीकरोति। किञ्च – बलवत् प्रबलम्, न केनचित् नियन्तुं शक्यम्, दुर्निवारत्वात्। किञ्च -- दृढं तन्तुनागवत् अच्छेद्यम्। तस्य एवंभूतस्य मनसः अहं निग्रहं निरोधं मन्ये वायोरिव यथा वायोः दुष्करो निग्रहः ततोऽपि दुष्करं मन्ये इत्यभिप्रायः।।

एवम् एतत् यथा ब्रवीषि --
श्रीभगवानुवाच --
।।6.35।। --
असंशयं नास्ति संशयः मनो दुर्निग्रहं चलम् इत्यत्र हे महाबाहो। किंतु अभ्यासेन तु अभ्यासो नाम चित्तभूमौ कस्यांचित् समानप्रत्ययावृत्तिः चित्तस्य। वैराग्येण वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु
दोषदर्शनाभ्यासात् वैतृष्ण्यम्। तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारः चित्तस्य। एवं तत् मनः
गृह्यते निगृह्यते निरुध्यते इत्यर्थः।।

यः पुनः असंयतात्मा, तेन --
।।6.36।। --
असंयतात्मना अभ्यासवैराग्याभ्यामसंयतः आत्मा अन्तःकरणं यस्य सोऽयम् असंयतात्मा तेन
असंयतात्मना योगो दुष्प्रापः दुःखेन प्राप्यत इति मे मतिः। यस्तु पुनः वश्यात्मा
अभ्यासवैराग्याभ्यां वश्यत्वमापादितः आत्मा मनः यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु
यतता भूयोऽपि प्रयत्नं कुर्वता शक्यः अवाप्तुं योगः उपायतः यथोक्तादुपायात्।।

तत्र योगाभ्यासाङ्गीकरणेन इहलोकपरलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि,
योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति, योगी योगमार्गात् मरणकाले
चलितचित्तः इति तस्य नाशमाशङ्क्य अर्जुन उवाच --
।।6.37।। --
अयतिः अप्रयत्नवान् योगमार्गे श्रद्धया आस्तिक्यबुद्ध्या च उपेतः योगात् अन्तकाले च चलितं मानसं मनो यस्य सः चलितमानसः भ्रष्टस्मृतिः सः अप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति।।

।।6.38।। --
कच्चित् किं न उभयविभ्रष्टः कर्ममार्गात् योगमार्गाच्च विभ्रष्टः सन् छिन्नाभ्रमिव नश्यति, किं
वा न नश्यति अप्रतिष्ठो निराश्रयः हे महाबाहो विमूढः सन् ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे।।

।।6.39।। --

एतत् मे मम संशयं कृष्ण छेत्तुम् अपनेतुम् अर्हसि अशेषतः। त्वदन्यः त्वत्तः अन्यः ऋषिः देवो वा च्छेत्ता नाशयिता संशयस्य अस्य न हि यस्मात् उपपद्यते न संभवति। अतः त्वमेव
छेत्तुमर्हसि इत्यर्थः।।

श्रीभगवानुवाच --
।।6.40।। --
हे पार्थ नैव इह लोके नामुत्र परस्मिन् वा लोके विनाशः तस्य विद्यते नास्ति। नाशो नाम
पूर्वस्मात् हीनजन्मप्राप्तिः स योगभ्रष्टस्य नास्ति। न हि यस्मात् कल्याणकृत् शुभकृत् कश्चित् दुर्गतिं कुत्सितां गतिं हे तात, तनोति आत्मानं पुत्ररूपेणेति पिता तात उच्यते। पितैव पुत्र इति पुत्रोऽपि तात उच्यते। शिष्योऽपि पुत्र उच्यते। यतो न गच्छति।।

किं तु अस्य भवति? --
।।6.41।। --
योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात् प्राप्य गत्वा पुण्यकृताम् अश्वमेधादियाजिनां लोकान्, तत्र
च उषित्वा वासमनुभूय शाश्वतीः नित्याः समाः संवत्सरान्, तद्भोगक्षये शुचीनां यथोक्तकारिणां
श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टः अभिजायते।।

।।6.42।। --
अथवा श्रीमतां कुलात् अन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम्। एतत् हि जन्म, यत् दरिद्राणां योगिनां कुले, दुर्लभतरं दुःखलभ्यतरं पूर्वमपेक्ष्य लोके
जन्म यत् ईदृशं यथोक्तविशेषणे कुले।।

यस्मात् --
।।6.43।। --
तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन् देहे भवं पौर्वदेहिकम्। यतते च प्रयत्नं च करोति ततः तस्मात् पूर्वकृतात् संस्कारात् भूयः बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन।।

कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते --
।।6.44।। --
यः पूर्वजन्मनि कृतः अभ्यासः सः पूर्वाभ्यासः, तेनैव बलवता ह्रियते संसिद्धौ हि यस्मात् अवशोऽपि सः योगभ्रष्टः; न कृतं चेत् योगाभ्यासजात् संस्कारात् बलवत्तरमधर्मादिलक्षणं कर्म, तदा योगाभ्यासजनितेन संस्कारेण ह्रियते; अधर्मश्चेत् बलवत्तरः कृतः, तेन योगजोऽपि संस्कारः अभिभूयत एव, तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते, न दीर्घकालस्थस्यापि विनाशः तस्य अस्ति इत्यर्थः। अतः जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन् अपि योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः, सामर्थ्यात् सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलम् अतिवर्तते

अतिक्रामति अपाकरिष्यति; किमुत बुद्ध्वा यः योगं तन्निष्ठः अभ्यासं कुर्यात्।।

कुतश्च योगित्वं श्रेयः इति --
।।6.45।। --
प्रयत्नात् यतमानः, अधिकं यतमान इत्यर्थः। तत्र योगी विद्वान् संशुद्धकिल्बिषः विशुद्धकिल्बिषः संशुद्धपापः अनेकजन्मसंसिद्धः अनेकेषु जन्मसु किञ्चित्किञ्चित् संस्कारजातम् उपचित्य तेन उपचितेन अनेकजन्मकृतेन संसिद्धः अनेकजन्मसंसिद्धः ततः लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टां गतिम्।।

यस्मादेवं तस्मात् --
।।6.46।। --
तपस्विभ्यः अधिकः योगी, ज्ञानिभ्योऽपि ज्ञानमत्र शास्त्रार्थपाण्डित्यम्, तद्वद्भ्योऽपि मतः ज्ञातः अधिकः श्रेष्ठः इति। कर्मिभ्यः, अग्निहोत्रादि कर्म, तद्वद्भ्यः अधिकः योगी विशिष्टः यस्मात् तस्मात् योगी भव अर्जुन।।

।।6.47।। --
योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेन अन्तरात्मना अन्तःकरणेन श्रद्धावान् श्रद्दधानः सन् भजते सेवते यो माम्, स मे मम युक्ततमः अतिशयेन युक्तः मतः अभिप्रेतः इति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादि
शाष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
षष्ठोऽध्यायः।।

## जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
## शीतोष्णसुखदुःखेषु तथा मानपमानयोः ॥६.७॥

jitātmanaḥ praśāntasya paramātmā samāhitaḥ |
śītoṣṇasukhaduḥkheṣu tathā mānapamānayoḥ ||6.7||

जितात्मनः $^{6/1}$ प्रशान्तस्य $^{6/1}$ परमात्मा $^{1/1}$ समाहितः $^{1/1}$ ।

शीतोष्णसुखदुःखेषु $^{7/3}$ तथा $^{0}$ मानपमानयोः $^{7/2}$ ॥६.७॥

- जितात्मनः [jitātmanaḥ] = for the one who has mastery over oneself = जितात्मन् (m.) + सम्बन्धे to परमात्मा 6/1
    - जितः आत्मा येन सः जितात्मा (113B), तस्य ।
- प्रशान्तस्य [praśāntasya] = whose mind is tranquil = प्रशान्त (m.) + सम्बन्धे to परमात्मा 6/1
- परम् [param] = always = अव्ययम्
- आत्मा [ātmā] = the mind = आत्मन् (m.) + कर्तरि to (भवति) 1/1
- समाहितः [samāhitaḥ] = in a state of composure = समाहित (m.) complement to आत्मा 1/1
- शीतोष्णसुखदुःखेषु [śītoṣṇasukhaduḥkheṣu] = with reference to heat and cold, pleasure and pain = शीतोष्णसुखदुःख (n.) + विषये to प्रशान्तस्य 7/3
- तथा [tathā] = as well as = अव्ययम्
- मानपमानयोः [mānapamānayoḥ] = with reference to praise and criticism = मानपमान (m.) + विषये to प्रशान्तस्य 7/2

For the one who has mastery over oneself, whose mind is tranquil with reference to heat and cold, pleasure and pain, and praise and criticism, the mind is always in a state of composure.

Sentence 1:

तस्य $^{6/1}$ आत्मा $^{1/1}$ एव $^{0}$ आत्मनः $^{6/1}$ बन्धुः $^{1/1}$ येन $^{3/1}$ आत्मना $^{3/1}$ आत्मा $^{1/1}$ जितः $^{1/1}$ ।
For that (self) (तस्य $^{6/1}$) who has mastered (जितः $^{1/1}$) oneself (आत्मा $^{1/1}$) by oneself (येन $^{3/1}$ आत्मना $^{3/1}$), the self (आत्मा $^{1/1}$) alone (एव $^{0}$) is a friend (बन्धुः $^{1/1}$) of oneself (आत्मनः $^{6/1}$).

Sentence 2:

अनात्मनः $^{6/1}$ तु $^{0}$ आत्मा $^{1/1}$ एव $^{0}$ शत्रुवत् $^{0}$ शत्रुत्वे $^{7/1}$ वर्तेत $^{III/1}$ ॥६.६॥
Whereas (तु $^{0}$), for the self who has not mastered oneself (अनात्मनः $^{6/1}$), the self (आत्मा $^{1/1}$) alone (एव $^{0}$) would remain (वर्तेत $^{III/1}$) in the status of an enemy (शत्रुत्वे $^{7/1}$), like an enemy (शत्रुवत् $^{0}$).

आत्मैव बन्धुः आत्मैव रिपुः आत्मनः इत्युक्तम्। तत्र किंलक्षण आत्मा आत्मनो बन्धुः, किंलक्षणो वा आत्मा आत्मनो रिपुः इत्युच्यते --
।।6.6।। --
बन्धुः आत्मा आत्मनः तस्य, तस्य आत्मनः स आत्मा बन्धुः येन आत्मना आत्मैव जितः, आत्मा कार्यकरणसंघातो येन वशीकृतः, जितेन्द्रिय इत्यर्थः। अनात्मनस्तु अजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्तेत आत्मैव शत्रुवत्, यथा अनात्मा शत्रुः आत्मनः अपकारी, तथा आत्मा आत्मन अपकारे वर्तेत इत्यर्थः।।

।।6.7।। --
जितात्मनः कार्यकरणसंघात आत्मा जितो येन सः जितात्मा तस्य जितात्मनः, प्रशान्तस्य प्रसन्नान्तःकरणस्य सतः संन्यासिनः परमात्मा समाहितः साक्षादात्मभावेन वर्तते इत्यर्थः। किञ्च शीतोष्णसुखदुःखेषु तथा माने अपमाने च मानापमानयोः पूजापरिभवयोः समः स्यात्।।

।।6.8।। --
ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानम्, विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणम्, ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः संजातालंप्रत्ययः आत्मा अन्तःकरणं यस्य सः ज्ञानविज्ञानतृप्तात्मा, कूटस्थः अप्रकम्प्यः, भवति इत्यर्थः; विजितेन्द्रियश्च। य ईदृशः, युक्तः समाहितः इति स उच्यते कथ्यते। स योगी समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य सः समलोष्टाश्मकाञ्चनः।।

किञ्च --
।।6.9।। --

'सुहृत्' इत्यादिश्लोकार्धम् एकं पदम्। सुहृत् इति प्रत्युपकारमनपेक्ष्य उपकर्ता, मित्रं स्नेहवान्, अरिः शत्रुः, उदासीनः न कस्यचित् पक्षं भजते, मध्यस्थः यो विरुद्धयोः उभयोः हितैषी, द्वेष्यः आत्मनः अप्रियः, बन्धुः संबन्धी इत्येतेषु साधुषु शास्त्रानुवर्तिषु अपि च पापेषु प्रतिषिद्धकारिषु सर्वेषु एतेषु समबुद्धिः 'कः किंकर्मा' इत्यव्यापृतबुद्धिरित्यर्थः। विशिष्यते, 'विमुच्यते' इति वा पाठान्तरम्। योगारूढानां सर्वेषाम् अयम् उत्तम इत्यर्थः।।

अत एवमुत्तमफलप्राप्तये --
।।6.10।। --
योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदा आत्मानम् अन्तःकरणं रहसि कान्ते गिरिगुहादौ स्थितः सन् काकी असहायः। 'रहसि स्थितः काकी च' इति विशेषणात् संन्यासं कृत्वा इत्यर्थः। यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा देहश्च संयतौ यस्य सः यतचित्तात्मा, निराशीः वीततृष्णः अपरिग्रहः परिग्रहरहितश्चेत्यर्थः। संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन् युञ्जीत इत्यर्थः।।

अथेदानीं योगं युञ्जतः आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य लक्षणं तत्फलादि च, इत्यत आरभ्यते। तत्र आसनमेव तावत् प्रथममुच्यते --
।।6.11।। --
शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा, देशे स्थाने प्रतिष्ठाप्य स्थिरम् अचलम् आत्मनः आसनं नात्युच्छ्रितं नातीव उच्छ्रितं न अपि अतिनीचम्, तच्च चैलाजिनकुशोत्तरं चैलम् अजिनं कुशाश्च उत्तरे यस्मिन् आसने तत् आसनं चैलाजिनकुशोत्तरम्। पाठक्रमाद्विपरीतः अत्र क्रमः चैलादीनाम्।।

प्रतिष्ठाप्य, किम्? --
।।6.12।। --
तत्र तस्मिन् आसने उपविश्य योगं युञ्ज्यात्। कथम्? सर्वविषयेभ्यः उपसंहृत्य एकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता यस्य सः यतचित्तेन्द्रियक्रियः। स किमर्थं योगं युञ्ज्यात् इत्याह -- आत्मविशुद्धये अन्तःकरणस्य विशुद्ध्यर्थमित्येतत्।।

बाह्यमासनमुक्तम्; अधुना शरीरधारणं कथम् इत्युच्यते --
।।6.13।। --
समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन् अचलं च। समं धारयतः चलनं संभवति; अतः विशिनष्टि -- अचलमिति। स्थिरः स्थिरो भूत्वा इत्यर्थः। स्वं नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वेव इति। इवशब्दो लुप्तो द्रष्टव्यः। न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितम्। किं तर्हि? चक्षुषो दृष्टिसंनिपातः। स च

अन्तःकरणसमाधानापेक्षो विवक्षितः। स्वनासिकाग्रसंप्रेक्षणमेव चेत् विवक्षितम्, मनः तत्रैव समाधीयेत, नात्मनि। आत्मनि हि मनसः समाधानं वक्ष्यति 'आत्मसंस्थं मनः कृत्वा (गीता 6।25)' इति। तस्मात् इवशब्दलोपेन अक्ष्णोः दृष्टिसंनिपात एव 'संप्रेक्ष्य' इत्युच्यते। दिशश्च अनवलोकयन् दिशां च अवलोकनमन्तराकुर्वन् इत्येतत्।।
किञ्च –

।।6.14।। --
प्रशान्तात्मा प्रकर्षेण शान्तः आत्मा अन्तःकरणं यस्य सोऽयं प्रशान्तात्मा, विगतभीः विगतभयः, ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षान्नभुक्त्यादि तस्मिन् स्थितः, तदनुष्ठाता भवेदित्यर्थः। किञ्च, मनः संयम्य मनसः वृत्तीः उपसंहृत्य इत्येतत्, मच्चित्तः मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः, युक्तः समाहितः सन् आसीत उपविशेत्। मत्परः अहं परो यस्य सोऽयं मत्परो भवति। कश्चित् रागी स्त्रीचित्तः, न तु स्त्रियमेव परत्वेन गृह्णाति; किं तर्हि? राजानं महादेवं वा। अयं तु मच्चित्तो मत्परश्च।।

अथेदानीं योगफलमुच्यते --
।।6.15।। --
युञ्जन् समाधानं कुर्वन् एवं यथोक्तेन विधानेन सदा आत्मानं सर्वदा योगी नियतमानसः नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः, शान्तिम् उपरतिं निर्वाणपरमां निर्वाणं मोक्षः तत् परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमाम्. मत्संस्थां मदधीनाम् अधिगच्छति प्राप्नोति।।

इदानीं योगिनः आहारादिनियम उच्यते -- -
।।6.16।। --
न अत्यश्नतः आत्मसंमितमन्नपरिमाणमतीत्याश्नतः अत्यश्नतः न योगः अस्ति। न च एकान्तम् अनश्नतः योगः अस्ति। 'यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयोऽन्नं न तदवति (शतपथ)' इति श्रुतेः। तस्मात् योगी न आत्मसंमितात् अन्नात् अधिकं न्यूनं वा अश्नीयात्। अथवा, योगिनः योगशास्त्रे परिपठितात् अन्नपरिमाणात् अतिमात्रमश्नतः योगो नास्ति। उक्तं हि -- -'अर्धमशनस्य सव्यञ्जनान्नस्य तृतीयमुदकस्य च। वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादिपरिमाणम्। तथा -- न च अतिस्वप्नशीलस्य योगो भवति नैव च अतिमात्रं जाग्रतो भवति च अर्जुन।।

कथं पुनः योगो भवति इत्युच्यते --
।।6.17।। --
युक्ताहारविहारस्य आह्रियते इति आहारः अन्नम्, विहरणं विहारः पादक्रमः, तौ युक्तौ

नियतपरिमाणौ यस्य सः युक्ताहारविहारः तस्य, तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तस्य, तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्च अवबोधश्च तौ नियतकालौ यस्य तस्य, युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो
योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृत् योगः
भवतीत्यर्थः।।

अथ अधुना कदा युक्तो भवति इत्युच्यते --
।।6.18।। --
यदा विनियतं चित्तं विशेषेण नियतं संयतम् एकाग्रतामापन्नं चित्तं हित्वा बाह्यार्थचिन्ताम्
आत्मन्येव केवले अवतिष्ठते, स्वात्मनि स्थितिं लभते इत्यर्थः। निःस्पृहः सर्वकामेभ्यः निर्गता
दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः सः युक्तः समाहितः इत्युच्यते तदा तस्मिन्काले।।

तस्य योगिनः समाहितं यत् चित्तं तस्योपमा उच्यते --
।।6.19।। --
यथा दीपः प्रदीपः निवातस्थः निवाते वातवर्जिते देशे स्थितः न इङ्गते न चलति, सा उपमा उपमीयते अनया इत्युपमा योगज्ञैः चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगम् अनुतिष्ठतः आत्मनः
समाधिमनुतिष्ठत इत्यर्थः।।

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत् --
।।6.20।। -- -
यत्र यस्मिन् काले उपरमते चित्तम् उपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया
योगानुष्ठानेन, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेन अन्तःकरणेन आत्मानं परं
चैतन्यं ज्योतिःस्वरूपं पश्यन् उपलभमानः स्वे एव आत्मनि तुष्यति तुष्टिं भजते।।

किञ्च --
।।6.21।। --
सुखम् आत्यन्तिकं अत्यन्तमेव भवति इत्यात्यन्तिकम् अनन्तमित्यर्थः, यत् तत् बुद्धिग्राह्यं
बुद्ध्यैव इन्द्रियनिरपेक्षया गृह्यते इति बुद्धिग्राह्यम् अतीन्द्रियम् इन्द्रियगोचरातीतम्
अविषयजनितमित्यर्थः, वेत्ति तत् ईदृशं सुखमनुभवति यत्र यस्मिन् काले, न च एव अयं विद्वान् आत्मस्वरूपे स्थितः तस्मात् नैव चलति तत्त्वतः तत्त्वस्वरूपात् न प्रच्यवते इत्यर्थः।।

किञ्च --
।।6.22।। --

यं लब्ध्वाम् यम् आत्मलाभं लब्ध्वा प्राप्य च अपरम् अन्यत् लाभं लाभान्तरं ततः अधिकम् अस्तीति न मन्यते न चिन्तयति। किञ्च, यस्मिन् आत्मतत्त्वे स्थितः दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महता अपि न विचाल्यते।।

'यत्रोपरमते (गीता 6।20)' इत्याद्यारभ्य यावद्भिः विशेषणैः विशिष्ट आत्मावस्थाविशेषः योग उक्तः --
।।6.23।। --
तं विद्यात् विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगः दुःखसंयोगः, तेन वियोगः दुःखसंयोगवियोगः, तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्यात् विजानीयादित्यर्थः। योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यता उच्यते निश्चयानिर्वेदयोः योगसाधनत्वविधानार्थम्। स यथोक्तफलो योगः निश्चयेन अध्यवसायेन योक्तव्यः अनिर्विण्णचेतसा न निर्विण्णम् अनिर्विण्णम्। किं तत्? चेतः तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः।।

किञ्च --
।।6.24।। --
संकल्पप्रभवान् संकल्पः प्रभवः येषां कामानां ते संकल्पप्रभवाः कामाः तान् त्यक्त्वा परित्यज्य सर्वान् अशेषतः निर्लेपेन। किञ्च, मनसैव विवेकयुक्तेन इन्द्रियग्रामम् इन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात्।।

।।6.25।। --
शनैः शनैः न सहसा उपरमेत् उपरतिं कुर्यात्। कया? बुद्ध्या। किंविशिष्टया? धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तया इत्यर्थः। आत्मसंस्थम् आत्मनि संस्थितम् 'आत्मैव सर्वं न ततोऽन्यत् किञ्चिदस्ति' इत्येवमात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्। एष योगस्य परमो विधिः।।

तत्र वमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी --
।।6.26।। -- -
यतो यतः यस्माद्यस्मात् निमित्तात् शब्दादेः निश्चरति निर्गच्छति स्वभावदोषात् मनः चञ्चलम् अत्यर्थं चलम्, अत एव अस्थिरम्, ततस्ततः तस्मात्तस्मात् शब्दादेः निमित्तात् नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतत् मनः आत्मन्येव वशं नयेत् आत्मवश्यतामापादयेत्। एवं योगाभ्यासबलात् योगिनः आत्मन्येव प्रशाम्यति मनः।।

।।6.27।। --
प्रशान्तमनसं प्रकर्षेण शान्तं मनः यस्य सः प्रशान्तमनाः तं प्रशान्तमनसं हि नं योगिनं सुखम् उत्तमं निरतिशयम् उपैति उपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः, ब्रह्मभूतं जीवन्मुक्तम्' ब्रह्मैव सर्वम्' इत्येवं निश्चयवन्तं ब्रह्मभूतम् अकल्मषं धर्माधर्मादिवर्जितम्।।

।।6.28।। --

युञ्जन् एवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदा आत्मानं विगतकल्मषः विगतपापः, सुखेन अनायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तत् ब्रह्मसंस्पर्शं सुखम् अत्यन्तम् अन्तमतीत्य वर्तत इत्यत्यन्तम् उत्कृष्टं निरतिशयम् अश्नुते व्याप्नोति।।

इदानीं योगस्य यत् फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत् प्रदर्श्यते -- -
।।6.29।। --
सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वम् आत्मानं सर्वभूतानि च आत्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि
च सर्वभूतानि आत्मनि एकतां गतानि ईक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः।।

एतस्य आत्मैकत्वदर्शनस्य फलम् उच्यते --
।।6.30।। --
यो मां पश्यति वासुदेवं सर्वस्य आत्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति, तस्य एएएवं आत्मैकत्वदर्शिनः अहम् ईश्वरो न प्रणश्यामि न परोक्षतां
गमिष्यामि। स च मे न प्रणश्यति स च विद्वान् मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति,
तस्य च मम च एकात्मकत्वात्; स्वात्मा हि नाम आत्मनः प्रिय एव भवति, यस्माच्च अहमेव
सर्वात्मैकत्वदर्शी।।

इत्येतत् पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षः अभिधीयते -- -
।।6.31।। -- -
सर्वथा सर्वप्रकारैः वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते, नित्यमुक्त एव
सः, न मोक्षं प्रति केनचित् प्रतिबध्यते इत्यर्थः।।

किञ्च अन्यत् --
।।6.32।। --
आत्मौपम्येन आत्मा स्वयमेव उपमीयते अनया इत्युपमा तस्या उपमाया भावः औपम्यं तेन
आत्मौपम्येन, सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति यः अर्जुन, स च किं समं पश्यति इत्युच्यते --
यथा मम सुखम् इष्टं तथा सर्वप्राणिनां सुखम् अनुकूलम्। वाशब्दः चार्थे। यदि वा यच्च दुःखं
मम प्रतिकूलम् अनिष्टं यथा तथा सर्वप्राणिनां दुःखम् अनिष्टं प्रतिकूलं इत्येवम् आत्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति, न कस्यचित् प्रतिकूलमाचरति, अहिंसक इत्यर्थः। यः एवमहिंसकः सम्यग्दर्शननिष्ठः स योगी परमः उत्कृष्टः मतः अभिप्रेतः सर्वयोगिनां मध्ये।।

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःखसंपाद्यतामालक्ष्य शुश्रूषुः ध्रुवं तत्प्राप्त्युपायम् -
अर्जुन उवाच --

।।6.33।। --
यः अयं योगः त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन तस्य योगस्य अहं न पश्यामि
नोपलभे, चञ्चलत्वात् मनसः। किम्? स्थिराम् अचलां स्थितिम्।।

प्रसिद्धमेतत् --
।।6.34।। --
चञ्चलं हि मनः कृष्ण इति कृष्यतेः विलेखनार्थस्य रूपम्। भक्तजनपापादिदोषाकर्षणात् कृष्णः, तस्य संबुद्धिः हे कृष्ण। हि
यस्मात् मनः चञ्चलं न केवलमत्यर्थं चञ्चलम्, प्रमाथि च प्रमथनशीलम्, प्रमथ्नाति शरीरम् इन्द्रियाणि च विक्षिपत् सत्
परवशीकरोति। किञ्च – बलवत् प्रबलम्, न केनचित् नियन्तुं शक्यम्, दुर्निवारत्वात्। किञ्च -- दृढं तन्तुनागवत् अच्छेद्यम्।
तस्य एवंभूतस्य मनसः अहं निग्रहं निरोधं मन्ये वायोरिव यथा वायोः दुष्करो निग्रहः ततोऽपि दुष्करं मन्ये इत्यभिप्रायः।।

एवम् एतत् यथा ब्रवीषि --
श्रीभगवानुवाच --
।।6.35।। --
असंशयं नास्ति संशयः मनो दुर्निग्रहं चलम् इत्यत्र हे महाबाहो। किंतु अभ्यासेन तु अभ्यासो नाम चित्तभूमौ कस्यांचित्
समानप्रत्ययावृत्तिः चित्तस्य। वैराग्येण वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु
दोषदर्शनाभ्यासात् वैतृष्ण्यम्। तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारः चित्तस्य। एवं तत् मनः
गृह्यते निगृह्यते निरुध्यते इत्यर्थः।।

यः पुनः असंयतात्मा, तेन --
।।6.36।। --
असंयतात्मना अभ्यासवैराग्याभ्यामसंयतः आत्मा अन्तःकरणं यस्य सोऽयम् असंयतात्मा तेन
असंयतात्मना योगो दुष्प्रापः दुःखेन प्राप्यत इति मे मतिः। यस्तु पुनः वश्यात्मा
अभ्यासवैराग्याभ्यां वश्यत्वमापादितः आत्मा मनः यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु
यतता भूयोऽपि प्रयत्नं कुर्वता शक्यः अवाप्तुं योगः उपायतः यथोक्तादुपायात्।।

तत्र योगाभ्यासाङ्गीकरणेन इहलोकपरलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि,
योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति, योगी योगमार्गात् मरणकाले
चलितचित्तः इति तस्य नाशमाशङ्क्य अर्जुन उवाच --
।।6.37।। --
अयतिः अप्रयत्नवान् योगमार्गे श्रद्धया आस्तिक्यबुद्ध्या च उपेतः योगात् अन्तकाले च चलितं मानसं मनो यस्य सः
चलितमानसः भ्रष्टस्मृतिः सः अप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति।।

।।6.38।। --

कच्चित् किं न उभयविभ्रष्टः कर्ममार्गात् योगमार्गाच्च विभ्रष्टः सन् छिन्नाभ्रमिव नश्यति, किं वा न नश्यति अप्रतिष्ठो निराश्रयः हे महाबाहो विमूढः सन् ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे।।

।।6.39।। --
एतत् मे मम संशयं कृष्ण छेत्तुम् अपनेतुम् अर्हसि अशेषतः। त्वदन्यः त्वत्तः अन्यः ऋषिः देवो वा च्छेत्ता नाशयिता संशयस्य अस्य न हि यस्मात् उपपद्यते न संभवति। अतः त्वमेव
छेत्तुमर्हसि इत्यर्थः।।

श्रीभगवानुवाच --
।।6.40।। --
हे पार्थ नैव इह लोके नामुत्र परस्मिन् वा लोके विनाशः तस्य विद्यते नास्ति। नाशो नाम
पूर्वस्मात् हीनजन्मप्राप्तिः स योगभ्रष्टस्य नास्ति। न हि यस्मात् कल्याणकृत् शुभकृत् कश्चित् दुर्गतिं कुत्सितां गतिं हे तात, तनोति आत्मानं पुत्ररूपेणेति पिता तात उच्यते। पितैव पुत्र इति पुत्रोऽपि तात उच्यते। शिष्योऽपि पुत्र उच्यते। यतो न गच्छति।।

किं तु अस्य भवति? --
।।6.41।। --
योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात् प्राप्य गत्वा पुण्यकृताम् अश्वमेधादियाजिनां लोकान्, तत्र च उषित्वा वासमनुभूय शाश्वतीः नित्याः समाः संवत्सरान्, तद्भोगक्षये शुचीनां यथोक्तकारिणां
श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टः अभिजायते।।

।।6.42।। --
अथवा श्रीमतां कुलात् अन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम्। एतत् हि जन्म, यत् दरिद्राणां योगिनां कुले, दुर्लभतरं दुःखलभ्यतरं पूर्वमपेक्ष्य लोके
जन्म यत् ईदृशं यथोक्तविशेषणे कुले।।

यस्मात् --
।।6.43।। --
तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन् देहे भवं पौर्वदेहिकम्। यतते च प्रयत्नं च करोति ततः तस्मात् पूर्वकृतात् संस्कारात् भूयः बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन।।

कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते --
।।6.44।। --

यः पूर्वजन्मनि कृतः अभ्यासः सः पूर्वाभ्यासः, तेनैव बलवता ह्रियते संसिद्धौ हि यस्मात् अवशोऽपि सः योगभ्रष्टः; न कृतं चेत् योगाभ्यासजात् संस्कारात् बलवत्तरमधर्मादिलक्षणं कर्म, तदा योगाभ्यासजनितेन संस्कारेण ह्रियते; अधर्मश्चेत् बलवत्तरः कृतः, तेन योगजोऽपि संस्कारः अभिभूयत एव, तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते, न दीर्घकालस्थस्यापि विनाशः तस्य अस्ति इत्यर्थः। अतः जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन् अपि योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः, सामर्थ्यात् सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलम् अतिवर्तते अतिक्रामति अपाकरिष्यति; किमुत बुद्ध्वा यः योगं तन्निष्ठः अभ्यासं कुर्यात्।।

कुतश्च योगित्वं श्रेयः इति --
।।6.45।। --
प्रयत्नात् यतमानः, अधिकं यतमान इत्यर्थः। तत्र योगी विद्वान् संशुद्धकिल्बिषः विशुद्धकिल्बिषः संशुद्धपापः अनेकजन्मसंसिद्धः अनेकेषु जन्मसु किञ्चित्किञ्चित् संस्कारजातम् उपचित्य तेन उपचितेन अनेकजन्मकृतेन संसिद्धः अनेकजन्मसंसिद्धः ततः लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टां गतिम्।।

यस्मादेवं तस्मात् --
।।6.46।। --
तपस्विभ्यः अधिकः योगी, ज्ञानिभ्योऽपि ज्ञानमत्र शास्त्रार्थपाण्डित्यम्, तद्वद्भ्योऽपि मतः ज्ञातः अधिकः श्रेष्ठः इति। कर्मिभ्यः, अग्निहोत्रादि कर्म, तद्वद्भ्यः अधिकः योगी विशिष्टः यस्मात् तस्मात् योगी भव अर्जुन।।

।।6.47।। --
योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेन अन्तरात्मना अन्तःकरणेन श्रद्धावान् श्रद्दधानः सन् भजते सेवते यो माम्, स मे मम युक्ततमः अतिशयेन युक्तः मतः अभिप्रेतः इति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादि
शष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
षष्ठोऽध्यायः।।

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥६.८॥**

jñānavijñānatṛptātmā kūṭastho vijitendriyaḥ |
yukta ityucyate yogī samaloṣṭāśmakāñcanaḥ ||6.8||

ज्ञानविज्ञानतृप्तात्मा $^{1/1}$ कूटस्थः $^{1/1}$ विजितेन्द्रियः $^{1/1}$ ।
युक्तः $^{1/1}$ इति $^{0}$ उच्यते $^{III/1}$ योगी $^{1/1}$ समलोष्टाश्मकाञ्चनः $^{1/1}$ ॥६.८॥

- ज्ञानविज्ञानतृप्तात्मा [jñānavijñānatṛptātmā] = one whose mind is content in the knowledge of the self = ज्ञानविज्ञानतृप्तात्मन् (m.) + adjective to युक्तः 1/1
    - ज्ञान-विज्ञानाभ्यां तृप्तः आत्मा अन्तःकरणं यस्य सः (316B) ।
- कूटस्थः [kūṭasthaḥ] = who remains unchanged = कूटस्थ (m.) + adjective to युक्तः 1/1
- विजितेन्द्रियः [vijitendriyaḥ] = who has mastered the sense organs and organs of action = विजितेन्द्रिय (m.) + adjective to युक्तः 1/1
    - विजितानि इन्द्रियाणि यस्य सः (116B) ।
- युक्तः [yuktaḥ] = this composed person = युक्त (m.) कर्मणि to उच्यते 1/1
- इति [iti] = as = अव्ययम्
- उच्यते [ucyate] = is said to be = वच् (2P) to say + लट्/कर्मणि/III/1
- समलोष्टाश्मकाञ्चनः [samaloṣṭāśmakāñcanaḥ] = for whom a clump of earth, a stone, and gold are the same = समलोष्टाश्मकाञ्चन (m.) + adjective to युक्तः 1/1
    - लोष्टः च अश्मा च काञ्चनं च लोष्ट-अश्म-काञ्चनानि (ID) ।
    - समानि लोष्ट-अश्म-काञ्चनानि यस्य सः (116B) ।

One whose mind is content in the knowledge of the self, who remains unchanged, who has mastered the sense organs and organs of action, for whom a clump of earth, a stone, and gold are the same, this composed person is referred to as a yogī.

Sentence 1:

ज्ञानविज्ञानतृप्तात्मा $^{1/1}$ कूटस्थः $^{1/1}$ विजितेन्द्रियः $^{1/1}$ ।
युक्तः $^{1/1}$ इति $^{0}$ उच्यते $^{III/1}$ योगी $^{1/1}$ समलोष्टाश्मकाञ्चनः $^{1/1}$ ॥६.८॥
One whose mind is content in the knowledge of the self (ज्ञानविज्ञानतृप्तात्मा $^{1/1}$), who remains unchanged (कूटस्थः $^{1/1}$), who has mastered the sense organs and organs of action (विजितेन्द्रियः $^{1/1}$), for whom a clump of earth, a stone, and gold are the same (समलोष्टाश्मकाञ्चनः $^{1/1}$), this composed person (युक्तः $^{1/1}$) is referred to (उच्यते $^{III/1}$) as (इति $^{0}$) a yogī (योगी $^{1/1}$).

।।6.8।। --
ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानम्, विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणम्, ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः संजातालंप्रत्ययः आत्मा अन्तःकरणं यस्य सः ज्ञानविज्ञानतृप्तात्मा, कूटस्थः अप्रकम्प्यः, भवति इत्यर्थः; विजितेन्द्रियश्च। य ईदृशः, युक्तः समाहितः इति स उच्यते कथ्यते। स योगी समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य सः समलोष्टाश्मकाञ्चनः।।

किञ्च --
।।6.9।। --
'सुहृत्' इत्यादिश्लोकार्धम् एकं पदम्। सुहृत् इति प्रत्युपकारमनपेक्ष्य उपकर्ता, मित्रं स्नेहवान्, अरिः शत्रुः, उदासीनः न कस्यचित् पक्षं भजते, मध्यस्थः यो विरुद्धयोः उभयोः हितैषी, द्वेष्यः आत्मनः अप्रियः, बन्धुः संबन्धी इत्येतेषु साधुषु शास्त्रानुवर्तिषु अपि च पापेषु प्रतिषिद्धकारिषु सर्वेषु एतेषु समबुद्धिः 'कः किंकर्मा' इत्यव्यापृतबुद्धिरित्यर्थः। विशिष्यते, 'विमुच्यते' इति वा पाठान्तरम्। योगारूढानां सर्वेषाम् अयम् उत्तम इत्यर्थः।।

अत एवमुत्तमफलप्राप्तये --
।।6.10।। --
योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदा आत्मानम् अन्तःकरणं रहसि कान्ते गिरिगुहादौ स्थितः सन् काकी असहायः। 'रहसि स्थितः काकी च' इति विशेषणात् संन्यासं कृत्वा इत्यर्थः। यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा देहश्च संयतौ यस्य सः यतचित्तात्मा, निराशीः वीततृष्णः अपरिग्रहः परिग्रहरहितश्चेत्यर्थः। संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन् युञ्जीत इत्यर्थः।।

अथेदानीं योगं युञ्जतः आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य लक्षणं तत्फलादि च, इत्यत आरभ्यते। तत्र आसनमेव तावत् प्रथममुच्यते --
।।6.11।। --
शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा, देशे स्थाने प्रतिष्ठाप्य स्थिरम् अचलम् आत्मनः आसनं नात्युच्छ्रितं नातीव उच्छ्रितं न अपि अतिनीचम्, तच्च चैलाजिनकुशोत्तरं चैलम् अजिनं कुशाश्च उत्तरे यस्मिन् आसने तत् आसनं चैलाजिनकुशोत्तरम्। पाठक्रमाद्विपरीतः अत्र क्रमः चैलादीनाम्।।

प्रतिष्ठाप्य, किम्? --
।।6.12।। --
तत्र तस्मिन् आसने उपविश्य योगं युञ्ज्यात्। कथम्? सर्वविषयेभ्यः उपसंहृत्य एकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता यस्य सः यतचित्तेन्द्रियक्रियः। स किमर्थं योगं युञ्ज्यात् इत्याह -- आत्मविशुद्धये अन्तःकरणस्य विशुद्ध्यर्थमित्येतत्।।

बाह्यमासनमुक्तम्; अधुना शरीरधारणं कथम् इत्युच्यते --
।।6.13।। --
समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन् अचलं च। समं धारयतः चलनं संभवति; अतः विशिनष्टि -- अचलमिति। स्थिरः स्थिरो भूत्वा इत्यर्थः। स्वं नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वेव इति। इवशब्दो लुप्तो द्रष्टव्यः। न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितम्। किं तर्हि? चक्षुषो दृष्टिसंनिपातः। स च
अन्तःकरणसमाधानापेक्षो विवक्षितः। स्वनासिकाग्रसंप्रेक्षणमेव चेत् विवक्षितम्, मनः तत्रैव समाधीयेत, नात्मनि। आत्मनि हि मनसः समाधानं वक्ष्यति 'आत्मसंस्थं मनः कृत्वा (गीता 6।25)' इति। तस्मात् इवशब्दलोपेन अक्ष्णोः दृष्टिसंनिपात एव 'संप्रेक्ष्य' इत्युच्यते। दिशश्च अनवलोकयन् दिशां च अवलोकनमन्तराकुर्वन् इत्येतत्।।
किञ्च –

।।6.14।। --
प्रशान्तात्मा प्रकर्षेण शान्तः आत्मा अन्तःकरणं यस्य सोऽयं प्रशान्तात्मा, विगतभीः विगतभयः, ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षान्नभुक्त्यादि तस्मिन् स्थितः, तदनुष्ठाता भवेदित्यर्थः। किञ्च, मनः संयम्य मनसः वृत्तीः उपसंहृत्य इत्येतत्, मच्चित्तः मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः, युक्तः समाहितः सन् आसीत उपविशेत्। मत्परः अहं परो यस्य सोऽयं मत्परो भवति। कश्चित् रागी स्त्रीचित्तः, न तु स्त्रियमेव परत्वेन गृह्णाति; किं तर्हि? राजानं महादेवं वा। अयं तु मच्चित्तो मत्परश्च।।

अथेदानीं योगफलमुच्यते --
।।6.15।। --
युञ्जन् समाधानं कुर्वन् एवं यथोक्तेन विधानेन सदा आत्मानं सर्वदा योगी नियतमानसः नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः, शान्तिम् उपरतिं निर्वाणपरमां निर्वाणं मोक्षः तत् परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमाम्. मत्संस्थां मदधीनाम् अधिगच्छति प्राप्नोति।।

इदानीं योगिनः आहारादिनियम उच्यते -- -
।।6.16।। --
न अत्यश्नतः आत्मसंमितमन्नपरिमाणमतीत्याश्नतः अत्यश्नतः न योगः अस्ति। न च एकान्तम् अनश्नतः योगः अस्ति। 'यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयोऽन्नं न तदवति (शतपथ)' इति श्रुतेः। तस्मात् योगी न आत्मसंमितात् अन्नात् अधिकं न्यूनं वा अश्नीयात्। अथवा, योगिनः योगशास्त्रे परिपठितात् अन्नपरिमाणात् अतिमात्रमश्नतः योगो नास्ति। उक्तं हि -- -'अर्धमशनस्य सव्यञ्जनान्नस्य तृतीयमुदकस्य च। वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादिपरिमाणम्। तथा -- न च अतिस्वप्नशीलस्य योगो भवति नैव च अतिमात्रं जाग्रतो भवति च अर्जुन।।

कथं पुनः योगो भवति इत्युच्यते --
।।6.17।। --
युक्ताहारविहारस्य आह्रियते इति आहारः अन्नम्, विहरणं विहारः पादक्रमः, तौ युक्तौ नियतपरिमाणौ यस्य सः युक्ताहारविहारः तस्य, तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तस्य, तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्च अवबोधश्च तौ नियतकालौ यस्य तस्य, युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो
योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृत् योगः भवतीत्यर्थः।।

अथ अधुना कदा युक्तो भवति इत्युच्यते --
।।6.18।। --
यदा विनियतं चित्तं विशेषेण नियतं संयतम् एकाग्रतामापन्नं चित्तं हित्वा बाह्यार्थचिन्ताम् आत्मन्येव केवले अवतिष्ठते, स्वात्मनि स्थितिं लभते इत्यर्थः। निःस्पृहः सर्वकामेभ्यः निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः सः युक्तः समाहितः इत्युच्यते तदा तस्मिन्काले।।

तस्य योगिनः समाहितं यत् चित्तं तस्योपमा उच्यते --
।।6.19।। --

यथा दीपः प्रदीपः निवातस्थः निवाते वातवर्जिते देशे स्थितः न इङ्गते न चलति, सा उपमा उपमीयते अनया इत्युपमा योगज्ञैः चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगम् अनुतिष्ठतः आत्मनः समाधिमनुतिष्ठत इत्यर्थः।।

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत् --
।।6.20।। -- -
यत्र यस्मिन् काले उपरमते चित्तम् उपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया योगानुष्ठानेन, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेन अन्तःकरणेन आत्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन् उपलभमानः स्वे एव आत्मनि तुष्यति तुष्टिं भजते।।

किञ्च --
।।6.21।। --
सुखम् आत्यन्तिकं अत्यन्तमेव भवति इत्यात्यन्तिकम् अनन्तमित्यर्थः, यत् तत् बुद्धिग्राह्यं बुद्ध्यैव इन्द्रियनिरपेक्षया गृह्यते इति बुद्धिग्राह्यम् अतीन्द्रियम् इन्द्रियगोचरातीतम् अविषयजनितमित्यर्थः, वेत्ति तत् ईदृशं सुखमनुभवति यत्र यस्मिन् काले, न च एव अयं विद्वान् आत्मस्वरूपे स्थितः तस्मात् नैव चलति तत्त्वतः तत्त्वस्वरूपात् न प्रच्यवते इत्यर्थः।।

किञ्च --
।।6.22।। --
यं लब्ध्वाम् यम् आत्मलाभं लब्ध्वा प्राप्य च अपरम् अन्यत् लाभं लाभान्तरं ततः अधिकम् अस्तीति न मन्यते न चिन्तयति। किञ्च, यस्मिन् आत्मतत्त्वे स्थितः दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महता अपि न विचाल्यते।।

'यत्रोपरमते (गीता 6।20)' इत्याद्यारभ्य यावद्भिः विशेषणैः विशिष्ट आत्मावस्थाविशेषः योग उक्तः --
।।6.23।। --
तं विद्यात् विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगः दुःखसंयोगः, तेन वियोगः दुःखसंयोगवियोगः, तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्यात् विजानीयादित्यर्थः। योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यता उच्यते निश्चयानिर्वेदयोः योगसाधनत्वविधानार्थम्। स यथोक्तफलो योगः निश्चयेन अध्यवसायेन योक्तव्यः अनिर्विण्णचेतसा न निर्विण्णम् अनिर्विण्णम्। किं तत्? चेतः तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः।।

किञ्च --
।।6.24।। --
संकल्पप्रभवान् संकल्पः प्रभवः येषां कामानां ते संकल्पप्रभवाः कामाः तान् त्यक्त्वा परित्यज्य सर्वान् अशेषतः निर्लेपेन। किञ्च, मनसैव विवेकयुक्तेन इन्द्रियग्रामम् इन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात्।।

।।6.25।। --
शनैः शनैः न सहसा उपरमेत् उपरतिं कुर्यात्। कया? बुद्ध्या। किंविशिष्टया? धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तया इत्यर्थः। आत्मसंस्थम् आत्मनि संस्थितम् 'आत्मैव सर्वं न ततोऽन्यत् किञ्चिदस्ति' इत्येवमात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्। एष योगस्य परमो विधिः।।

तत्र वमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी --
।।6.26।। -- -
यतो यतः यस्माद्यस्मात् निमित्तात् शब्दादेः निश्चरति निर्गच्छति स्वभावदोषात् मनः चञ्चलम् अत्यर्थं चलम्, अत एव अस्थिरम्, ततस्ततः तस्मात्तस्मात् शब्दादेः निमित्तात् नियम्य तत्तन्निमित्तं
याथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतत् मनः आत्मन्येव वशं नयेत्
आत्मवश्यतामापादयेत्। एवं योगाभ्यासबलात् योगिनः आत्मन्येव प्रशाम्यति मनः।।

।।6.27।। --
प्रशान्तमनसं प्रकर्षेण शान्तं मनः यस्य सः प्रशान्तमनाः तं प्रशान्तमनसं हि नं योगिनं सुखम्
उत्तमं निरतिशयम् उपैति उपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः, ब्रह्मभूतं
जीवन्मुक्तम्' ब्रह्मैव सर्वम्' इत्येवं निश्चयवन्तं ब्रह्मभूतम् अकल्मषं धर्माधर्मादिवर्जितम्।।

।।6.28।। --
युञ्जन् एवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदा आत्मानं विगतकल्मषः विगतपापः, सुखेन अनायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तत् ब्रह्मसंस्पर्शं सुखम् अत्यन्तम् अन्तमतीत्य वर्तत इत्यत्यन्तम् उत्कृष्टं निरतिशयम् अश्नुते व्याप्नोति।।

इदानीं योगस्य यत् फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत् प्रदर्श्यते -- -
।।6.29।। --
सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वम् आत्मानं सर्वभूतानि च आत्मनि ब्रह्मादीनि स्तम्बपर्यन्तानि
च सर्वभूतानि आत्मनि एकतां गतानि ईक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु
ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः।।

एतस्य आत्मैकत्वदर्शनस्य फलम् उच्यते --
।।6.30।। --
यो मां पश्यति वासुदेवं सर्वस्य आत्मानं सर्वत्र सर्वेषु भूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति, तस्य एएएवं आत्मैकत्वदर्शिनः अहम् ईश्वरो न प्रणश्यामि न परोक्षतां
गमिष्यामि। स च मे न प्रणश्यति स च विद्वान् मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति,

तस्य च मम च एकात्मकत्वात्; स्वात्मा हि नाम आत्मनः प्रिय एव भवति, यस्माच्च अहमेव सर्वात्मैकत्वदर्शी।।

इत्येतत् पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षः अभिधीयते -- -
।।6.31।। -- -
सर्वथा सर्वप्रकारैः वर्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्तते, नित्यमुक्त एव सः, न मोक्षं प्रति केनचित् प्रतिबध्यते इत्यर्थः।।

किञ्च अन्यत् --
।।6.32।। --
आत्मौपम्येन आत्मा स्वयमेव उपमीयते अनया इत्युपमा तस्या उपमाया भावः औपम्यं तेन आत्मौपम्येन, सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति यः अर्जुन, स च किं समं पश्यति इत्युच्यते -- यथा मम सुखम् इष्टं तथा सर्वप्राणिनां सुखम् अनुकूलम्। वाशब्दः चार्थे। यदि वा यच्च दुःखं मम प्रतिकूलम् अनिष्टं यथा तथा सर्वप्राणिनां दुःखम् अनिष्टं प्रतिकूलं इत्येवम् आत्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति, न कस्यचित् प्रतिकूलमाचरति, अहिंसक इत्यर्थः। यः एवमहिंसकः सम्यग्दर्शननिष्ठः स योगी परमः उत्कृष्टः मतः अभिप्रेतः सर्वयोगिनां मध्ये।।

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःखसंपाद्यतामालक्ष्य शुश्रूषुः ध्रुवं तत्प्राप्त्युपायम् -
अर्जुन उवाच --
।।6.33।। --
यः अयं योगः त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन तस्य योगस्य अहं न पश्यामि नोपलभे, चञ्चलत्वात् मनसः। किम्? स्थिराम् अचलां स्थितिम्।।

प्रसिद्धमेतत् --
।।6.34।। --
चञ्चलं हि मनः कृष्ण इति कृष्यतेः विलेखनार्थस्य रूपम्। भक्तजनपापादिदोषाकर्षणात् कृष्णः, तस्य संबुद्धिः हे कृष्ण। हि यस्मात् मनः चञ्चलं न केवलमत्यर्थं चञ्चलम्, प्रमाथि च प्रमथनशीलम्, प्रमथ्नाति शरीरम् इन्द्रियाणि च विक्षिपत् सत् परवशीकरोति। किञ्च – बलवत् प्रबलम्, न केनचित् नियन्तुं शक्यम्, दुर्निवारत्वात्। किञ्च -- दृढं तन्तुनागवत् अच्छेद्यम्। तस्य एवंभूतस्य मनसः अहं निग्रहं निरोधं मन्ये वायोरिव यथा वायोः दुष्करो निग्रहः ततोऽपि दुष्करं मन्ये इत्यभिप्रायः।।

एवम् एतत् यथा ब्रवीषि --
श्रीभगवानुवाच --
।।6.35।। --

असंशयं नास्ति संशयः मनो दुर्निग्रहं चलम् इत्यत्र हे महाबाहो। किंतु अभ्यासेन तु अभ्यासो नाम चित्तभूमौ कस्यांचित् समानप्रत्ययावृत्तिः चित्तस्य। वैराग्येण वैराग्यं नाम दृष्टादृष्टेष्टभोगेषु
दोषदर्शनाभ्यासात् वैतृष्ण्यम्। तेन च वैराग्येण गृह्यते विक्षेपरूपः प्रचारः चित्तस्य। एवं तत् मनः
गृह्यते निगृह्यते निरुध्यते इत्यर्थः।।

यः पुनः असंयतात्मा, तेन --
।।6.36।। --
असंयतात्मना अभ्यासवैराग्याभ्यामसंयतः आत्मा अन्तःकरणं यस्य सोऽयम् असंयतात्मा तेन
असंयतात्मना योगो दुष्प्रापः दुःखेन प्राप्यत इति मे मतिः। यस्तु पुनः वश्यात्मा
अभ्यासवैराग्याभ्यां वश्यत्वमापादितः आत्मा मनः यस्य सोऽयं वश्यात्मा तेन वश्यात्मना तु
यतता भूयोऽपि प्रयत्नं कुर्वता शक्यः अवाप्तुं योगः उपायतः यथोक्तादुपायात्।।

तत्र योगाभ्यासाङ्गीकरणेन इहलोकपरलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि,
योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति, योगी योगमार्गात् मरणकाले
चलितचित्तः इति तस्य नाशमाशङ्क्य अर्जुन उवाच --
।।6.37।। --
अयतिः अप्रयत्नवान् योगमार्गे श्रद्धया आस्तिक्यबुद्ध्या च उपेतः योगात् अन्तकाले च चलितं मानसं मनो यस्य सः
चलितमानसः भ्रष्टस्मृतिः सः अप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण गच्छति।।

।।6.38।। --
कच्चित् किं न उभयविभ्रष्टः कर्ममार्गात् योगमार्गाच्च विभ्रष्टः सन् छिन्नाभ्रमिव नश्यति, किं
वा न नश्यति अप्रतिष्ठो निराश्रयः हे महाबाहो विमूढः सन् ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे।।

।।6.39।। --
एतत् मे मम संशयं कृष्ण छेत्तुम् अपनेतुम् अर्हसि अशेषतः। त्वदन्यः त्वत्तः अन्यः ऋषिः देवो वा च्छेत्ता नाशयिता
संशयस्य अस्य न हि यस्मात् उपपद्यते न संभवति। अतः त्वमेव
छेत्तुमर्हसि इत्यर्थः।।

श्रीभगवानुवाच --
।।6.40।। --
हे पार्थ नैव इह लोके नामुत्र परस्मिन् वा लोके विनाशः तस्य विद्यते नास्ति। नाशो नाम
पूर्वस्मात् हीनजन्मप्राप्तिः स योगभ्रष्टस्य नास्ति। न हि यस्मात् कल्याणकृत् शुभकृत् कश्चित् दुर्गतिं कुत्सितां गतिं हे तात,
तनोति आत्मानं पुत्ररूपेणेति पिता तात उच्यते। पितैव पुत्र इति पुत्रोऽपि तात उच्यते। शिष्योऽपि पुत्र उच्यते। यतो न
गच्छति।।

किं तु अस्य भवति? --
।।6.41।। --
योगमार्गे प्रवृत्तः संन्यासी सामर्थ्यात् प्राप्य गत्वा पुण्यकृताम् अश्वमेधादियाजिनां लोकान्, तत्र च उषित्वा वासमनुभूय शाश्वतीः नित्याः समाः संवत्सरान्, तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टः अभिजायते।।

।।6.42।। --
अथवा श्रीमतां कुलात् अन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमताम्। एतत् हि जन्म, यत् दरिद्राणां योगिनां कुले, दुर्लभतरं दुःखलभ्यतरं पूर्वमपेक्ष्य लोके जन्म यत् ईदृशं यथोक्तविशेषणे कुले।।

यस्मात् --
।।6.43।। --
तत्र योगिनां कुले तं बुद्धिसंयोगं बुध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन् देहे भवं पौर्वदेहिकम्। यतते च प्रयत्नं च करोति ततः तस्मात् पूर्वकृतात् संस्कारात् भूयः बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन।।

कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते --
।।6.44।। --
यः पूर्वजन्मनि कृतः अभ्यासः सः पूर्वाभ्यासः, तेनैव बलवता ह्रियते संसिद्धौ हि यस्मात् अवशोऽपि सः योगभ्रष्टः; न कृतं चेत् योगाभ्यासजात् संस्कारात् बलवत्तरमधर्मादिलक्षणं कर्म, तदा योगाभ्यासजनितेन संस्कारेण ह्रियते; अधर्मश्चेत् बलवत्तरः कृतः, तेन योगजोऽपि संस्कारः अभिभूयत एव, तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते, न दीर्घकालस्थस्यापि विनाशः तस्य अस्ति इत्यर्थः। अतः जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन् अपि योगमार्गे प्रवृत्तः संन्यासी योगभ्रष्टः, सामर्थ्यात् सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलम् अतिवर्तते अतिक्रामति अपाकरिष्यति; किमुत बुद्धा यः योगं तन्निष्ठः अभ्यासं कुर्यात्।।

कुतश्च योगित्वं श्रेयः इति --
।।6.45।। --
प्रयत्नात् यतमानः, अधिकं यतमान इत्यर्थः। तत्र योगी विद्वान् संशुद्धकिल्बिषः विशुद्धकिल्बिषः संशुद्धपापः अनेकजन्मसंसिद्धः अनेकेषु जन्मसु किञ्चित्किञ्चित् संस्कारजातम् उपचित्य तेन उपचितेन अनेकजन्मकृतेन संसिद्धः अनेकजन्मसंसिद्धः ततः लब्धसम्यग्दर्शनः सन् याति परां प्रकृष्टां गतिम्।।

यस्मादेवं तस्मात् --
।।6.46।। --

तपस्विभ्यः अधिकः योगी, ज्ञानिभ्योऽपि ज्ञानमत्र शास्त्रार्थपाण्डित्यम्, तद्वद्भ्योऽपि मतः ज्ञातः अधिकः श्रेष्ठः इति। कर्मिभ्यः, अग्निहोत्रादि कर्म, तद्वद्भ्यः अधिकः योगी विशिष्टः यस्मात् तस्मात् योगी भव अर्जुन।।

।।6.47।। --
योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहितेन अन्तरात्मना अन्तःकरणेन श्रद्धावान् श्रद्दधानः सन् भजते सेवते यो माम्, स मे मम युक्ततमः अतिशयेन युक्तः मतः अभिप्रेतः इति।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादि
शाष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
षष्ठोऽध्यायः।।

## सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
## साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥६.९॥

suhṛnmitrāryudāsīnamadhyasthadveṣyabandhuṣu |
sādhuṣvapi ca pāpeṣu samabuddhirviśiṣyate ||6.9||

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु** 7/3 ।
**साधुषु** 7/3 **अपि** 0 **च** 0 **पापेषु** 7/3 **समबुद्धिः** 1/1 **विशिष्यते** III/1 ॥६.९॥

- सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु [suhṛnmitrāryudāsīnamadhyasthadveṣyabandhuṣu] = with reference to a benefactor, a friend, an enemy, an acquaintance, an arbitrator, someone who is deserving of dislike, and to a relative = सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धु (m.) + विषये to समबुद्धिः 7/3
    - सुहृद् च मित्रं च अरिः च उदासीनः च मध्यस्थः च द्वेष्यः च बन्धुः च सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धवः (ID), तेषु ।

- साधुषु [sādhuṣu] = towards good people = साधु (m.) + विषये to समबुद्धिः 7/3
- अपि [api] = as = अव्ययम्
- च [ca] = as = अव्ययम्
- पापेषु [pāpeṣu] = towards those who are given to improper actions = पाप (m.) + विषये to समबुद्धिः 7/3
- समबुद्धिः [samabuddhiḥ] = who remains unchanged = समबुद्धि (m.) + कर्तरि to विशिष्यते 1/1
    - समा बुद्धिः यस्य सः समबुद्धिः (116B) ।
- विशिष्यते [viśiṣyate] = is most exalted = वि + शिष् (7P) to surpass, excel + लट्/कर्मणि/III/1

The one whose vision is the same with reference to a benefactor, a friend, an enemy, an acquaintance, an arbitrator, someone who is deserving of dislike, and to a relative, and even towards good people and those who are given to improper actions, he (or she) is the most exalted.

Sentence 1:

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु 7/3 साधुषु 7/3 पापेषु 7/3 अपि 0 च 0 समबुद्धिः 1/1 विशिष्यते III/1 ॥६.९॥
The one whose vision is the same (समबुद्धिः 1/1) with reference to a benefactor, a friend, an enemy, an acquaintance, an arbitrator, someone who is deserving of dislike, and to a relative (सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु 7/3), and (च 0) even (अपि 0) towards good people (साधुषु 7/3) and those who are given to improper actions (पापेषु 7/3), he (or she) is the most exalted (विशिष्यते III/1).

किञ्च --
।।6.9।। --
'सुहृत्' इत्यादिश्लोकार्धम् एकं पदम्। सुहृत् इति प्रत्युपकारमनपेक्ष्य उपकर्ता, मित्रं स्नेहवान्, अरिः शत्रुः, उदासीनः न कस्यचित् पक्षं भजते, मध्यस्थः यो विरुद्धयोः उभयोः हितैषी, द्वेष्यः

आत्मनः अप्रियः, बन्धुः संबन्धी इत्येतेषु साधुषु शास्त्रानुवर्तिषु अपि च पापेषु प्रतिषिद्धकारिषु सर्वेषु एतेषु समबुद्धिः 'कः किंकर्मा' इत्यव्यापृतबुद्धिरित्यर्थः। विशिष्यते, 'विमुच्यते' इति वा पाठान्तरम्। योगारूढानां सर्वेषाम् अयम् उत्तम इत्यर्थः।।

अत एवमुत्तमफलप्राप्तये --
।।6.10।। --
योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदा आत्मानम् अन्तःकरणं रहसि कान्ते गिरिगुहादौ स्थितः सन् काकी असहायः। 'रहसि स्थितः काकी च' इति विशेषणात् संन्यासं कृत्वा इत्यर्थः। यतचित्तात्मा चित्तम् अन्तःकरणम् आत्मा देहश्च संयतौ यस्य सः यतचित्तात्मा, निराशीः वीततृष्णः अपरिग्रहः परिग्रहरहितश्चेत्यर्थः। संन्यासित्वेऽपि त्यक्तसर्वपरिग्रहः सन् युञ्जीत इत्यर्थः।।

अथेदानीं योगं युञ्जतः आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः, प्राप्तयोगस्य लक्षणं तत्फलादि च, इत्यत आरभ्यते। तत्र आसनमेव तावत् प्रथममुच्यते --
।।6.11।। --
शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा, देशे स्थाने प्रतिष्ठाप्य स्थिरम् अचलम् आत्मनः आसनं नात्युच्छ्रितं नातीव उच्छ्रितं न अपि अतिनीचम्, तच्च चैलाजिनकुशोत्तरं चैलम् अजिनं कुशाश्च उत्तरे यस्मिन् आसने तत् आसनं चैलाजिनकुशोत्तरम्। पाठक्रमाद्विपरीतः अत्र क्रमः चैलादीनाम्।।

प्रतिष्ठाप्य, किम्? --
।।6.12।। --
तत्र तस्मिन् आसने उपविश्य योगं युञ्ज्यात्। कथम्? सर्वविषयेभ्यः उपसंहृत्य एकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता यस्य सः यतचित्तेन्द्रियक्रियः। स किमर्थं योगं युञ्ज्यात् इत्याह -- आत्मविशुद्धये अन्तःकरणस्य विशुद्ध्यर्थमित्येतत्।।

बाह्यमासनमुक्तम्; अधुना शरीरधारणं कथम् इत्युच्यते --
।।6.13।। --
समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन् अचलं च। समं धारयतः चलनं संभवति; अतः विशिनष्टि -- अचलमिति। स्थिरः स्थिरो भूत्वा इत्यर्थः। स्वं नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वेव इति। इवशब्दो लुप्तो द्रष्टव्यः। न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितम्। किं तर्हि? चक्षुषो दृष्टिसंनिपातः। स च
अन्तःकरणसमाधानापेक्षो विवक्षितः। स्वनासिकाग्रसंप्रेक्षणमेव चेत् विवक्षितम्, मनः तत्रैव समाधीयेत, नात्मनि। आत्मनि हि मनसः समाधानं वक्ष्यति 'आत्मसंस्थं मनः कृत्वा (गीता

6।25)' इति। तस्मात् इवशब्दलोपेन अक्ष्णोः दृष्टिसंनिपात एव 'संप्रेक्ष्य' इत्युच्यते। दिशश्च
अनवलोकयन् दिशां च अवलोकनमन्तराकुर्वन् इत्येतत्।।
किञ्च –

।।6.14।। --
प्रशान्तात्मा प्रकर्षेण शान्तः आत्मा अन्तःकरणं यस्य सोऽयं प्रशान्तात्मा, विगतभीः विगतभयः,
ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचर्यं गुरुशुश्रूषाभिक्षान्नभुक्त्यादि तस्मिन् स्थितः,
तदनुष्ठाता भवेदित्यर्थः। किञ्च, मनः संयम्य मनसः वृत्तीः उपसंहृत्य इत्येतत्, मच्चित्तः मयि
परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः, युक्तः समाहितः सन् आसीत उपविशेत्। मत्परः अहं परो यस्य सोऽयं मत्परो भवति।
कश्चित् रागी स्त्रीचित्तः, न तु स्त्रियमेव परत्वेन गृह्णाति; किं तर्हि? राजानं महादेवं वा। अयं तु मच्चित्तो मत्परश्च।।

अथेदानीं योगफलमुच्यते --
।।6.15।। --
युञ्जन् समाधानं कुर्वन् एवं यथोक्तेन विधानेन सदा आत्मानं सर्वदा योगी नियतमानसः नियतं
संयतं मानसं मनो यस्य सोऽयं नियतमानसः, शान्तिम् उपरतिं निर्वाणपरमां निर्वाणं मोक्षः तत्
परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमाम्. मत्संस्थां मदधीनाम्
अधिगच्छति प्राप्नोति।।

इदानीं योगिनः आहारादिनियम उच्यते -- -
।।6.16।। --
न अत्यश्नतः आत्मसंमितमन्नपरिमाणमतीत्याश्नतः अत्यश्नतः न योगः अस्ति। न च एकान्तम्
अनश्नतः योगः अस्ति। 'यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति
तद्यत् कनीयोऽन्नं न तदवति (शतपथ)' इति श्रुतेः। तस्मात् योगी न आत्मसंमितात् अन्नात्
अधिकं न्यूनं वा अश्नीयात्। अथवा, योगिनः योगशास्त्रे परिपठितात् अन्नपरिमाणात्
अतिमात्रमश्नतः योगो नास्ति। उक्तं हि -- -'अर्धमशनस्य सव्यञ्जनान्नस्य तृतीयमुदकस्य च।
वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादिपरिमाणम्। तथा -- न च अतिस्वप्नशीलस्य योगो भवति नैव च अतिमात्रं
जाग्रतो भवति च अर्जुन।।

कथं पुनः योगो भवति इत्युच्यते --
।।6.17।। --
युक्ताहारविहारस्य आह्रियते इति आहारः अन्नम्, विहरणं विहारः पादक्रमः, तौ युक्तौ
नियतपरिमाणौ यस्य सः युक्ताहारविहारः तस्य, तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु तस्य, तथा
युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्च अवबोधश्च तौ नियतकालौ यस्य तस्य, युक्त्ताहारविहारस्य युक्त्तचेष्टस्य कर्मसु
युक्त्तस्वप्नावबोधस्य योगिनो

योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृत् योगः भवतीत्यर्थः।।

अथ अधुना कदा युक्तो भवति इत्युच्यते --
।।6.18।। --
यदा विनियतं चित्तं विशेषेण नियतं संयतम् एकाग्रतामापन्नं चित्तं हित्वा बाह्यार्थचिन्ताम् आत्मन्येव केवले अवतिष्ठते, स्वात्मनि स्थितिं लभते इत्यर्थः। निःस्पृहः सर्वकामेभ्यः निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः सः युक्तः समाहितः इत्युच्यते तदा तस्मिन्काले।।

तस्य योगिनः समाहितं यत् चित्तं तस्योपमा उच्यते --
।।6.19।। --
यथा दीपः प्रदीपः निवातस्थः निवाते वातवर्जिते देशे स्थितः न इङ्गते न चलति, सा उपमा उपमीयते अनया इत्युपमा योगज्ञैः चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगम् अनुतिष्ठतः आत्मनः समाधिमनुतिष्ठत इत्यर्थः।।

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत् --
।।6.20।। -- -
यत्र यस्मिन् काले उपरमते चित्तम् उपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया योगानुष्ठानेन, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेन अन्तःकरणेन आत्मानं परं चैतन्यं ज्योतिःस्वरूपं पश्यन् उपलभमानः स्वे एव आत्मनि तुष्यति तुष्टिं भजते।।

किञ्च --
।।6.21।। --
सुखम् आत्यन्तिकं अत्यन्तमेव भवति इत्यात्यन्तिकम् अनन्तमित्यर्थः, यत् तत् बुद्धिग्राह्यं बुद्ध्यैव इन्द्रियनिरपेक्षया गृह्यते इति बुद्धिग्राह्यम् अतीन्द्रियम् इन्द्रियगोचरातीतम् अविषयजनितमित्यर्थः, वेत्ति तत् ईदृशं सुखमनुभवति यत्र यस्मिन् काले, न च एव अयं विद्वान् आत्मस्वरूपे स्थितः तस्मात् नैव चलति तत्त्वतः तत्त्वस्वरूपात् न प्रच्यवते इत्यर्थः।।

किञ्च --
।।6.22।। --
यं लब्ध्वाम् यम् आत्मलाभं लब्ध्वा प्राप्य च अपरम् अन्यत् लाभं लाभान्तरं ततः अधिकम् अस्तीति न मन्यते न चिन्तयति। किञ्च, यस्मिन् आत्मतत्त्वे स्थितः दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महता अपि न विचाल्यते।।

'यत्रोपरमते (गीता 6।20)' इत्याद्यारभ्य यावद्भिः विशेषणैः विशिष्ट आत्मावस्थाविशेषः योग उक्तः --

।।6.23।। --
तं विद्यात् विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगः दुःखसंयोगः, तेन वियोगः दुःखसंयोगवियोगः, तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्यात् विजानीयादित्यर्थः। योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यता उच्यते निश्चयानिर्वेदयोः योगसाधनत्वविधानार्थम्। स यथोक्तफलो योगः निश्चयेन अध्यवसायेन योक्तव्यः अनिर्विण्णचेतसा न निर्विण्णम् अनिर्विण्णम्। किं तत्? चेतः तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः।।

किञ्च --
।।6.24।। --
संकल्पप्रभवान् संकल्पः प्रभवः येषां कामानां ते संकल्पप्रभवाः कामाः तान् त्यक्त्वा परित्यज्य सर्वान् अशेषतः निर्लेपेन। किञ्च, मनसैव विवेकयुक्तेन इन्द्रियग्रामम् इन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात्।।

।।6.25।। --
शनैः शनैः न सहसा उपरमेत् उपरतिं कुर्यात्। कया? बुद्ध्या। किंविशिष्टया? धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्येण युक्तया इत्यर्थः। आत्मसंस्थम् आत्मनि संस्थितम् 'आत्मैव सर्वं न ततोऽन्यत् किञ्चिदस्ति' इत्येवमात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्। एष योगस्य परमो विधिः।।

तत्र वमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी --
।।6.26।। -- -
यतो यतः यस्माद्यस्मात् निमित्तात् शब्दादेः निश्चरति निर्गच्छति स्वभावदोषात् मनः चञ्चलम् अत्यर्थं चलम्, अत एव अस्थिरम्, ततस्ततः तस्मात्तस्मात् शब्दादेः निमित्तात् नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेन आभासीकृत्य वैराग्यभावनया च एतत् मनः आत्मन्येव वशं नयेत् आत्मवश्यतामापादयेत्। एवं योगाभ्यासबलात् योगिनः आत्मन्येव प्रशाम्यति मनः।।

।।6.27।। --
प्रशान्तमनसं प्रकर्षेण शान्तं मनः यस्य सः प्रशान्तमनाः तं प्रशान्तमनसं हि नं योगिनं सुखम् उत्तमं निरतिशयम् उपैति उपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः, ब्रह्मभूतं जीवन्मुक्तम्' ब्रह्मैव सर्वम्' इत्येवं निश्चयवन्तं ब्रह्मभूतम् अकल्मषं धर्माधर्मादिवर्जितम्।।

।।6.28।। --
युञ्जन् एवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदा सर्वदा आत्मानं विगतकल्मषः विगतपापः, सुखेन अनायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तत् ब्रह्मसंस्पर्शं सुखम् अत्यन्तम् अन्तमतीत्य वर्तत इत्यत्यन्तम् उत्कृष्टं निरतिशयम् अश्नुते व्याप्नोति।।

